2-B1

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[ ४ ]

म० म० मथुरानाथतर्कवागीशप्रणीतं

# किरणावलीरहस्यम्

सम्पादकः

श्रीगौरीनाथशास्त्री

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

MM ŚIVAKUMĀRAŚĀSTRĪ-GRANTHAMĀLĀ

[ Vol. 4 ]

# KIRAṆĀVALĪ-RAHASYAM

OF

**MM MATHURĀNĀTHA TARKAVĀGĪŚA**

Edited by

**GAURĪNĀTHA ŚĀSTRĪ**

Vice-Chancellor

**Sampurnanand Sanskrit Vishvavidyalaya**

**Varanasi**




Research Publication Supervisor

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ

'VĀGĪŚA ŚĀSTRĪ

Director, Research Institute,

**Sampurnanand Sanskrit Vishvavidyalaya**

**Varanasi**

**1981**

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[ ४ ]

म० म० मथुरानाथतर्कवागीशप्रणीतं

# किरणावलीरहस्यम्

सम्पादकः

**श्रीगौरीनाथशास्त्री**

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



अनुसन्धानप्रकाशनपर्यवेक्षकः,

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

**वाराणस्याम्**

२०३८ तमे वैक्रमाब्दे    १९०३ तमे शकाब्दे    १९८१ तमे खैस्ताब्दे

# प्रास्ताविकम्

षट्सु दर्शनेषु न्यायवैशेषिकदर्शनयोरनतिसाधारणो महिमा। 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इति मनूक्त्या धर्मावगमाय तर्कपूर्वकमनुसन्धानमपेक्ष्यते। अन्त्यविशेषपदार्थसम्बद्धस्य औलूक्यकाणादापरपर्यायस्य वैशेषिकदर्शनस्योपक्रमः समजनि धर्मव्याख्यानप्रतिज्ञया। द्वितीयेन सूत्रेण खल्ववसरप्राप्तं धर्मलक्षणं व्याहृतम्। तृतीयेन सूत्रेण धर्मकारणीभूतयागादिप्रतिपादकस्य वेदस्य प्रामाण्यमाख्यातम्। द्रव्यादिषट्पदार्थानां साधर्म्यवैधर्म्यसहितेनैव तत्त्वज्ञानेन समासाद्यते निःश्रेयसमिति तुरीयेण सूत्रेण समुपपादितम्–"धर्मविशेषप्रसूतात्....." इति। एवं सत्यपि, वैशेषिकेऽस्मिन् दर्शने यो धर्मो व्याख्यानाय प्रतिज्ञातः, स खलु पूर्वमीमांसाप्रतिज्ञासूत्रोक्तधर्माद् विलक्षणो वेदितव्यः। यद्यपि "धर्मं व्याख्यातुकामस्य षट्पदार्थोपवर्णनम्" इत्युक्त्याऽऽस्तिकनास्तिकदार्शनिकैर्दर्शनमिदं पर्यालोचितम्; तथापि विप्रलपद्भिः सर्वैरेव पदार्थधर्मसंग्रहकारो महर्षिकल्पः प्रशस्तपाद एव वैशेषिकदर्शनस्यास्य मूर्द्धन्यव्याख्याकारतया समाम्नातः। पर्यन्ते स्वगुणगणगरिम्णा संग्रह एष भाष्यपदवीमपि प्रतिपन्नः। भाष्यलक्षणलक्षितत्वाभावेऽपि न कस्माच्चिदपि भाष्याद् गुणनैयून्यमिह लक्ष्यते।

इदम्प्रथमतया प्रशस्तपादभाष्यपदपदार्थविस्फोरणार्थं प्रवृत्तासु 'व्योमवती', 'न्यायकन्दली', 'किरणावली' इति व्याख्यासु भृशं सभाजिता सुधीवरैः श्रीमदुदयनाचार्यविभाविता पूर्णतामनुपागतापि भास्वरा किरणावली। इह टीकोपटीकाततिपरम्पराऽपि सिध्यति रुचिशातनकारिका किरणावल्याः। यद्यपि श्रीधरभट्टकृताया न्यायकन्दल्या अपि सन्ति भूयिष्ठानि व्याख्यानानि; तथापि न तादृशीं प्रसिद्धिं शेकुरुपगन्तुं तानीति प्रभवामो वक्तुं ध्रुवम्।

किरणावल्याः प्रथमो व्याख्याकारो नव्यन्यायजनकस्य महामहोपाध्यायस्य मैथिलस्य गङ्गेशोपाध्यायस्य (१२०० ख्री०) सूनुर्वर्धमानोपाध्यायः (१२५० ख्री०) किरणावलीप्रकाशं गुणनिरूपणान्तं व्यातेने। अस्याष्टीकाटीकायाष्टीका खलु परमवैष्णवस्य वासुदेवसार्वभौमस्य (१५०० ख्री०) शिष्येण रघुनाथशिरोमणिना (१६०० ख्री०) किरणावलीप्रकाशदीधित्याख्या व्यरचि गुणनिरूपणान्ता। किरणावलीप्रकाशस्य किरणावलीप्रकाशदीधितेश्च बह्व्यष्टीकाः प्रथन्ते–किरणावलीप्रकाशमकरन्दः (१२७५ ख्री० रुचिदत्तमिश्रकल्पितः), किरणावलीप्रकाशजलदः (१३०० ख्री० भगीरथ

(मेघ)- ठक्कुरकृतः) (किरणावलीप्रकाशप्रकाशिका इति किरणावलीप्रकाशविषयाशय-प्रकाश इति किरणावलीप्रकाशविवृतिरित्यपि च नामान्तरत्रयं विलोक्यते), किरणावली-प्रकाशदीधितिगूढार्थप्रकाशिका, किरणावलीप्रकाशदीधितिगूढार्थविवृतिः (१७०० ख्री० जयरामकृता), किरणावलीप्रकाशदीधितिटीका (रुद्रभट्टाचार्यविभाविता), किरणावली-प्रकाशदीधितिभावप्रकाशिकेत्यनर्थान्तम्, किरणावलीप्रकाशदीधितिटीका (१६२५ ख्री० रामकृष्णभट्टाचार्यप्रणीता), किरणावलीप्रकाशदीधितिव्याख्या (भवानन्द-विरचिता) चेति ।

वर्धमानोपाध्यायोत्तरं किरणावल्या अन्यासु व्याख्यासु—द्रव्यकिरणावलीशब्द-विवेचनम् (चन्द्रशेखरभारतीकृतम्), किरणावलीभास्करः (१५७८ ख्री० पद्मनाभमिश्र-रचितः), किरणावलीरहस्यम् (१६२५ ख्री० मथुरानाथतर्कवागीशप्रणीतम्) चेति तिस्रो व्याख्याः प्रथन्ते । किरणावलीप्रकाशरहस्यम् (३२७४८,३२९५३), किरणावलीप्रकाश-दीधितिरहस्यम् (३३०८४,३३०८५) चेति ग्रन्थद्वयं किरणावलीप्रकाशस्य किरणावली-दीधितेश्च व्याख्यानरूपतया श्रीमथुरानाथतर्कवागीशेन प्रणीतं सरस्वतीभवनग्रन्थालये शोभते । प्रकृतं 'किरणावलीरहस्यम्' किरणावल्या एव व्याख्यानं न तु किरणावली-प्रकाशस्य किरणावलीदीधितेर्वा टीकारूपम् । इह किरणावलीरहस्ये प्रकाशव्याख्या तद्-व्याख्याकारश्चासकृत् पर्यालोचितौ । यथा–'इति वर्धमानोपाध्यायाः' (५), मानसत्व-व्याप्यजातिविशेषाविति वर्धमानोपाध्यायाः, तदसत् तादृशजात्योर्मानाभावात् (७ पृ०), प्रकाशानुयायिनस्तु....इत्याहुः (१३), प्रकाशानुयायिनस्तु इत्याहुः तदसत्, (३० पृ०), प्रकाशकृन्मतेऽपि (३१ पृ०), इति प्रकाशानुयायिव्याख्यानाभिप्रायेण....तथापि शब्दत्वादौ व्यभिचारात् (३४ पृ०), इति प्रकाशः (३५; १०६), प्रकाशकारलिखनमात्रस्य (४२), प्रकाशकृदुक्तमपि परास्तम्, तथाप्यत्र व्यभिचारस्य दुर्वारत्वात् (६२), प्रकाश-कृतस्तु–ननु....(८०), प्रकाशकृतस्तु....इत्याहुः, तदप्यसत्....लक्षणान्तरस्य सम्भवादिति ध्येयम् (८१), प्रकाशकृतस्तु व्याचख्युः, तदसत्....सत्त्वाच्च (९०), प्रकाशकृतस्तु.... इत्याहुः (९१;९२;११५;१३६;१४१), प्रकाशकृतस्तु इत्याहुः, तदसत् (१०३), वर्धमानो-पाध्यायाः (११७)....इत्याहुः, तदसत् (११८), प्राचीनैर्निःसंसर्गाभावमात्रवाचितया निर्गुणत्वस्य गुणान्योन्याभावभिन्नाभाववत्त्वमिति वर्धमानोक्तमनादेयम्, आचार्य-विरुद्धत्वात् (९२) इति ।

वर्धमानोपाध्याय-रघुनाथशिरोमण्योरुत्तरं कोविदकुलावतंसस्य श्रीमथुरानाथ-तर्कवागीशस्य तावदप्रधृष्यं प्रसिध्यति वैदुष्यम् । जनकस्य रामतर्कवागीशस्य न्याय-

व्याकरणसाहित्यधुरन्धरत्वं विदन्त्येव विद्वत्तल्लजा ऐतिह्यविदश्च। मुग्धबोधस्य व्याख्याकारोऽयं तत्र स्वातन्त्र्येण परिवर्द्धनमपसारणं चान्वतिष्ठत्, उणादिपरिशिष्टं चाप्यरीरचत्। प्राकृतकामधेनुमाधारीकृत्य रामतर्कवागीशेन प्राकृतकल्पतरुर्विरचितः। नैष मार्कण्डेयवचनेषु सर्वथा विश्वसिति। चौरीसुरतपञ्चाशिकामप्येष व्याचख्यौ। एतस्य जनकः खलु नैयायिकः। श्रीमथुरानाथः किरणावलीरहस्ये स्वपितामहमसकृदुल्लिलेख—इत्यस्मत्पितामहचरणाः (४;६;६) इति। अस्य वैदुष्यं नातिरोहितं विदुषाम्। श्रीमथुरानाथेन किरणावलीरहस्ये स्वकृतसिद्धान्तरहस्यं चतुःकृत्वः समुद्धृतम्। यथा—क्त्वाप्रत्ययार्थविचारश्च अस्मत्कृतसिद्धान्तरहस्येऽनुसन्धेयः (७ पृ०), अनयोः सम्यक्त्वासम्यक्त्वविचारश्चास्मत्कृतसिद्धान्तरहस्येऽनुसन्धेयः (७ पृ०), अस्मत्कृतसिद्धान्तरहस्येऽनुसन्धेयम् (८४ पृ०), तत्त्वं पुनरस्मत्कृते सिद्धान्तरहस्येऽनुसन्धेयम् (१०४ पृ०) इति।

ग्रन्थकारीयमनूनकमैदम्पर्यं व्याख्याकारेण स्फोरणीयं भवतीति जानन्त्येव तत्त्वज्ञाः। तदानीं प्रचलितानि बहूनि मतानि पर्यालोचितानि श्रीमथुरानाथेन किरणावलीव्याख्याप्रसङ्गे प्राचीनपरम्परापर्यालोचनपरिपाटीदृशा। अत्र किरणावलीरहस्ये 'अन्ये तु....इत्याहुः' (४; ७९; ९२; १६२), 'केचित्तु (४)... इत्याहुः (५) तदसत्—जन्यत्वाच्च' (५) 'चक्रे सुबन्धुः सुजनैकबन्धुः' इत्यत्र चक्रे इति निपातः....इत्यपरे (५), अन्ये तु निवृत्तिपदं ध्वंसपरमेव (१५)....इत्याहुः....तदसत्, अननुमानात् (१६), प्राञ्चस्तु....इति अनुमानपरिच्छेदे मुक्तिवादे मणिकृतो महाशयाः....इत्याहुः, तदसत् गौरवात् (१६), इति केचित् (१६), केचित्तु इति व्याचख्युः (२०; २१; १०), कस्यचिन्मते तु (१७), अन्ये तु इति व्याचख्युः (२१), परे तु इत्याहुः २१), यत्तु (२४), इति कश्चिद् (३२), केचित्तु....इत्याहुः, तदसत् (३४), इति जरन्मतानुसारेणेदम् (३६)। केचित्तु तदेवास्येति श्रुतौ (४२) इति प्रामाणिकाः (४२), केचित्तु (५४), केचित्तु.... इत्याहुः तदसत् (५७, ६१), अन्ये तु....इति प्राहुः (६२) केचित्तु....इत्याहुः (७३); ७९; ७५; ७६; ७७; १०८; ११४; १२४; १४५; १५०; १५३; १५६), यत्तु तन्न (७७), अन्ये तु इति प्राहुः (८२), केचित्तु....इत्याहुः, तन्न (९५), यत्तु इति तदसत् (९५), इत्यपि केचित् (१०४), अत्र केचित्....इत्याहुः, तदसत् (११६), केचित्तु इति जलग्रन्थे (११७), केचित्तु इति व्याचख्युः, तदसत् (११९), इति केचिद् व्याचख्युः, तदसत् (१३६), अत्र केचित् (१६१), अपरे तु इत्याहुः, तदसत् (१६२) इति। एवं तावत् केचित्, अन्ये, अपरे, परे, कश्चिद्, यत्तु—इति सर्वनाम्नामाश्रयेण नामविशेषमनुक्त्वा मतानि प्रकाशितानि सन्ति।

अन्यत्र तु व्यक्तिनामोल्लेखपूर्वकं सम्प्रदायनामपुरस्सरं वा मतानि पर्यालोचितानि श्रीमता मथुरानाथेन। यथा—कन्दलीकारमते च स वाचकः (७), वैशेषिकसूत्रकृता (१४), माध्यमिका वदन्ति (१४), प्राञ्चस्तु....इति अनुमानपरिच्छेदे मुक्तिवादे मणिकृतो महाशयाः, इत्याहुः, तदसत्, गौरवात् (१६), नव्यास्तु....मणिकारलक्षणेऽपि (१६), इति सौगता वदन्ति (१७), चिन्तामणिकृतस्तु....इत्याहुः (१९), एकदण्डिमतमाह वेदान्तिनामिति (२१), प्रकाशज्ञास्तु....इति व्याचख्युः (२२), त्रिदण्डिमतानुयायिनस्तु (२२)....इत्याहुः (२३), तदसन् (२३), मुक्तिवादे मणिकृताऽप्येवम् (२३), बौद्धाधिकारदीधितावेवं रीत्यैव (२३), भट्टास्तु (२४)...इति प्राहुः (२५) प्रभाकरैरेकदेशिनस्तु....इत्याहुः, तदप्यसत् (२६), मणिकृतस्तु....इत्याहुः, तदसत् (३४), सौभरिप्रभृतीनां....(३९) इति विष्णुपुराणम् (४०), बौद्धाधिकारदीधितौ भट्टाचार्याः (४४), इति मुक्तिवादे मणिकृतो महाशयाः, इति चेन्न (४५), नव्यास्तु (४८), बौद्धाधिकारदीधितौ मुक्तिवादे भट्टाचार्याः इति प्राहुः (५१), तार्किकास्तु....इत्याहुः, तदसत् (५१) अत्र भट्टनये (६५), तथैव भट्टनये (६९), प्रभाकरास्तु....इत्याहुः, तदसत् ( ७६), यदि च मुक्तिवादोक्तरीतया (७८), नव्यास्तु भाष्ये....इति प्राहुः (९१), नव्यास्तु....इति प्राहुः (११७), इति सम्प्रदायः....तदसत् (११९), तेन भाट्टनये व्योम्नश्चाक्षुषत्वेऽपि न व्यभिचारः (१३९), नव्यनैयायिकैरपि (१५९) इति। बहुत्र 'स्वतान्त्रास्तु' (२६; ३६,; ५०; ८६; १२६; १४०) इत्युक्त्वा मतानि निराकृतानि।

यत्र तर्कवागीशमहोदयेन स्वाभिप्राय आविष्कृतस्तत्र—अस्मदभिमतमुक्तिस्तु (२७), वस्तुतस्तु (३९; १२६; १३५), वस्तुतस्तु....इति भावः (११९), वस्तुतस्तु....तात्पर्यम् (१३०) इत्येतादृशानि पदानि समाश्रितानि। किरणावलीकाराणामभिप्रेतमिङ्गन् श्रीमथुरानाथः—आचार्यास्तु....इति श्रुतावपि (३५), इत्याचार्यसम्मता व्याख्या (९४), इत्याचार्याभिप्रायः (११५), इत्याचार्यमतादरे तु (१४१) इत्याचार्यनिगर्वः (१५३) इति प्रतिपेदे। क्वचित्तु 'आचार्यविरुद्धत्वात्' (९२) इति हेतुरपि निदर्शितः।

न्यायकन्दलीकारः श्रीधरभट्टः किरणावलीकाराद् श्रीमदुदयनाचार्यात् पूर्वमासीत्, न्यायकन्दली च किरणावलीकारेण समधीतेति स्पष्टं विज्ञायते किरणावलीरहस्यात्। "अपरस्त्वाह। अणुपरिमाणतारतम्यं क्वचिद् विश्रान्तं परिमाणतारतम्याद् महत्परिमाणतारतम्यवदिति, तदप्यपास्तम्" (१४०) इति किरणावल्युक्तस्य 'अपरस्त्वाह' इत्यस्य व्याख्यायां श्रीमथुरानाथतर्कवागीश आह—'कन्दलीकारोक्तं परमाणुद्व्यणुकसिद्धिप्रयोजकमनुमानमाह—अपरस्त्विति' इति। अतः ९९१ खीस्ताब्द-

स्थात् श्रीधरभट्टात् परवर्त्ती श्रीमदुदयनाचार्य एकादशख्रीस्तशताब्द्यामासीदिति निश्चप्रचं पार्यते समुदीरितुम् ।

तर्कवागीशस्याधिकारो व्याकरणेऽपि तथैव समुल्लसति, यथा न्यायवैशेषिकशास्त्रयोः। तत्कृतसिद्धान्तरहस्ये क्त्वाप्रत्ययार्थविचारो विशेषतः पल्लवितः। अयं खलु व्याकरणविषयकं मणिकृन्मतमित्थं प्रत्याचष्टे—"मणिकृतस्तु वावसन्तम् इति यङ्लुकि....पुनः पुनर्वसन्तमित्याहुः, तदसत्, तथा सति 'अभ्यस्तादन्तिरनकारः' इति नकारलोपापत्तेः। तस्मात् कल्पतरुकारसम्मतोक्तव्याख्यैव ज्यायसी" (३४) इति।

अद्यत्वे हस्तलेखसम्पादनविधौ पाठभेदानां तौल्यस्य निर्णयस्य च श्रूयते महान् डिण्डिम आधुनिकानुसन्धाननाम्ना। भारते वर्षे पाठभेदतौल्यनिर्णयपद्धतिः पुरातनीति नास्माभिर्विस्मर्तव्यम्। संस्कृतवाङ्मयानुशीलनेन कश्चन पाठभेदनिर्धारणनिकषः शक्यते प्रादुर्भावयितुम्। इह तर्कवागीशेन किरणावलीपाठभेदादिनिरूपणं मतान्तरोपन्यासपूर्वकं व्यधायि। यथा—हेतुमत्तयेति पाठे (१०), क्वचित् तथैव पाठः (१०), 'एकव्यक्तिसमावेशे सति' इति पाठस्तु प्रामादिकः। अत एव प्रकाशेऽपि 'समावेशे सति' इत्येव पाठो धृतः (८०), 'इति पृथगुच्यन्ते इत्यभिप्रायवानाह षण्णामपि' इति पाठः। स च न प्रामाणिकः, तस्यापि प्रामाणिकत्वे 'पृथगुच्यन्ते' इत्यस्य परस्परसम्बद्धत्वेनाभिधातुं युज्यन्त इत्यर्थः (८९) इति। नियोगवदिति क्वचित्पाठः (९४), एतच्च द्रव्यत्वं समवायमभिव्यञ्जयेदिति पाठः (१०१) स्वसमवायमिति पाठस्तु प्रामादिकः (१०१), घ्राण इवेत्यनन्तरम् इत्यभिप्रायेण 'आह' इति क्वचित् पाठः। स च प्रामादिकः (१२९) इति।

एवं तावद् श्रीमन्मथुरानाथतर्कवागीशस्याप्रतिमा वैदुषी व्यज्यते। पञ्चादशतोऽधिकानां रहस्यान्तानां ग्रन्थानां प्रणेतुस्तस्य भूयिष्ठास्ते वेष्टनवेष्टिता अन्धकाराच्छन्नप्रकोष्ठनिलीनाः स्वोद्धारकमद्यापि प्रतीक्षन्ते। विश्रुतकीर्तीनां पुण्यश्लोकानां श्रीमद्गौरीनाथशास्त्रिवर्याणामस्य विश्वविद्यालयस्य कुलपतिपदालङ्करणात् प्रागेव समजनि किरणावल्यामीदृक्दृक्किरणसंचारणं यत् तत्र तदीयस्य हिन्दीव्याख्यानस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयगङ्गानाथझाग्रन्थमालाया अष्टमपुष्पत्वेन प्रकाशनोत्तरमधुना किरणावली रहस्याख्यया संस्कृतव्याख्यया विद्योतते। श्रीगौरीनाथशास्त्रिभट्टाचार्यमहोदयैः सम्पादितं म० म० मथुरानाथतर्कवागीशप्रणीतमिदं किरणावलीरहस्यं विश्वविद्यालयस्यास्य म० म० शिवकुमारशास्त्रिग्रन्थमालायाश्चतुर्थपुष्पतया विकचितं

स्वसौरभेण नूनं वैशेषिकदर्शनप्रियाणां स्वान्तनिशान्तानि सुवासयेत् । एतादृशस्य महनीयकीर्तेर्ग्रन्थस्य प्रकाशनेन विद्वज्जना नूनं प्रीणिता जिज्ञासुजनाश्च भृशमुपकृता इति ध्रुवं शक्यते वक्तुम् । संवर्धयेत् काशीविश्वनाथो दीर्घायुष्यप्रदानेन सम्पादक-महोदयान् येन तावदीदृगनर्घ्यकुसुमोपहारेण सन्ततं शारदचरणसरोरुहसमर्चनं विदध्युर्महेच्छा इति मनुते

वाराणस्यां
गीताजयन्त्यां २०३८ वै०
(७-१२-८१, ख्री०, सोमवासरे)

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# PREFACE

## I

We have great pleasure in presenting for the first time this commentary, entitled *Rahasya* by MM Mathurānātha Tarkavāgīśa on Udayanācārya's Kiraṇāvalī (*dravya-prakaraṇa* only) on the Padārtha-dharma-saṁgraha of Praśastapāda which is known to be the earliest available gloss on the Vaiśeṣika-Sūtras of Kaṇāda. A transcript copy of the original manuscript which seems to have been lost, is preserved in the Government Sanskrit College Library at Calcutta. The transcript copy from which the press-copy is prepared bristles with mistakes on the part of the scribe. The editor has, however, tried his best to iron out the defects and presented a more or less satisfactory text for the perusal of readers. In this context he feels it imperative on his part to acknowledge his deep gratitude to Pandit Vibhuti Bhusan Bhattacharya, Ex-Librarian and Ex-Registrar of the University for seeing the work through the press.

The Navadvīpa school of neo-logic is represented by four illustrious Naiyāyikas, Raghunātha Śiromaṇi, Mathurānātha Tarkavāgīśa, Jagadīśa Tarkālaṅkāra and Gadādhara Bhaṭṭācārya. Though we have little information about the tradition of the family of Śiromaṇi, Mathurānātha describes himself as the son of Śrī Rāma Tarkavāgīśa and refers twice to the views of his grandfather in the present text (p. 4, p. 6).

The present text is a most lucid commentary on the original text and it takes into account each and every word of it which is explained as faithfully as possible. It appears that while explaining the text commentator anticipates the difficulties of both the teacher and the taught and endeavours to remove them with great care. Mathurānātha is remembered

as a devout Vaiṣṇava and he has discussed the five-fold forms of emancipation, *Sālokya*, *Sārūpya*, *Sārṣṭi*, *Sāmīpya* and *Sāyujya* and describes *Sāyujya* as *ātyantika-duḥkha-nivṛtti.*

It is to be noted that Maturānātha exhibits unusual restraint in his expressions when there is an occasion to criticise the views of his predecessors. Thus, on one occasion he observes that the explanation of Gaṅgeśa is *not happy* (p. 38). On another occasion he mentions the two-fold defects *(gaurava* and *aprasiddhi*) in the definition of '*apavarga*' as adumbrated by Gaṅgeśa and refrains from casting any fling at the master (p. 16). Yet on a third occasion while he differs from the views of Gaṅgeśa on the meaning of the term '*upaplava*', he mentions that the master holds a different view (*ityāhuḥ*, p. 19). In numerous places, Mathurānātha critises Vardhamāna but he never attempts to undermine the reputation of that prolific and illustrious writer and son of Gaṅgeśa.

**Editor**

# INTRODUCTION

The beginnings of the history of the Nyāya-Vaiśeṣika system of Indian philosophy cannot be traced with any degree of certainty. There are, however, records to prove that philosophical seminars were held at the courts of King Ajātaśatru and Janaka. According to scholars like MM Kuppusvāmī Sāstrī the cardinal doctrines of the two cognate systems, Nyāya and Vaiśeṣika, are as old as the fourth century B. C., though the extant works of Kaṇāda and Gautama are believed to have been composed at a later date. According to Professor Dasgupta, the Vaiśeṣika Sūtras must have been composed before Caraka 'as the whole foundation of his medical physics is based on the Vaiśeṣika physics.' He further states that though the Vaiśeṣika Sūtras discuss whether the soul requires the aid of inference or *ahaṃ-pratyaya* in support of its existence they are silent on the issue of its non-existence. And, he thinks on this ground that they are pre-Buddhistic. Furthermore, he advances arguments to prove that the Sūtras have their basis in some earlier system of Mīmāṃsā, a view which unfortunately we are not inclined to accept, as we think that the term, "*dharma*", has quite different connotations in the two systems of Mīmāṃsā and Vaiśeṣika. It is almost obvious that the Vaiśeṣika Sūtra uses the term in the sense of *padārtha*; it need not be construed to mean *codanā* as the Mīmāṃsist means by it. According to Professor Jacobi, while the Nyāya-Sūtras and the Brahma-Sūtras were composed between 200 A.D. and 500 A. D., the Vaiśeṣika-Sūtras and the Mīmāṃsā-Sūtras were composed a little earlier. It is pointed out that the *Śūnyavāda* of Nāgārjuna only (3rd. Century A. D.) and not of Asaṅga and Vasubandhu (the middle of the 4th. Century A. D.) has been dicussed in the Nyāya-Sūtras. It is worthy of notice, however, that both Vātsyāyana and Vācaspati Miśra opine that the Nyāya-Sūtra IV.ii.26 critisises *Vijñānavāda*

only. It may not be out of place to mention in this context that there is hardly any valid ground to prove that *Śūnya-vāda* and *Vijñāna-vāda* were first promulgated by Nāgārjua, Asaṅga and Vasubandhu. According to Professor Vi and Randle, the Vaiśeṣika-Sūtras are older than the Nyāya-Sūtras as they cannot trace any influence of the Nyāya system on the Sūtras of Kaṇāda and the Padārtha-dharma-saṃgraha of Praśastapāda; to the contrary, the influence of the Vaiśeṣika-Sūtras is clearly discernible in the Sūtras of Gautama and the Bhāṣya of Vātsyāyana. Dr. Śrījīva Nyāyatīrtha contends, however, that the Nyāya-Sūtras are earlier compositions. He points out that while the Nyāya-Sūtras cite Vedic texts as *pramāṇa* the Vaiśeṣika-Sūtras cite Smṛti texts also. Further, a topic which is described neatly in only one Nyāya-sūtra is found to have been collected in a number of the Vaiśeṣika-sūtras. Some scholars would like to suggest that the Vaiśeṣika sūtras are later than Kauṭilya's Arthaśāstra as the latter does not mention them anywhere. It may be said, however, that the word '*yoga*'' used in the Arthaśāstra refers to the Vaiśeṣika system and Vātsyāyana uses it in the same sense. Those who presume that the Vaiśeṣika system is anterior to the Buddhist and the Jaina systems opine that the theory of Nirvāṇa is based on the *Asat-kārya-vāda* of the Vaiśeṣikas and the *Asti-kāya* and *Aṇuvāda* of the Jainas owe their origin to the *Paramāṇu-vāda* of the Vaiśeṣika. Of course, it needs be mentioned that the concept of *aṇu* differs in the two systems. While the Jainas admit that all *aṇus* possess the same quality, the Vaiśeṣikas hold that they are not so.

## II

It is regretted that the earliest vṛtti on the Kaṇāda-Sūtras by Bharadvāja is lost to us. And, the Bhāṣya thereon by Rāvaṇa is no longer available. Praśastapāda's work, the Padārthadharmasaṃgraha, is the earliest authoritative literature of the Vaiśeṣika system. This work and not the extant

Sūtras of Kaṇāda contains many references to some of the most important issues which have been quoted, discussed and refuted in other systems. It is worthy of notice that Praśastapāda has specially discussed these points in which the two systems of Nyāya and Vaiśeṣika differ from each other. The Sūtras also do not explain the term *viśeṣa* to which according to Indian tradition the name of the Vaiśeṣika system owes its origin. According to Chinese sources, the term Vaiśeṣika means "excellent" and as this Śāstra was composed by persons of superior intellect it is so designated. It is stated by some scholars that the earlier texts, the Bhāṣyas of Rāvaṇa and others suffered from a spirit of agnosticism and Praśastapāda took upon himself the responsibility of removing it. It is known that Śaṅkarācārya describes the system as *Ardha-vaināśika*. It is universally admitted that Praśastapāda is prior to Uddyotakara who belongs to the latter half of the sixth century or the beginning of the seventh. Some would suggest that he is earlier than Paramārtha and Dharmapāla. Professor Keith is of the opinion that he is later than Dīṅnāga; but this view cannot be accepted on the ground that when Vātsyāyana who is earlier than Diṅnāga is later than Praśastapāda, the latter cannot be later than Diṅnāga. Praśastapāda is earlier than Saṅkarācārya as what the latter describes as the view of the Vaiśeṣikas is found in the work of Praśastapāda.

III

Of all the commentators, Vyomaśiva appears to be the oldest. Some scholars are, however, inclined to think that he is later than Śrīdhara and Udayana. His name is mentioned in Vādīndra's Rasasāra (1225 A.D.) and Vallabha's Līlāvatī. In 991 A. D. Śrīdhara composed his commentary Nyāyakandalī, a commentary on Padārthadharmasaṃgraha. Śrīdhara takes the name of Dharmottara. It is presumed that Śrīdhara is at least acquainted with the view on *darkness* that Udayana criticises in his Kiraṇavalī. Udayana is a master-mind who is described as the father of the Nyāya

Vaiśeṣika system of Indian philosophy—the two systems of Nyāya and Vaiśeṣika are welded into one by him. Udayana regards the authority of the Śabda and Upamāna as separate *pramaṇas*—a matter not endorsed in the Vaiśeṣika system but acknowledged in the Nyāya system. But, he follows the Vaiśeṣika system in regarding 'dream-experience' as a type of 'memory-knowledge'. We are inclined to believe that Udayana has lived long after Vācaspati Miśra for the reason that he evinces a deep regard for him which fact may justify a substantial period of interval between the two masters. Udayana's style is cryptic to the core and it has required the services of later-day scholars to write commentaries on his work and particularly on Kiraṇāvalī to elucidate the intention of the master with some degree of precision.

Śrīvatsa is one commentator on the Padārthadharma-saṃgraha. This we know from a reference by the Jaina writer, Rājaśekhara. Among the noted writers after Udayana mention must be made of Vallabhācārya, author of the Nyāya-līlāvatī. He quotes from the works of Udayana and criticises him twice. He does not describe Udayana as an Ācārya—a fact that suggests that he is almost a junior contemporary of the master. Bhaṭṭa Vādīndra, Citsukha and other teachers of the thirteenth century mention him by name. It is worthy of note that almost all the writers of Mithilā and Bengal have written commentaries on his work. During the middle of the twelfth century. Śivāditya writes his Saptapadārthī in the style of Udayana. His name and his views are quoted in Vādīndra's Rasasāra and in Nayana-prasādinī, a commentary on Citsukhī. One of his contemporary writers is Vādi-Vāgīśvara, author of Mānamanohara, quoted several times in Citsukhī. After Śivāditya we should name Sarvadeva, author of Pramāṇamañjarī, a highly authoritative work of the Nyāya-Vaiśeṣika system.

About 1225 A. D. Vādīndra writes his Rasasāra, a commentary on Guṇa-Kiraṇāvalī. Besides him, we come across references to three teachers, Divākara Upādhyāya,

Prabhākara Upādhyāya and one described as Jagadguru in the commentary by Pragalbha known as Prakāśa on Dravya-Kiraṇāvalī. Mention may next be made of Vardhamāna, son of Gaṅgeśa Upādhyāya who writes commentaries on Kiraṇāvalī and Līlāvatī. He belongs to the third quarter of the fourteenth century. Pragalbha is the next important writer. Dravya-Kiraṇāvalī-Prakāśa, Guṇa-Kiraṇāvalī-Prakāśa and Pragalbhī on Līlāvatī are his works besides the commentaries on the four sections on Tattvacintāmaṇi. He belongs to the fifteenth century (between 1415 A. D. and the third quarter of the fifteenth). One of his contemporaries, Śrīmān Bhaṭṭācārya writes his commentaries on Dravya Kiraṇāvalī and Dravya-Prakāśa by Vardhamāna.

A great name after Vardhamāna is Jayadeva Miśra, alias Pakṣadhara of Mithilā. He comments on Vardhamāna's Dravya-Prakāśa. Līlāvatī-Prakāśa is one more of his works, a commentary on Līlāvatī. He refers to one Darpaṇakāra who is probably Vaṭeśvara Upādhyāya, the great grandfather of Yajñapati Upādhyāya. He writes a commentary on Līlāvatī. Presumably at 1500 A. D. Bhagīrathā Ṭhakkura writes his commentary entitled Prakāśikā on Vardhamāna's Dravya-prakāśa, Guṇa-prakāśa and Līlāvatī-prakāśa. Rucidatta is one of Bhagīratha's contemporaries. He is a pupil of Jayadeva. His commentary, Dravya-prakāśa-vivṛti on Kiraṇāvalī-Prakāśa is an important text. Vācaspati Miśra flourishes in the fifteenth century to write a commentary on Līlāvatī. His Contemporary is Śaṅkara Miśra who writes among others, Kaṇāda-Rahasya, Kiraṇāvalī-Nirukti-Prakāśa, Vaiśeṣika-Sūtra-Upaskāra and Līlavatī-Kaṇṭhābharaṇa.

In the third quarter of the fifteenth century Raghunātha Śiromaṇi writes his masterly commentaries entitled Didhiti on Dravya-Kiraṇāvalī-Prakāśa, Guṇa-Kiraṇāvalī-Prakāśa and Līlāvatī-Prakāśa. Balabhadra comes immediately after Rucidatta to write his commentaries on Śivāditya's Sapta-padārthī (Sandarbha), Sarvadeva's Pramāṇa-mañjarī and Vardhamāna's

Dravya-Prakāśa (Vimala). He is a pupil of Pragalbha. He discusses the views of Ṛucidatta in several places. He belongs to the last quarter of the fifteenth century. Next comes Padmanābha Miśra. His commentary, "Setu" on "Vaiśeṣikā-Sūtra", "Sāra" on Nyāyakandalī, Bhāskara on Kiraṇāvalī and Vardhamānendu on Dravya-Kiraṇāvalī-Prakāśa are important texts.

One of the most outstanding writers on Nyāya-Vaiśeṣika literature is MM Mathurānātha Tarkavāgīśa. His commentary on Dravya-Kiraṇavalī is now edited for the first time. His commentary on Guṇa-Kiraṇāvalī seems to be lost. Both the commentaries are styled as Rahasya. For the understanding of the original text these commentaries like his commentaries on the Tattva-cintāmaṇi and on Dravya-Prakāśa and Līlāvatī-Prakāśa are most suitable. He explains the texts with ease and clarity and seldom indulges in exhibiting his scholarship so much in evidence in the writings of Śiromaṇi. The last of the Titans in this field is Jagadīśa Tarkālaṅkāra whose Sūkti on Padārthadharmasaṃgraha is a masterly production. He comes close to his predecessor, Mathurānātha. It is yet to be discovered whether Gadādhara Bhaṭṭācārya whose reputation as a Naiyāyika is beyond question has written any work on the Nyāya-Vaiśeṣika system.

**Gaurīnath Sāstri**

REFERENCES

A History of Indian Philosophy—Dr. S. N. Dasgupta
Indian Logic and Atomism—Dr. A. B. Keith
Indian Logic in the Early Schools—H. N. Randle
Indian Philosophy—Dr. S. Radhakrishnan
Journal of American Oriental Society, XXVI., 1911
A Primer of Indian Logic--MM Kuppusvami Sastri
Sarasvati Bhavana Studies, Vol III
Vaisheshika Philosophy Vi
Calcutta Review, Vol. 183
Bāngalir Sārasvata Avadāna : Vaṅge Navya-nyāyā-carcā--
D. C. Bhaṭṭacharya

# भूमिका

भाष्यलक्षणालक्ष्यत्वेऽपि प्रशस्तपादाचार्यरचितस्य पदार्थधर्मसङ्ग्रहाख्यस्य प्रशस्तपादभाष्यत्वेन प्रसिद्धस्य निबन्धस्य मुनिना कणादेन रचितस्य वैशेषिकसूत्रस्य यथार्थतात्पर्यख्यापकत्वं सर्ववादिसिद्धम्। मूलकारसदृशरीत्या निबद्धस्यास्य प्रबन्धस्य निगूढभावाविष्करणे तावद् बह्वष्टीकारा दत्तचित्ता अपि दृश्यन्ते। इदानीमुपलब्धासु तासु टीकासु प्राचीनतमायां व्योमवत्यां ग्रन्थतात्पर्यं तावत् प्राचानीनामेव शैलीमाश्रित्य विवृतम्। न्यायकन्दल्यामपि प्रायशः सैव रीतिरनुसृता श्रीधरभट्टेन।

नव्यन्यायशास्त्राख्यविचारपद्धत्याः प्रवर्तनमूलभूतेनाचार्येणोदयनेन तावत् किरणावलीसमाख्यायां टीकायाम् इदम्प्रथमतया तर्कप्रधानां काञ्चिदभिनवां सरणिमनुसृत्यैव प्रशस्तपादाचार्यतात्पर्यमनेकविधकुतर्कजालखण्डनेन प्रकटितमिति नैव तिरोहितं तद्ग्रन्थाध्येतॄणाम्। कर्कशतर्कप्रधानायामपि किरणावल्यामाचार्यस्योदयनस्य सुललिता छन्दोमयी च वाक्यरचना तावत् पाठमात्रेणैव सहृदयानां भाषारसिकानां चेतःसु समधिकमानन्दमुत्पादयति, स्मारयति च

तर्केषु कर्कशधियो वयमेव नान्ये। काव्येषु कोमलधियो वयमेव नान्ये॥

इति सगर्वोज्जृम्भितं नव्यन्यायशास्त्रप्रवर्तकस्यास्याचार्यस्य।

एवमेव 'एवं विपर्ययात् सर्वत्र साधर्म्यं वैधर्म्यञ्च वाच्यम्' इति प्रशस्तपादीयग्रन्थस्य साधर्म्यविपर्यय-वैधर्म्यविपर्यययोः स्पष्टीकरणेऽपि तैराचार्यैर्या पद्धतिरनसृता सापि प्रशस्तपादभाष्यटीकारचयितृषु उदयनस्यानन्यसाधारणीं प्रतिभामेव प्रतिपाद्य आचार्यस्योद्घोषितम्

**वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा**
**यदि पथि विपथे वा स्थापयामः स पन्थाः।**
**उदयति दिशि यस्यां भानुमान् सैव प्राची**
**नहि तरणिरुदीते दिक्पराधीनवृत्तिः॥**

इति प्रमापयति च।

प्रशस्तपादभाष्यटीकास्वनन्यसाधारण्या अस्याः किरणावल्या अपि बहूनि व्याख्यानानि सन्तीति नैव विस्मयस्थानम्। तत्रापि मिथिलामण्डलमण्डनस्योदयनस्य तन्मण्डलजाता व्याख्यातारो यथा दृश्यन्ते, तथैव नवद्वीपमण्डलस्था अपि व्याख्यातारः। गुरुशिष्यपरम्पराविचारे कृते नवद्वीपस्य तावद् मैथिलसम्प्रदायान्तर्गतत्वं सुस्थितम्। नवद्वीपे नव्यन्यायशास्त्राध्यापनन्तु वासुदेवसार्वभौमतः प्रारब्धमासीदिति

कथ्यते। स खलु सार्वभौमौ मिथिलायां कस्य सविधे न्यायशास्त्रमधीत्य नवद्वीपे तच्छास्त्रप्रचारः कृत इति नैव निश्चेतुं शक्यते।

नव्यन्यायशास्त्राध्यापनेऽध्ययने वा नवद्वीपीयपण्डितानां मैथिलपण्डितेभ्यः स्वतन्त्रमतित्वमपि सुस्थितमेव। तत्रापि सत्सु बहुषु ग्रन्थकर्तृषु नवद्वीपे चतुर्णामेव ग्रन्थकर्त्तॄणां यशो भारतभूमण्डले व्याप्तम्। ते च तत्त्वचिन्तामणेर्दीधितिकारा पदार्थतत्त्वनिरूपणकाराश्च रघुनाथशिरोमणिपादाः, तत्त्वचिन्तामणिरहस्यकाराः मथुरानाथतर्कवागीशमहोदयाः, तत्प्रशिष्याश्च शब्दशक्तिप्रकाशिकाकाराश्च जगदीशतर्कालङ्कारमहाशयाः, व्युत्पत्तिवादादिबहूनां ग्रन्थानां रचयितारश्च गदाधरभट्टाचार्यपादाः स्वया स्वया विमलया प्रतिभया तर्कशास्त्रीयां विचारपद्धतिमुत्कर्षकाष्ठामेव प्रापितवन्तः। एतेषु कस्याप्यनुपमायाः प्रतिभाया गाम्भीर्यं निर्णेतुमसमर्था वयं सागरस्य गम्भीर्यनिरूपणार्थं प्रवृत्ताया काष्ठपुत्तलिकाया इव।

प्रतिभाधराणामेतेषां सर्वेषां व्यक्तिभेदेनैव प्रतिभाया अपि यथाकथञ्चिद् नव्यन्यायशास्त्रीयविशिष्टस्य शुद्धानतिरिक्तत्वेऽपि तदधिकरणभेदवदेव स्वीकरणीयः। एतेषु रघुनाथशिरोमणि-मथुरानाथतर्कवागीशपादानामेव ग्रन्थरचनाप्रयोजनमेवात्र संक्षेपतो विचार्यते।

सतीस्वपि वह्वीसु तत्त्वचिन्तामणिटीकासु पुनर्दीधितिटीकाया ग्रथने प्रयोजनन्तु तेन महाभागेन स्वयमेव ग्रन्थादावुट्टङ्कितम्

**विदुषां निबहैरिहैकमत्या यददुष्टं निरटङ्कि यच्च दुष्टम्।**
**मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव॥ इति॥**

एषा घोषणा तु आचार्यस्योदयनस्य 'वयमिह पदविद्यां तर्कमान्वीक्षिकीं वे'त्यादिकमेव स्मारयति। पदार्थतत्त्वनिरूपणे तावद् रघुनाथेनोद्भटतर्कसामर्थ्यं प्रदर्शयता दिक्कालादीनामीश्वरानतिरिक्तत्वमेव व्यवस्थापितम्। विद्वद्वृन्दसमर्थितानां सिद्धान्तानामन्यथाकरणपटुरयं रघुनाथस्तार्किकानां शिरोमणिमेवात्मानं प्रतिपादितवान्। एतेषाञ्च महाभागानां वाक्यार्थस्तु विनैव लक्षणां व्यञ्जनां वा समाश्रित्य ज्ञायत इति तु बहुलमेव प्रेक्षावतां विपश्चिताम्।

वैष्णवकुलसम्भूतेन निसर्गतो विनीतेन च मथुरानाथेन द्रव्यकिरणावलीरहस्यारम्भ एवोक्तम्—

**मदुक्ततन्त्रं न विचिन्त्य यत्नाद् बृहस्पतेरप्यसुबोधमेतत्।**
**शास्त्रं यथा कृष्णपदारविन्दध्यानं विना सोऽपि न बोद्धुमीशे॥**

एवमन्यत्रापि तेनोक्तम्

**आन्वीक्षीकीपण्डितमण्डलीषु निःशङ्कमध्यापनमातनुध्वम्। इति।**

यद्यप्यत्र ध्वनितार्थस्तु प्रायशो दीधितिकारवाक्यवाच्यार्थसदृश एव, तथापि भणिति वैचित्र्येण ध्वनितार्थस्य कार्कश्यमपि प्रच्छादितं मथुरानाथेन।

यद्यपि "मदुक्ततन्त्रं न विचिन्त्य यत्नाद् बृहस्पतेरप्यसुबोधमेतत्' शास्त्रमित्यतिशयोक्तिरिवाभाति। मथुरानाथतः पूर्वमेव भारते वर्षे बहूनां वैशेषिकसिद्धान्तख्यापनपराणां ग्रन्थानां ग्रथनं सञ्जातम्, तथापि तात्कालिके वङ्गदेशे तु श्रीधरभट्टानां न्यायकन्दल्यादीनाम्, शालिकनाथादीनाञ्च वैशेषिकसिद्धान्तानुसारिशिष्यपरम्परा तु यवनाक्रमणजनितराष्ट्रविप्लवेन नष्टैवासीदित्यनुमीयते। ततश्च द्वित्रिशतवर्षं यावत् नासीद् वङ्गदेशे न्यायवैशेषिकशास्त्राध्ययनाध्यापनपरम्परेत्यनुमातुं शक्यते। नवद्वीप एव वासुदेवसार्वभौमतः प्रभृति पुनः सा अध्ययनाध्यापनग्रन्थरचनादिपरम्परा प्रारब्धेति वस्तुस्थितिमनुसृत्य मथुरानाथोक्तं कथञ्चित् समर्थयितुं शक्यते। अन्यथा वैशेषिकसिद्धान्तख्यापकानां सुबहूनां ग्रन्थानां विषये मथुरानाथस्याज्ञत्वमेव तदुक्तिपरतन्त्राणामस्माकं निर्णयपदमध्यारोक्ष्यतीति सुस्पष्टम्। यदि च 'एतत् शास्त्रम्' इत्यनयोः पदयोः किरणावलीपरत्वमेव स्वीक्रियते, तथाप्यन्यासां टीकानामकिञ्चित्करत्वन्तु नैव समर्थयितुं शक्यत इति तस्य कन्दलीकारमतोल्लेखेनैव स्पष्टम् (पृ० ७) इत्यत्रैव विरम्यतेऽस्मात् परच्छिद्रान्वेषणात्।

अनभिप्रेतं पूर्वपक्षत्वेनोपस्थापितं परमतमवज्ञातुं 'तत्तुच्छम्' 'किं नश्छिन्नम्' 'कटी शृणोतु न तु मादृशाः' 'नायं दर्पणस्यापराधो यदेनमन्धो न पश्यति' इत्यादिकाः अश्लीलवाक्यप्रयोगास्तु अनेकेस्वेव ग्रन्थेषु दृश्यन्ते। परं वैष्णवकुलसम्भूतत्वेन मधुरस्वभावो मथुरानाथः कदापि परमतखण्डनावसरे एतादृशानामश्लीलानां वाक्यानां प्रयोगो न कृत इति निःसंशयं कथयितुं शक्यते।

'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इत्यागमवाक्यार्थविषये मणिकाराणां गङ्गेशोपाध्यायानां मतन्तु तेन शब्दसाधुत्वाभावहेतुकं 'तदसत्' इत्येतावन्मात्रोक्त्या निराकृत्य कल्पतरुकारसम्मताया व्याख्याया एवोपादेयत्वं ख्यापितम् (द्रष्टव्यम्-पृ० ३४)।

अपवर्गस्य निष्कृष्टं लक्षणन्तु तत्त्वचिन्तामणेरनुमानखण्डे मुक्तिवादे यथोपदिष्टं मणिकृता गौरवाप्रसिद्धयोरुद्भावनेन तस्यासत्त्वमात्रमेव प्रदर्शितं मथुरानाथेन। (द्रष्टव्यम्-पृ० १६)।

'उपप्लव' शब्दव्याख्यायामपि मणिकृन्मते 'इत्याहुः' इति कथनेनास्मिन् प्रकरणे तन्मतेऽरुचिरेवोद्भाविता रहस्यकारेण। आचार्येणोदयनेन त्वत्र प्रकरणे उपप्लवस्य दुःखमयत्वमेव निर्दिष्टम्। मणिकारेण तु उपप्लवपदं दुःखपरत्वेनैव वर्णितं मुक्तिवादे। तेनेदं सुस्पष्टं यत् पारिभाषिकस्योपप्लवशब्दस्याचार्यस्वीकृतोऽर्थो मणिकारसम्मतादर्थाद् भिन्न इति (द्रष्टव्यम्-पृ० १९)।

एवमेव मथुरानाथेन बहुषु स्थलेषु सहेतुकं 'यथाश्रुतं तु न सम्यक्' इत्येतावन्मात्रमुक्त्वोदयनाचार्यस्य ग्रन्थानामपि संस्कारः साधित इति (पृ० ३१, ५८, ६४ ११६ प्रभृति)।

प्रकाशकारकृतकिरणावलीव्याख्यायामनेन शतशोऽनाश्वासः प्रकटितः । परं कुत्रापि तेन प्रकाशकारमवज्ञापयितुं यत्नो न कृत इति विशेषतो द्रष्टव्यम्। इदमप्यवधेयं यन्न केवलं परमतखण्डन एवास्य प्रतिभा पर्याप्ता; परन्त्वस्य लक्षणवाक्यानामनुगमप्रणाल्यपि प्रकाशकारादिस्वीकृतप्रणाल्या भिन्न इति तु ग्रन्थे सर्वत्रैव सुस्पष्टम्। इतरभेदसाधकव्यतिरेकिहेतुस्थले साध्यप्रसिद्ध्यर्थं ये खलूपायाः प्रकाशकारादिभिरनुसृतास्तानुपेक्ष्यानेन निरधिकरणकभेदस्यापि प्रसिद्धिः सम्भवतीति नवीनः कश्चिद् इतरभेदप्रसिद्ध्युपायः प्रदर्शितः ( पृ० ११९ )।

यथा तथा वा भवतु **'रहस्य'** टीका तु मूलानुगामिनी भवन्ती **'आन्वीक्षिकीपण्डितमण्डलीषु निःशङ्कमध्यापनमातनुध्वम्'** इति तदुक्तं प्रमाणयति। मूलकारस्य तात्पर्यं प्रकाशयन्ती सर्वदा अध्यापकाध्येतॄणां परमसहायभूता। किं बहुनोक्तेन यानि खलु पदानि सुगमार्थकानि मत्वा अन्यैष्टीकाकृद्भिरुपेक्षितानि तान्यपि पदानि मथुरानाथेन व्याख्यातानीति पञ्चलक्षण्यादिग्रन्थाध्येतॄणां ज्ञातमेव। अनेनैव 'न तावदव्यभिचरितत्वम्' इति पञ्चलक्षणीगतं गङ्गेशोपाध्यायवाक्यं व्याचक्षाणेनोक्तं 'तावदिति वाक्यालङ्कारे' इति। अत्रापि किरणावल्यां तेन शतशोऽतिप्रसिद्धार्थकत्वेन टीकाकृद्भिरुपेक्षितान्यपि पदानि व्याख्यातानि। तदिदानीन्तनानां विद्यार्थिनां कृते महोपकारजनकानीत्यत्र नास्ति तर्कावसरः।

परमवैष्णवेणानेन मुक्तिस्वरूपवर्णनावसरे सालोक्य, सारूप्य, सार्ष्टि, सामीप्य, सायुज्यभेदेन निःश्रेयस्य पञ्चविधता वैष्णवमतसिद्धा व्यक्तीकृता। तत्रापि सायुज्याख्यस्यैवात्यन्तिकदुःखनिवृत्तिरूपनिःश्रेयसपदवाच्यत्वम्, अन्येषाञ्च सालोक्यादिसामीप्यान्तानां स्वतः पुरुषार्थत्वाभावत्वमऽपि निर्दिष्टम्। ( द्र० पृः १५ )।

परमिदं विस्मयस्थानमस्माकं यदनेन खलु सांख्यमतेऽपवर्गस्वरूपवर्णनावसरे सांख्यमतं वर्णयता चतुर्विंशतितत्त्वानां स्वरूपमुक्त्वा 'तथा च तेषां सङ्ग्रहश्लोकः' इत्युपक्रम्य ईश्वरकृष्णस्य सांख्यकारिकायाः 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त' इत्यादिका कारिका समुद्धृता। एवं 'प्रकृतेर्महान् महतोऽहङ्कारः' इत्यादि कारिकापि तेनोल्लिखिता दृश्यते। परन्तु तयोः कारिकयोराकरन्तु नैवोल्लिखितवान् इति। अनेन तात्कालिके नवद्वीपे ईश्वरकृष्णरचिता सांख्यकारिका सांख्यसिद्धान्तवादिनां 'सङ्ग्रह' मात्रत्वेन प्रसिद्धासीदित्यनुमेयो न वेति इतिहासशास्त्रज्ञा एवात्र प्रमाणम्।

एतदपि विज्ञेयं यन्नवद्वीपमण्डलमण्डनानां रघुनाथ-मथुरानाथ-जगदीश-गदाधराणां मध्ये मथुरानाथं विहायान्येषां पैत्रिकी पंक्तिः गण्यपण्डितविरहितैवासीत्। रघुनाथादीनां पितृपितामहादीनां नामापीदानीं न ज्ञायते। न वा तैरपि तेषां नामानि कुत्राप्युल्लिखितानीति। मथुरानाथः खलु श्रीरामतर्कवागीशस्यात्मज इति स्वीय-टीकासु सगर्वमुदीरयामासेति इतिहासविदो जानन्त्येव। इदानीं प्रकाश्यमाने किरणावलीरहस्ये तु मथुरानाथेन स्वपितामहस्यापि यत्र कुत्रचिद्विषये व्याख्या समुद्धृत्य दर्शितेति महदिदं हर्षस्थानं विद्यारसिकानाम् ( द्र० पृ० ४, ६ )।

श्रीविश्वेश्वरपुर्यां
कार्तिकशुक्लैकादश्याम्
वि० सं० २०३८

विदुषामाश्रवः
**श्रीगौरीनाथशास्त्री**

# द्रव्यकिरणावलीरहस्यविषयसूची

**मुक्तिवाद :** पृ० १५–५४

कि० निःश्रेयसं पुनरित्यादिव्याख्या, तत्र वैष्णवमतसिद्धपञ्चविधमुक्तिस्वरूप-वर्णनम् । तेषु च सायुज्यस्यैव निःश्रेयसपदवाच्यत्वम् ।

आत्यन्तिकदुःखनिवृत्तिपदार्थविचारः, तत्र आत्यन्तिकपदार्थः, निवृत्तिपदार्थः, तत्र अन्येषां मतम्, तत्खण्डनम्, प्राचां मतम्, तत्त्वचिन्तामणिकृतो मतम्, तत्खण्डनम्, नव्यमतम्, तत्र मणिकारस्य समर्थनम्, पृ० १६ ।

कि० केवलमात्मापि दुःखहेतुत्वादित्यादिसौगतमतखण्डनम्, तद्व्याख्या ।

कि० अथ ज्ञानस्वभाव एवासौ निवर्तनीय इत्यादि, तद्व्याख्यायां सौगतमतसिद्ध-ज्ञानद्वैविध्यप्रदर्शनम्, तत्रैव कस्यचिन्मतम्, पृ० १७ ।

कि० सांख्यानामपीत्यादि, तद्व्याख्यायां सांख्यमतसिद्धनिःश्रेयसखण्डनम्, पृ० १८ ।

कि० ये त्वनुपप्लवां चित्तसन्ततिमित्यादि, तद्व्याख्यायां 'उपप्लव' पदार्थविषये चिन्तामणिकृतो मतम् ।

कि० न च चित्तसन्ततेरित्यादि, तद्व्याख्या, पृ० १९ ।

कि० उपप्लवावस्थायामित्यादि, तद्व्याख्या, केषाञ्चिन्मतम्, विज्ञानवादिसिद्ध-निःश्रेयसखण्डनसमाप्तिः, पृ० २० ।

कि० वेदान्तिनामपि इत्यादि, तद्व्याख्यायाम् अन्येषां मतम्, केषाञ्चिन्मतम्, परेषां मतम्, प्रकाशज्ञानां मतम्, त्रिदण्डिमतानुयायिनां मतम्, प्रसङ्गाद् बौद्धाधिकारदीधितौ पापनाशस्य पुरुषार्थत्वप्रदर्शनम्, स्वमते मणिकारस्य समर्थनप्रदर्शनम्, भट्टमतम्, पृ. २० ।

कि० तौतातिकास्तु इत्यादि, तद्व्याख्यायां भट्टमतस्य साधीयस्त्वम्, स्वतन्त्राणां मतम्, तयोः खण्डनम्, प्राभाकरैकदेशिमतखण्डनम्, पृ० २५ ।

कि० 'एतेन पारतन्त्र्यं बन्ध' इत्यादि, पृ० २५ ।

कि० 'स्वातन्त्र्यमपि यदि' इत्यादि, पृ० २५ ।

कि० न त्वपुरुषार्थोऽयम् इत्यादि, तदव्याख्या, पृ० २७ ।

'तथापि दुःखोच्छित्तिरपुरुषार्थं', पृ० २८ ।

कि० 'तथा हि मिथ्याज्ञानमिह' इत्यादि पृ० २८ ।

'किं पुनरत्र प्रमाणम्' इत्यादि पृ० २९ । तद्व्याख्यायां प्रकाशानुयायिनां मतं तत्खण्डनञ्च, पृ० ३० ।

कि० 'पार्थिवपरमाणुगत' इत्यादि, तद्व्याख्यायां प्रकाशकृन्मतम्, पृ० ३१ ।

कि० 'ननु सर्वमुक्तिरित्येव नेष्यते' इत्यादि पृ० ३२ ।

कि० 'अथ यदि सर्वदुःखसन्ततिनिवृत्तिर्भविष्यति' इत्यादि, पृ० ३२ ।

कि० न च सर्वोत्पत्तिनिमित्तादृष्टानुपपत्तौ इत्यादि, पृ० ३३ ।

कि० स्यादेतत् । 'आदिमती प्रदीपसन्ततिर्निवर्तते' इत्यादि पृ० ३३, तद्व्याख्यायां केषाञ्चिन्मतं तत्खण्डनम्, प्रकाशानुयायिमतेऽपि दोषप्रदर्शनम्, कल्पतरुकारीयव्याख्या समर्थनञ्च, पृ० ३४ ।

कि० 'स्यादेतत् । तत्त्वज्ञानं हि विरोधितया' इत्यादि, पृ० ३४, तद्व्याख्यायां प्रकाशकारीया व्याख्या तत्र दोषप्रदर्शनञ्च, स्वतन्त्राणां व्याख्या प्रदर्शनम्, पृ० ३६ ।

कि० 'एतेन सत्त्वशुद्धिद्वारेण' इत्यादि पृ० ४०, तद्व्याख्यायां प्रकाशकारलेखनमात्रस्यानादेयत्वकथनम्, केषाञ्चिन्मते श्रुतिवाक्यस्य व्याख्या, पृ० ४२, 'भिद्यते हृदयग्रन्थि'रित्यादि व्याख्यायां दीधितिकारस्य समर्थनप्रदर्शनम्, पृ० ४४, भोगद्वारा अदृष्टनाशकं तत्त्वज्ञानमिति मणिकारमते दोषप्रदर्शनम्, पृ० ४५, मुक्त्युत्पत्तिप्रकारप्रदर्शनम्, पृ० ४७, नव्यमतम्, पृ० ४८, स्वतन्त्राणां मतम्, भावकार्यमात्रस्यादृष्टजन्यत्वे दीधितिकारसमर्थनम्, पृ० ५१, केषाञ्चिन्मतं तत्खण्डनञ्च, पृ० ५४ ।

कि० एतेन 'अथातो धर्मं व्याख्यास्यामः' इत्यादि, तद्व्याख्या, मुक्तिवादसमाप्तिः, पृ० ५४ ।

**उद्देश्यप्रकरणम्** पृ० ५४–८८

कि० 'एवं प्रतिपन्नप्रयोजनाभिधेयसम्बन्धः' इत्यादि पृ० ५४ ।

कि० 'किञ्च तेषाम्' इत्यादिव्याख्यायां केषाञ्चिन्मतम्, पृ० ५५ ।

कि० 'तत्रेति । तत्र तेषु द्रव्यादिषु' इत्यादि, व्याख्यायां केषाञ्चिन्मतम्, तत्खण्डनम्, पृ० ५६ ।

कि० 'सामान्यसंज्ञा द्रव्यमिति' इत्यादि पृ० ५७ ।

कि० 'किं पुनरत्र प्रतिषिध्यते न वेति' इत्यादि, पृ० ५७ ।

कि० 'स्यादेतत् । अन्धकारस्तावद्' इत्यादिना अन्धकारवादपूर्वपक्षः, पृ० ६०, व्याख्यायां केषाञ्चिन्मतम्, पृ० ६० ।

कि० 'न कर्म संयोगविभागयोरकारणत्वात्' इत्यादि पृ० ६१, व्याख्यायाम् अन्येषां मतम्, पृ० ६१ ।

कि० 'न गुणः, दव्यासमवायात्' इत्यादि पृ० ६३ ।

कि० 'द्रव्यसमवाय एवास्य कथमिति' इत्यादि पृ० ६३, व्याख्यायां यथाश्रुतानुयायिनां मतम्, तत्खण्डनम्, नव्यमतम्, पृ० ६४ ।

कि० 'नात्मनो बाह्यकरणप्रत्यक्षत्वात्' इत्यादि, पृ० ६४ ।

कि० 'नापि नभोनभस्वतो'रित्यादि, पृ० ६४ ।

कि० 'न तेजसः' इत्यादि, व्याख्यायां भट्टनये व्याख्या, पृ० ६४ ।

कि० 'नापि पाथः पृथिव्योः' इत्यादि, पृ० ६५ ।

कि० 'स्वप्नविभ्रमवन्मानस एवायम्' इत्यादि, पृ० ६६ ।

**विशेषोद्देशः**

कि० 'विशेषानाह' इत्यादि पृ० ८५।

कि० 'न चैवं गुणादिष्वपि तत्कल्पनानवकाशः' इत्यादि पृ० ८६, व्याख्यायां स्वतन्त्राणां मतम्, पृ० ८६।

**समवायोद्देशः**

कि० 'समवायस्यैकत्वाद् विभागो न सम्भवति' इत्यादि, पृ० ८७।

कि० 'अथान्येऽपि शक्तिसंख्यासादृश्यादयः पदार्थाः' इत्यादि, पृ० ८८। उद्देश-प्रकरणं समाप्तम्।

**साधर्म्यप्रकरणम्** ८९-११५

कि० 'यद्यपि च धर्मा अपि' इत्यादि पृ० ८९, व्याख्यायां प्रकाशकृन्मतखण्डनम्, पृ० ९०।

कि० 'नन्वेतदुभयमभावेऽस्तीति चेत्' इत्यादि पृ० ९०, व्याख्यायां नव्यमतम्, प्रकाशकृन्मतम्, वर्धमानमतखण्डनम्, केषाञ्चिन्मतम्, अन्येषां मतम्, पृ० ९०।

कि० 'धर्माधर्मकर्तृत्वञ्च' इत्यादि, पृ० ९३।

कि० 'ननु जात्यादीनां कथं वैतत्' इत्यादि, पृ० ९३।

कि० 'कार्यत्वमभूत्वा भावित्वम्' इत्यादि पृ० ९४।

कि० 'कारणत्वञ्च ज्ञातृधर्मेतरकार्यापेक्षया' इत्यादि, पृ० ९४।

कि० 'द्रव्याश्रितत्वञ्च' इत्यादि, पृ० ९५।

कि० 'अभेदे तु व्यक्तेः पूर्वमपि सत्त्वात्' इत्यादि पृ० ९७।

कि० 'तस्मात् सुष्ठूक्तं सामान्यादीनाम्' इत्यादि पृ० ९८।

कि० 'तद् यथा अनित्यधर्मत्वम्' इत्यादि पृ० १००।

**द्रव्यसाधर्म्यप्रकरणम्**

कि० 'इदानीं द्रव्याणामेव साधर्म्यम्' इत्यादि व्याख्यायां केषाञ्चिन्मतखण्डनम्, पृ० १००।

कि० 'द्रव्यत्वमेव नास्ति' इत्यादि पृ० १०१।

कि० 'व्यक्तेरभेदस्तुल्यत्वम्' इत्यादि, व्याख्यायां पक्षधरमिश्रभट्टाचार्यप्रभृतीनां मतम्, प्रकाशकृन्मतखण्डनम्, पृ० १०२।

कि० 'स्वात्मन्यारम्भकत्वम्' इत्यादि पृ० १०३।

कि० 'कार्यकारणाविरोधित्वम्' इत्यादि, व्याख्यायां केषाञ्चिन्मतम्, पृ० १०४।

कि० 'अन्त्यविशेषवत्त्वम्' इत्यादि पृ० १०४।

❀❀❀

श्रीः

**विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ।**
**यदुदेति नमस्तस्मै कस्मैचिद् विश्वतस्त्विषे ।। १ ।।**

।। ओं नमो गणेशाय ।।

कुञ्चिताधरपुटेन पूरयन् वंशिकां प्रचलदङ्गुलिपंक्तिः ।
मोहयन्नखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ।।
श्रीमता मथुरानाथतर्कवागीशधीमता ।
विशदीकृत्य दर्श्यन्ते द्रव्यस्याशेषफक्किकाः ।।
मदुक्ततन्त्रं न विचिन्त्य यत्नाद् बृहस्पतेरप्यसुबोधमेतत् ।
शास्त्रं यथा कृष्णपदारविन्दध्यानं विना सोऽपि न बोद्धुमीशे ।।

निर्विघ्नप्रारिप्सितग्रन्थसमाप्तिकामनया कृतं सूर्यनमस्कारादिरूपं मङ्गल शिष्यशिक्षायै आदौ निबध्नाति **विद्येति** । तस्मै नमः । तस्मै कस्मै इत्याकाङ्क्षायामाह विद्येति । विद्येव निदिध्यासनमिव आद्यतत्त्वज्ञानमिव वा या सन्ध्या प्रातःसन्ध्येति यावत् । आद्यतत्त्वज्ञानरूपाया विद्याया द्वितीयतत्त्वज्ञानरूपोदयपूर्ववर्तित्ववत् प्रातः-सन्ध्याया अपि उदयगिरिसूर्यसम्बन्धोदयपूर्ववर्तित्वाद् विद्यात्वेन निरूपणम् । तस्या उदयोद्रेकाद् उत्पादाद् अविद्येव मिथ्याज्ञानजन्यवासनेव या रजनी तस्याः क्षये सत्येव यदुदेति, यद् वस्तु उदयगिरिशिखरमारोहतीत्यर्थः । एतेन सूर्यो लब्धः । ग्रहान्तराणां नियमतो रजनीक्षयानन्तरमनुदयात् । मिथ्यावासनारूपाया अविद्यायाः शरीरेऽहं-प्रत्ययरूपमिथ्याज्ञानजनकत्ववद् रजन्या अपि दोषविधया कस्यचिद् भ्रमरूपमिथ्या-ज्ञानजनकत्वाद् अविद्यात्वेन निरूपणम् ।

यद्यपि रजनीक्षयानन्तरं पूर्वसन्ध्योदयः, न तु पूर्वसन्ध्योदयहेतुकस्तत्परतो वा रजनीक्षय इति हेतुपञ्चमी **दिक्परलक्षणा** वा पञ्चमी न सम्भवति, तथापि रजनीक्षये सति सन्ध्योदयाद् इति योजना । तथा च दिक्परलक्षणैव पञ्चमी ।

सन्ध्या च न रात्रेर्भागविशेषः, किन्तु तदतिरिक्तैवेति वक्ष्यमाणत्वान्न रजनीक्षयानन्तरं सन्ध्योदयोऽनुपपन्नः। सन्ध्योदयस्य रजनीक्षयज्ञप्तिहेतुतया ज्ञाप्यत्वमेव पञ्चम्यर्थं इति यथाश्रुतान्वयोऽपि साधीयान् इत्यस्मत्**पितामहचरणाः**।

**तस्मै** किम्भूताय, कस्मैचिद् विशिष्यानिर्वचनीयगुणग्रामाय। पुनः किम्भूताय, **विश्वतस्त्विषे** विश्वतो विश्वस्मिन् त्विट् दीप्तिर्यस्येत्यर्थः।

**यतो द्रव्यं गुणाः कर्म तथा जातिः परापरा।**
**विशेषाः समवायो वा तमीश्वरमुपास्महे॥ २॥**

सूर्यनमस्काररूपं मङ्गलं निबध्य कृष्णनमस्काररूपं मङ्गलं निबध्नाति **यत** इत्यादि। तमीश्वरमुपास्महे नमस्कुर्महे। तं कमित्याकाङ्क्षायामाह यत इति। यस्मादीश्वरादित्यर्थः। परा जातिः सत्ता तदितरा जातिरपरा, विशेषाः, समवायश्च ज्ञायन्त इति शेषः। तेन जात्यादीनां नित्यत्वेऽपि न क्षतिः।

**प्रकाशकृतस्तु** 'कर्मे'त्यन्तस्य जायन्त इति शेषः। 'तथा' इति यस्मादीश्वरादिति सम्बध्यते। 'समवायो वा' इत्यन्तस्य च ज्ञायन्त इति शेष इत्याहुः।

**अर्थानां प्रविवेचनाय जगतामन्तस्तमःशान्तये**
**सन्मार्गस्य विलोकनाय गतये लोकस्य यात्रार्थिनः।**
**तत्तत्तामसभूतभीतय इमां विद्यावतां प्रीतये**
**व्यातेने किरणावलीमुदयनः सत्तर्कतेजोमयीम्॥३॥**

इदानीं प्रेक्षावत्प्रवृत्तये शास्त्रस्य प्रयोजनमाह **अर्थानामिति**। उदयनः उदयनाचार्यः। किरणावलीम् किरणावलीनाम्नीं ग्रन्थानुपूर्वीं व्यातेने। तत् किमर्थम् तदाह अर्थानां प्रविवेचनाय, सन्मार्गस्य विलोकनाय, तत्तत्तामसभूतभीतये, विद्यावतां प्रीतये चेति।

अर्थानाम् द्रव्यादिपदार्थानां प्रविवेचनाय इतरभेदज्ञानाय, सन्मार्गस्य मोक्षभूमेरात्मनो यः सदुपायः सत्प्रमाणं तस्य विलोकनाय प्रकृष्टज्ञानाय, ते ते तामसा भूतास्तमोगुणप्रधानाः प्राणिनो नास्तिकास्तेषां भीत्यै।

अर्थानां प्रविवेचनं किमर्थम् तदाह **जगतामिति**। अन्तस्तमो मिथ्याज्ञानं तच्छान्तये तत्प्रतिबन्धाय। एतदेव किमर्थम् तदाह **गतय इति**। यात्रार्थिनो मोक्षार्थिनो गतये मोक्षप्राप्तये।

**अन्ये तु** साक्षात् परम्परया षडेव स्वातन्त्र्येण ग्रन्थविस्तरे प्रयोजनानीत्याहुः।

**केचित्तु** अर्थविवेचनं किमर्थम् तदाह जगतामिति। तदेव किमर्थम् तदाह सन्मार्गस्येति। तदेव किमर्थं तदाह गतय इति। तत्तत्तामसेत्यादिद्वयन्तु स्वातन्त्र्येण

फलमित्याहुः । तदसत्, प्रमाणविलोकनस्य तमःशान्त्यजन्यत्वात्, मोक्षप्राप्तेः प्रमाणज्ञानाजन्यत्वाच्च ।

किरणावलीं किम्भूतां **सत्तर्कतेजोमयीम्।** सत्तर्क एव तेजस्तत्प्रतिपादिकाम् । सूर्यपक्षे ऊर्ध्वमयनं गमनं यस्येति व्युत्पत्त्या उदयनः सूर्यः । किरणावलीं किरणसमूहम् । अर्थानां घटपटादीनां विवेचनाय साक्षात्काराय । जगतामित्यशेषभुवनानामित्यर्थः । अन्तस्तमो गृहाभ्यन्तर्वर्ति तमः । तदेव किमर्थं तदाह सन्मार्गस्येति । सन्मार्गः श्रेष्ठं वर्त्म । तदेव किमर्थं तदाह गतय इति । यात्रार्थिनो गमनार्थिनो गतये गमनाय । तत्तत्तामसभूतभीतय इति । तामसास्तमोगुणप्रधानास्तेषां भीत्यै । विद्यावतां वेदाध्ययनशालिनां सूर्योदये सति वेदाध्ययनात् प्रीतये । किरणावलीं किम्भूताम् ? सत्तर्कतेजोमयीं, सत् श्रेष्ठं तर्को ज्ञानं यस्मादेवम्भूतं यत्तेजः प्रभारूपं तद्वतीमित्यर्थः ।

ननु 'व्यातेने' इत्यत्र कथं परोक्षा विभक्तिः ? कर्तृपरोक्ष एव तस्याः साधुत्वादिति चेन्न, कर्त्रपरोक्षेऽपि लिटः साधुत्वादिति **वर्धमानोपाध्यायाः ।**

आख्यातिकप्रतिरूपकोऽव्ययो वा व्यातेने इति । यथा—"चक्रे सुबन्धुः सुजनैकबन्धुः" इत्यत्र चक्रे इति निपातः । अन्यथा तत्रापि कर्तृपरोक्षत्वेन परोक्षविभक्तेरसम्भवात् **इत्यपरे । केचित्तु** नायमाचार्यस्य श्लोकः, किन्तु तच्छिष्यस्येति समादधुः ।

**अतिविरसमसारं मानवार्ताविहीनं**
**प्रविततबहुबेलं प्रक्रियाजालदुःस्थम् ।**
**उदधिसममतन्त्रं तन्त्रमेतद् वदन्ति**
**प्रखलजडधियो ये तेऽनुकम्प्यन्त एते ।। ४ ।।**

**अतिविरसमिति** । एतत् तन्त्रं शास्त्रम् । उदधिसमम् अतन्त्रम्, उदधिसमम् असम्यक्शास्त्रम् । उदधिर्यथा असम्यक् तथेदं वैशेषिकशास्त्रमपि असम्यग् इति ये **प्रखलजडधियः** प्रकर्षेण खला जडधियस्ते वदन्ति । एत **अनुकम्प्यन्त** इत्यन्वयः । उदधिसदृशासम्यक्त्वे हेतुगर्भविशेषणान्याह—**अतिविरसमित्यादि** । समुद्रो यथा अतिविरसस्तथेदमपि अतिविरसमित्यर्थः । एवं सर्वत्र ।

ग्रन्थपक्षे—अतिशयेन विगता रसाः शृङ्गारादयो यस्मात् तदतिविरसम् ।

समुद्रपक्षे—अतिक्रान्ता वयः पक्षिणो यस्माद् एतादृशो रसः पानीयं यस्य, लवणाकारत्वात् ।

ग्रन्थपक्षे—असारं सारः प्रयोजनं तच्छून्यम्, मोक्षस्य तुल्यायव्ययत्वेनाप्रयोजनत्वात् ।

समुद्रपक्षे—सारो धनं तच्छून्यम् ।

**मानेति**—ग्रन्थपक्षे—मानवार्तया प्रमाणसङ्कलनेन शास्त्रान्तरापेक्षया हीनम्। प्रत्यक्षानुमानयोरेवाङ्गीकारादिति भावः।

समुद्रपक्षे—मानम् इयत्ता तत्सङ्कलनेन हीनमपरिमितमित्यर्थः। मानवस्य मनुष्यस्य आर्त्तम् आर्तिः पीडा सा अविहीना अत्यन्तलवणजलपानादिना यस्मादित्यर्थ इत्यस्मत्**पितामहचरणाः**।

**प्रविततेति**। ग्रन्थपक्षे—प्रवितता विस्तीर्णा बहुवेला बहुक्षणा या प्रक्रिया सैव जालम् आनायः, तेन दुःस्थं, दुरधिगमत्वाद् दुर्गममित्यर्थः। तस्या जालं समूहस्तेन दुःस्थमिति वार्थः।

समुद्रपक्षे—प्रवितता प्रकर्षेण वितीर्णा या बहुबेला प्रक्रिया अतिशयिता प्रक्रिया अतिशयितं कर्म तज्जालेन तत्समूहेन दुःस्थमित्यर्थः। समुद्रस्य महावराहक्षुरक्षोभसुरासुरप्रमथनरामशरानलदाहादिनातिदुःस्थत्वादिति भावः।

यद्वा उदधिसममिति तन्त्रस्य विशेषणम्। तथा च उदधिसदृशमेतच्छात्रं ये प्रखलजडधियोऽसम्यक् शास्त्रं वदन्ति, त एते अनेन ग्रन्थेनानुकम्प्यन्त इति योजना। उदधिसादृश्यं सम्यक्त्वमादाय। उदधिसदृशसम्यक्त्वे हेतुगर्भविशेषणमाह अतिविरसमिति।

ग्रन्थपक्षे—रसविगममतिक्रान्तं येन तदतिविरसम्। अत्र मधुरादिषड्बिधरसव्युत्पादनादिति भावः।

समुद्रपक्षे—अतिशयिता वयः पक्षिणो गरुडादयो यत्र तादृक् पानीयं यस्येत्यर्थः। असारमिति पक्षद्वय एव न सारमुत्कृष्टं यस्मादित्यर्थः। अकारो विष्णुवचनः। तेन विष्णुः सारो यत्र तमित्यर्थं इत्यस्मत्**पितामहचरणाः**।

मानेति। ग्रन्थपक्षे—मानवार्ता प्रमाणसङ्कलनम्, तेन ग्रन्थान्तरापेक्षया विहीनमित्यर्थः। शब्दादीनामतिरिक्तप्रमाणत्वस्यैवानङ्गीकारात्, न तु प्रमाणत्वस्येति भावः।

समुद्रपक्षे—तेन सह अन्यत्सादृश्यमाह—प्रविततेति।

ग्रन्थपक्षे—प्रगता विततबहुत्वेन प्रक्रियाजालस्य विततबहुक्षणा प्रक्रियासमूहस्य दुःस्थितिर्दुर्गमत्वं येनेत्यर्थः। बहुक्षणायाः प्रक्रियायाः सम्यगनेन व्युत्पादनादिति भावः।

समुद्रपक्षे—प्रविततेत्यस्य पूर्वोक्त एवार्थः। बहुवेलम् अनुवेलम्, प्रतिक्षणं सांयात्रिकाणां प्रक्रियाजालं गमनागमनसमूहस्तेन दुःस्थमित्यर्थः। एतेन परोपकारितया सम्यक्त्वमिति भावः।

**शास्त्रारम्भे सदाचारपरम्परापरिप्राप्ततया कायवाङ्मनोभिः कृतं परापरगुरुनमस्कारं शिष्यान् शिक्षयितुमादौ निबन्धाति प्रणम्येति।**

**कर्तव्यापेक्षया प्रणामस्य पूर्वकालत्वात् क्त्वानिर्देशः। भक्तिश्रद्धातिशयलक्षणः प्रकर्षः प्रशब्देन द्योत्यते।**

नन्वत्र नमस्कारानुष्ठानं तदुपनिबन्धनञ्च द्वयमप्ययुक्तं पदार्थनिरूपणस्यैवोद्देश्यत्वादित्यत आह **शास्त्रारम्भ** इति। शास्त्रारम्भप्राक्काल इत्यर्थः। शास्त्रानुकूला आद्या कृतिः शास्त्रारम्भः। **सदाचारेति**। शिष्टाचारपरम्पराभिः प्रारिप्सितग्रन्थसमाप्तिहेतुत्वेन सिद्धतयेत्यर्थः। **शिष्यान् शिक्षयितुमिति**। स्वाचारेण देवतादिप्रणामेषु शिष्याणां प्रारिप्सितसाधनताज्ञानायेत्यर्थः। **आदौ निबन्धाति** श्लोकेन प्रतिपादयति।

ननु मूले प्रणतेः कर्तव्यापेक्षया ईश्वरप्रमापेक्षया, प्रणामस्य पूर्वकालत्वादिति याजना। प्रमाणान्तर्भाविनैव शास्त्रत्वेऽपि तत्प्रतिपाद्यनमस्कारस्य शास्त्रप्राक्कालीनत्वे बाधकाभावात्। तथा च क्त्वाप्रत्यार्थस्य भगवत्प्रणामोत्तरवर्तित्वस्य पदार्थधर्मसंग्रहाभिधान एवान्वयः, न तु मुनिप्रणाम इति न व्यर्थत्वमिति भावः।

**नव्यास्तु** भाष्ये अतोऽन्वित्यस्य ईश्वरसदृशं कणादं मुनिमित्यर्थः। सादृश्यस्यापि 'अनु' शब्दार्थत्वात्। "पश्चात् सादृश्ययोरनु" इत्यमरकोषात्। तथा च प्रणामे क्त्वाप्रत्ययार्थस्यान्वयेऽपि न क्षतिरिति प्राहुः।

'क्त्वा' प्रत्ययार्थविचारश्च अस्मत्कृत**सिद्धान्तरहस्ये**ऽनुसन्धेयः।

ननु प्रणम्येत्यत्र प्रशब्दो व्यर्थः, नत्वेत्यस्यैव सम्यक्त्वादित्यत आह—**भक्तिश्रद्धातिशयेति**। अतिशयितभक्तिश्रद्धालक्षणेत्यर्थः। आराध्यत्वेन ज्ञानं भक्तिः। फलावश्यम्भावनिश्चयः श्रद्धा। भक्तित्वश्रद्धात्वे मानसत्वव्याप्यजातिविशेषाविति **वर्धमानोपाध्यायाः**। तदसत्। तादृशजात्योर्मानाभावात्। **द्योत्यत** इति। धातोस्तात्पर्यविषयत्वेन ज्ञाप्यत इत्यर्थः। तथा च 'नम्' धातोः प्रकृष्टनमस्कारे तात्पर्यग्राहकः प्रशब्द इति भावः। एतन्मते उपसर्गो द्योतकः। **कन्दलीकारमते** च स वाचकः।

अनयोः सम्यक्त्वासम्यक्त्वविचारश्च अस्मत्कृत**सिद्धान्तरहस्ये**ऽनुसन्धेयः।

**तथाभूता हि परमेश्वरनतिर्मङ्गलमावहति। कृतमङ्गलेन चारब्धं कर्म निर्विघ्नं परिसमाप्यते प्रचीयते च। आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय, तस्य च कर्तृकर्मसाधनवैगुण्यहेतुकत्वात्।**

ननु नमस्कारमात्रादेव समीहितसिद्धिसम्भवात् किं प्रकृष्टनमस्कारेणेत्यत आह—**तथाभूता हीति**। भक्तिश्रद्धारूपप्रकर्षविशिष्टा हीत्यर्थः। वैशिष्ट्यञ्च स्वाव्यवहितोत्तरकालावच्छेदेन स्वाधिकरणवृत्तित्वम्। मङ्गलं मङ्गलपदवाच्यम्।

ननु मङ्गलपदवाच्यानुष्ठानमपि निष्फलं नमस्कारादिमात्रादेव समीहितसिद्धिसम्भवादित्यत आह—**कृतमङ्गलेन चेति**। कृतमङ्गलपदवाच्येन चेत्यर्थः। **आरब्धं** शास्त्रम्। प्रचयश्च बहुकालं गुरुणा शिष्याय अध्यापनाविच्छेदः।

नन्विदमयुक्तम्, मङ्गलं विनापि प्रमत्तनास्तिकानां ग्रन्थसमाप्तेरित्यत आह— **आगमेति**। **अस्यार्थस्य** मङ्गलसमाप्त्योः कार्यकारणभावस्य। **आगममूलत्वाद्** वेदबोधितत्वात्। **व्यभिचारः** व्यतिरेकव्यभिचारः। **न दोषाय** स नास्तीत्यर्थः। आगमात् कार्यकारणभावेऽवधृते प्रमत्तनास्तिकग्रन्थसमाप्तिस्थलेऽपि तेनैव लिङ्गेन जन्मान्तरीयमङ्गलसिद्धेरिति भावः।

ननु मास्तु व्यतिरेकव्यभिचारः, तथापि **कादम्बर्यादौ** मङ्गलसत्त्वेऽपि कुतो न समाप्तिरित्यत आह—**तस्य चेति**। मङ्गलसत्त्वे समाप्त्यभावस्य चेत्यर्थः। **कर्तृकर्मेति**। कर्तृकर्मणोर्यत् साधनं मङ्गलमिति यावत्। तस्य वैकल्यहेतुकत्वादित्यर्थः। यथा सत्यामपि कारीर्यां वृष्ट्यभावः।

**केचित्तु** मङ्गलसमाप्त्योः कथं कार्यकारणभावग्रहः? प्रमत्तनास्तिकग्रन्थसमाप्तिस्थले मङ्गलव्यतिरेकव्यभिचारसंशयादित्यत आह **आगमेति**। आगमः प्रत्यक्षातिरिक्तप्रमाणं तज्जन्यत्वादित्यर्थः। अस्यार्थस्य मङ्गलसमाप्त्योः कार्यकारणभावग्रहस्य। **व्यभिचारः** व्यतिरेक व्यभिचारसंशयः। प्रत्यक्षातिरिक्तज्ञाने ग्राह्यसंशयस्य अप्रतिबन्धकत्वादिति भावः। इदमुपलक्षणं, व्यभिचारसंशयस्यासार्वत्रिकत्वाच्चेत्यपि द्रष्टव्यम्।

ननु भवतु कार्यकारणभावग्रहः, तथापि **कादम्बर्यादौ** मङ्गलसत्त्वेऽपि कुतो न समाप्तिरित्यत आह **तस्य चेती**त्याहुः।

**साद्गुण्येऽपि विघ्नहेतूनां बलीयस्त्वात्। न चैवं किमनेनेति वाच्यम्, प्रचितस्यास्यैव बलवत्तरविघ्नवारणेऽपि कारणत्वात्। नहि घनविमुक्तमुदकमेकस्तृणस्तम्बो वारयितुं न समर्थ इति तदर्थं नोपादीयते, सजातीयप्रचयसंवलितस्य तस्य शक्तत्वात्।**

ननु तथापि साङ्गेऽपि मङ्गले समाप्त्यभावो दृश्यते, स कथं स्यादित्यत आह— **साद्गुण्येऽपीति**। साङ्गत्वेऽपीत्यर्थः। विघ्नपदं समाप्त्यनुत्पादपरम्। तत्प्रयोजकानां कर्तृनिष्ठदुरदृष्टानां बलीयस्त्वाद् विजातीयत्वादित्यर्थः। तथा च साङ्गमङ्गलसत्त्वेऽपि विजातीयदुरदृष्टस्य प्रतिबन्धकतया न समाप्तिरिति भावः। **न चैवमिति**। एवं साङ्गमङ्गलसत्त्वेऽपि विजातीयदुरदृष्टसत्त्वात् समाप्त्यनुत्पादे। **किमनेनेति**। किं मङ्गलस्य समाप्तिकारणत्वेनेत्यर्थः। लाघवाद् आवश्यकविजातीयदुरदृष्टाभावमात्रस्य हेतुत्वे विघ्नाभावस्य च फलबलकल्प्यत्वेनातिप्रसङ्गविरहादिति भावः। **प्रचितस्यास्यैवेति**। विजातीयमङ्गलान्तरसमाहितस्य मङ्गलस्यैवेत्यर्थः। **बलवत्तरेति**। बलवत्तरत्वं दण्डचक्रवत् परस्परविजातीयनानामङ्गलनाश्यतावच्छेदकवैजात्याक्रान्तत्वं, तदाश्रयविघ्ननाशकारणत्वादित्यर्थः। तथा च व्यापारेण व्यापारिणो नान्यथासिद्धिरिति भावः।

यद्यपि विजातीयनानामङ्गलानामाशु विनाशितया यौगपद्यासम्भवाद् न दण्डचक्रवत् परस्परसहकारेणादृष्टनाशकत्वसम्भवः, तथापि समाप्तिमुद्दिश्य कृतप्रदक्षिणाद्यङ्गस्य कस्यचिन्मङ्गलस्यापूर्वद्वारा विघ्नध्वंसजनकत्ववदत्राप्यदृष्टद्वारा तेषां विघ्ननाशकत्वे समाप्तिरूपलौकिकित्वासम्भवः। "अलौकिकं लौकिके नाङ्गम्" इति तत्कृतसूत्रेण अदृष्टद्वारा फलजनकस्यालौकिककर्मणः लौकिकफलाजनकत्वनियमबोधनात्। अलौकिकत्वं वेदबोधितेष्टसाधनताकत्वम्। फलनिष्ठलौकिकत्वञ्च मानसेतरसाक्षात्कारविषयत्वम्। तेन यागादौ न व्यभिचारः। वृष्टि-पुत्रादिरूपलौकिकफलजनके कारीरी-पुत्रेष्ट्यादौ व्यभिचारवारणाय जनकान्तमलौकिककर्मविशेषणमिति चेन्न, तत्र स्वफलत्वं स्वकर्त्तव्यताप्रयोजकेच्छोद्देश्यत्वेन वेदबोधितत्वम्। तस्य च समाप्तावेव सत्त्वात्। 'निर्विघ्नसमाप्तिकामो मङ्गलमाचरेत्' इति शिष्टाचारानुमितश्रुत्या समाप्तावेव तथात्वबोधनात्। तत्र च विघ्नध्वंसस्यैव द्वारत्वेनादृष्टस्याद्वारत्वादिति न काप्यनुपपत्तिः।

नन्वेवं स्वनिष्ठदुरितस्य निरुक्तबलवत्त्वसंशयेन फलोपधायकतासंशयादेकस्मिन् मङ्गले कस्यापि प्रवृत्तिर्न स्यादित्यत आह—**नहीति**। **तदर्थम्**। घनमुक्तोदकवारणार्थम्। तथा च स्वरूपयोग्यताज्ञानसत्त्वे फलोपधायकतासंशयो न प्रवृत्तिविघटक इति भावः। कृतैकमङ्गलस्य बलवत्तरविघ्नध्वंसोपधायकवृत्तिकारणतावच्छेदकधर्माक्रान्तत्वात् फलानुपधायकस्यास्य स्वरूपयोग्यत्वमिति भावः।

**न च विघ्नहेतुसद्भावनिश्चयाभावात् तद्वारणे कारणमनुपादेयम्, यतस्तत्सन्देहेऽपि तदुपादानस्य न्याय्यत्वात्। अन्यथा अनुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो नाद्रियेरन्निति।**

ननु तथापि दुरितध्वंसार्थिप्रवृत्तौ दुरितनिश्चयस्य हेतुतया कथं दुरितसंशयेऽपि मङ्गले प्रवृत्तिरित्याशङ्क्य निराकरोति—**न चेति**। विघ्नः कर्मसमाप्त्यभावः। तद्धेतवो दुरितानि। तेषां सत्त्वनिश्चयाभावादित्यर्थः। **तद्वारणइति**। दुरितसंशयदशायां तन्नाशकारणे मङ्गले प्रवृत्त्यसम्भव इत्यर्थः। **तत्सन्देहेऽपि** दुरितसंशयेऽपि। **तदुपादानस्य** दुरितनाशकमङ्गलगोचरप्रयत्नस्य। **न्याय्यत्वात्** शिष्टाचारपरम्परारूपन्यायपरिप्राप्तत्वात्। **अन्यथेति**। अनिष्टध्वंसार्थिप्रवृत्तौ अनिष्टनिश्चयस्यापेक्षितत्व इत्यर्थः। **नाद्रियेरन्निति**। शत्रुनाशार्थं तेषामादरं न क्रियेरन्नित्यर्थः। इदञ्च समाधिसौकर्यादुक्तम्, वस्तुतस्तु दुरितध्वंसार्थिप्रवृत्तौ दुरितनिश्चयस्य हेतुत्वेऽपि दुरितसंशयमङ्गले समाप्त्यर्थिप्रवृत्तौ बाधकाभावादिति ध्येयम्।

**इति द्रव्यरहस्ये मङ्गलवादरहस्यम्।**

**ईश्वरमित्यनेनैव जगद्धेतुत्वे लब्धेऽपि हेतुमिति पुनर्विशेषणोपादानं प्रमाणसूचनाय । कार्यं हि हेतुना विना आत्मानमनाप्नुवद् हेतुतया कर्तारमाक्षिपति ।**

नन्वीश्वरपदस्य कार्यमात्रहेतुवाचकतया नीलघटो घट इतिवद् हेतुमीश्वरमित्यपि पुनरुक्तं निर्विशेषणहेतुपदेनापि कार्यकारणमात्रबोधनादित्यत आह **ईश्वरेति** । **जगद्धेतुत्वे** कार्यमात्रहेतुत्वे । **लब्धेऽपि** लप्स्यमानेऽपि । **प्रमाणसूचनायेति** । कार्यसामान्यरूपप्रमाणबोधतात्पर्येणेत्यर्थः । तथा च हेतुशब्दस्य कार्यसामान्यप्रमाणकपरतया कार्यसामान्यप्रमाणकं कार्यमात्रकारणं प्रणम्येत्यन्वयबोधान्न पौनरुक्त्यमिति भावः । एतच्च समाधिसौकर्यादुक्तम् ।

वस्तुतस्तु ईश्वरपदस्यात्र नित्यज्ञानादिमत्परतया न पौनरुक्त्यसम्भवोऽपीति ध्येयम् ।

ननु प्रत्यक्षादीनां चतुर्णामिव प्रमाणतया कार्यस्य कुतः प्रमाणत्वमित्यत आह— **कार्यं हीति** । **हि** यस्माद् **हेतुना विना** जन्यतासम्बन्धेन कर्तारं विना । **आत्मानमनाप्नुवत्** स्वस्मिन् तादात्म्यसम्बन्धेन अतिष्ठदिति शेषः । **हेतुतया** तादात्म्यसम्बन्धेन कर्तृव्याप्यतया । हेतुमत्तयेति पाठे हेतुमत्तया सम्बन्धेन जन्यतासम्बन्धेनेति यावत् । **आक्षिपति** अनुमापयति । तथा च अनुमानप्रमाणमध्य एवास्यान्तर्भाव इति भावः ।

**ईश्वरपदसन्निधिप्रयुक्तो वा हेतुशब्दो विशिष्ट एव श्रेयःसमधिगमनिमित्ते प्रवर्तते । प्रस्तुतशास्त्रहेतुत्वाद् वा हेतुमित्याह । स्मर्यते हि कणादो मुनिर्महेश्वरनियोगप्रसादावधिगम्य शास्त्रं प्रणीतवान् । तेन तं हेतुं प्रणम्य मया संग्रहः प्रवक्ष्यत इत्यर्थः । अत ईश्वरप्रणामादनु पश्चात् कणादनामानं मुनिं प्रणम्येत्यनुषज्यते ।**

समाधानान्तरमाह—**ईश्वरपदेति** । **विशिष्टे** विलक्षणे, असाधारण इति यावत् । **श्रेयःसमधिगमनिमित्ते** मुक्तिप्राप्तिकारणे । **प्रवर्तत** इति । प्रवृत्तिः शाब्दबोधजननम् । तथा च मुक्त्यसाधारणकारणमीश्वरं प्रणम्येत्यर्थः । 'एवं कुरु' इत्याज्ञा नियोगः । प्रकृतशास्त्रकर्तृत्वनिर्वाहकवरप्रदानं प्रसादः । 'प्रणीतवान्' इत्यनन्तरम् 'इति' शब्दः पूरणीयः । तेन स्मर्यत इत्यस्य नानन्वयः । क्वचित्तथैव पाठः । **तेनेति** । तथा चेत्यर्थः । **प्रवक्ष्यते** तथा प्रकृष्टं प्रयुज्यते । प्रयोगश्च ग्रन्थार्थानुकूलो यत्नः, यथाश्रुते संग्रहस्यापि शब्दरूपत्वाद् अनन्वयापत्तेः । **अत** इति । 'अनु'शब्दस्य सहार्थकत्वभ्रमनिरासाय **अन्विति** । मुनिं कणादञ्च प्रणम्येति समुच्चयपरत्वभ्रमनिरासाय व्याचष्टे **कणादेति** ।

**यद्यपि गुरुतमगुरुतरगुरुक्रमेण प्रणामः क्रियत इति शिष्टाचारादेव लभ्यते, तथापि शिष्यशिक्षायै क्रमो निबद्धोऽन्विति ।**

**तथा च मुनिप्रणतेः पश्चाद्भावे दर्शिते सन्निधिसिद्धमवधित्व-मीश्वरप्रणामस्येति 'अत' इति मन्दप्रयोजनमित्यपि न वाच्यम्, श्रुतिप्राप्तेऽर्थे प्रकरणादीनामनवकाशात् ।**

**गुरुतमेति ।** स्वसमानकालीनस्वसमानकर्तृकगुरुतमादिनमस्कारापूर्ववर्ती गुरुतरादिनमस्कार एवेत्यर्थः । **क्रियते** श्रमापूर्वकं क्रियते । फलदायकश्रमाजन्यकृतिविषय इति यावत् । **शिष्टाचाराबेव** शिष्टाचाराद्धेतोरेव । **लभ्यते** कणादप्रणामस्येश्वरप्रणामानन्तर्यम् अनुमानाल्लब्धुं शक्यते ।

अनुमानप्रकारश्चायम्—कणादप्रणामः स्वसमानकालीन-स्वसमानकर्तृकभगवत्प्रणामोत्तरोत्पन्नः स्वसमानकालीनभगवत्प्रणामानुकूलकृतिसमानाधिकरणशिष्टकृतिविषयगुरुतरनमस्कारत्वादिति ।

शिष्टत्वं फलसाधनताभ्रमशून्यत्वम् । अतो व्यतिक्रमकृतनमस्कारे न व्यभिचारः, तस्य निष्फलत्वादिति भावः । शिष्यो यथोक्तनियमज्ञानरहितः । तस्यानन्तर्यज्ञानायेत्यर्थः । **क्रमः** आनन्तर्यबोधकशब्दः । **निबद्धः** श्लोकघटकीकृतः ।

शङ्कते—**तथाचेति** । तथापीत्यर्थः । **पश्चाद्भावे** पश्चाद्भाविकालध्वंसाधिकरणक्षणोत्पन्नत्वे । **सन्निधिसिद्धमिति** । ईश्वरप्रणामस्यावधित्वं सन्निधिसिद्धमिति योजना । सन्निधिसिद्धं प्रकरणादेवोपस्थितम् । प्रकरणम् ईश्वरपदकणादपदयोः समभिव्याहारज्ञानम् । तस्य चोद्बोधकविधया तदुपस्थापकत्वम् । **श्रुतिप्राप्त** इति । श्रवणजन्ये ज्ञान इत्यर्थः । **प्रकरणादीनामनवकाशात्** स्वजन्योपस्थितिद्वारा प्रकरणादीनामजनकत्वात् । पदवृत्तिजन्यपदार्थोपस्थितेरेव शाब्दबोधाङ्गत्वादिति भावः ।

**अथवा यतः शुश्रूषवः श्रेयोऽर्थिनः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसेदुः,अतो वक्ष्यत इत्यनेन सम्बद्ध्यते । अन्यथा अरण्यरुदितं स्यादित्यपि शिष्यशिक्षायै । एवं हि शिक्षिते शिष्या अपि तथा कुर्युः । तथा चानवच्छिन्नसम्प्रदायं वीर्यवत्तरञ्च शास्त्रं स्यादिति । येन विद्यैवाह—"असूयकायानृजवे जडाय न मां ब्रूया अवीर्यवती तथा स्याम्" इति । एतेन सौत्रमप्यतःपदं व्याख्यातं स्यात् ।**

**श्रेयोऽर्थिनः** मुक्त्यर्थिनः । **अनसूयकाः** परगुणासहिष्णुकभिन्नाः । **उपसेदुः** जिज्ञासवः । **अन्यथा** तादृशशिष्याणां जिज्ञासाविरहदशायामपि अभिधाने । **अरण्यरुदितं स्यात्** तदभिधानं निरर्थकं स्यात् ।

ननु तथापि तत्कथनमनर्थकमेवेत्यत आह—**इत्यपीति** । **शिष्येति** यथोक्तशिष्यस्य जिज्ञासादशायामेव पदार्थधर्मसंग्रहो वक्तव्यो नान्यदेति शिष्यज्ञानार्थमित्यर्थः ।

ननु तादृशस्य शिष्यज्ञानस्यैव किं प्रयोजनमित्यत आह—**एवमिति**। **शिक्षिते** ज्ञाते। **तथा कुर्युः**। तादृशान्तेवासिनां जिज्ञासादशायामेव पदार्थधर्मसंग्रहरूपमेतच्छास्त्रं वदेयुः। ननु तस्यैव किं प्रयोजनमित्यत आह—**तथा चेति**। **वीर्यवत्तरं** तात्पर्यविषयीभूतार्थप्रभावस्तेन तात्पर्यविषयीभूत एवार्थः शिष्यान् बोधयितव्यः। तथा च परगुणासहिष्णुकायोक्ते तत्प्रचारो न भविष्यतीति भावः। **असूयकाय** परगुणासहिष्णुकाय। **अनृजवे** कुटिलाय। **सौत्रमपीति** "अथातो धर्मं व्याख्यास्यामः" इति कणादसूत्रस्थमपीत्यर्थः।

**पदार्थधर्मसंग्रह इति। पदार्था द्रव्यादयस्तेषां धर्मास्त एव परस्परं विशेषणीभूतास्तेऽनेन संगृह्यन्ते। शास्त्रे नानास्थानेषु वितता एकत्र संकलय्य कथ्यन्त इति संग्रहः। स प्रकृष्टो वक्ष्यते प्रकरणशुद्धेः संग्रहपदेन दर्शितत्वात्। वैशद्यं लघुता कृत्स्नता च प्रकर्षः प्रशब्देन द्योत्यते, सूत्रे वैशद्याभावाद्, भाष्यस्यातिविस्तरत्वात्, प्रकरणादीनाञ्चैकदेशत्वात्। एतेनाभिधेयं दर्शितं भवति। न च तत्प्रतीतावपि प्रेक्षावान् प्रयोजनं विना प्रवर्त्तत इति तमाह महोदय इति। महानुदय उद्बोधस्तत्त्वज्ञानमिति यावत्। सोऽस्माद् भवतीति महोदयः संग्रहः।**

पदार्थपदस्य पदार्थसामान्यपरत्वे अग्रे विभागस्य न्यूनत्वापत्तिः, अभावस्याविभजनादित्यतो व्याचष्टे **पदार्था** इति। तथा च पदार्थपदं भावरूपपदार्थपरमिति भावः। तद्धर्माणां तदतिरिक्तताभ्रमनिरासाय व्याचष्टे **तेषामिति**। परस्परं विशेषणीभूतास्त एवेति योजना। **विशेषणीभूताः** सम्बन्धित्वापन्नाः। **शास्त्रे** सूत्रे। **नानास्थानेषु वितता** उद्देशक्रमातिरिक्तक्रमेण निरूपिताः। येन क्रमेणोद्देशस्तेनानिरूपिता इति यावत्। **एकत्रेति** उद्देशक्रमेणैव। **प्रकृष्टो वक्ष्यते** स्वल्पशब्देन कथ्यन्त इत्यर्थः। **प्रकरणशुद्धेरिति** क्रमकथनत्वस्येत्यर्थः। **वैशद्यं** झटित्यर्थप्रत्यायकत्वम्। **लघुत्वम्** इतरग्रन्थापेक्षया स्वल्पशब्दत्वम्। **कृत्स्नता** द्रव्यादिसकलपदार्थप्रतिपादकता। **प्रकरणादीनाञ्च** शास्त्रैकदेशादीनाञ्च। **एकदेशविषयत्वात्** द्रव्यादिप्रत्येकमात्रप्रतिपादकत्वात्। **प्रेक्षावान्** कामादिरूपप्रयोजनसाधनत्वज्ञानवान्। **प्रयोजनं विना** तदितरप्रयोजनसाधनताज्ञानं विना। उदयपदस्य उदयगिरिशिखरारोहणपरत्वभ्रमनिरासाय व्याचष्टे **महानिति**। **उद्बोधो** ज्ञानम्। तच्च तत्त्वज्ञानमेव। तद्विषयकस्यैव महद्गुरुत्वादिति भावः। नन्वेवं तस्य संग्रहेण सममभेदान्वयासम्भवः। संग्रहस्य शब्दरूपत्वादित्यत आह **सोऽस्मादिति**।

**ततः किम्? नह्ययं पुरुषार्थः। के ते पदार्थाः, के च तेषां धर्मा इत्यत आह द्रव्येति। के पदार्था इत्यपेक्षायां पदार्था द्रव्यादयः। के धर्मा**

**इत्यपेक्षायां साधर्म्यरूपा वैधर्म्यरूपा अनुवृत्तव्यावृत्तरूपा इत्यर्थः। तेषामुद्बोधः कथं पुरुषार्थ इत्यत्र तत्त्वज्ञानं निःश्रेयसहेतुरिति। तत्त्वमनारोपितं रूपम्। तच्च साधर्म्यवैधर्म्याभ्यामेव विविच्यते। साक्षादपि हि दृश्यमाना अत्यन्तासंकीर्णाः स्थान्वादयो वक्रकोटरादिभिः पुरुषादिभ्यो विविच्यन्ते, न त्वन्यथा। किं पुनरतीन्द्रिया मिथो विमिश्रीभूताः कालाकाशादयः शरीरात्मादयो वेति। एतेन पदार्था एव प्रधानतयैवोद्दिष्टा वेदितव्याः।**

**ततः** महोदयजनकत्वेन। अयं महोदयः। **पुरुषार्थः** पुरुषार्थभ्रमानधीनपुरुषेच्छाविषयः। सुखदुःखाभावतत्साधनानामेव तथात्वादिति भावः। **पदार्थाः** भावाः। एवमग्रेऽपि। **इत्यपेक्षायाम्** इति जिज्ञासायाम्। **अनुवृत्तेति**। तद्धर्मव्याप्ततद्धर्मावच्छिन्नेतरभेदसमव्याप्तधर्मरूपा इत्यर्थः। तथा च तद्धर्मसमव्याप्तो धर्मस्तद्धर्मावच्छिन्नस्य साधर्म्यम्। तद्धर्मावच्छिन्नेतरभेदसमव्याप्तो धर्मस्तद्धर्मावच्छिन्नस्य वैधर्म्यम्। पदार्थयोरभेदेऽपि पदार्थतावच्छेदकयोर्भेदाच्च द्वन्द्व इति भावः। **अनारोपितं रूपम्** तद्धर्मावच्छेदेन अनारोपितो भेदः। तद्धर्मव्यापकीभूतो भेद इति यावत्। तथा च तद्धर्मव्यापकीभूतो भेदस्तद्धर्मावच्छिन्नस्य तत्त्वमिति भावः।

**प्रकाशानुयायिनस्तु** 'तत्त्वमनारोपितं रूप'मित्यस्य स्वावच्छिन्नप्रतियोगिताकान्योन्याभावासमानाधिकरणो धर्मस्तद्धर्मावच्छिन्नस्य स्वाश्रयस्य तत्त्वमित्यर्थः। तथा च तद्धर्मावच्छिन्नप्रतियोगिताकान्योन्याभावासमानाधिकरणो धर्मस्तद्धर्मावच्छिन्नस्य तत्त्वमिति फलितम्। न चैवं प्रमेयत्वाद्यतिप्रसक्तो धर्मस्तद्धर्मावच्छिन्नस्य तत्त्वं न स्यादिति वाच्यम्, इष्टत्वात्। तद्धर्मसमवृत्तितद्धर्मान्यूनवृत्तिधर्मयोरेव तद्धर्मावच्छिन्नस्य तत्त्वपदार्थत्वाभ्युपगमात्। अन्यथा तद्धर्मसमानाधिकरणो धर्मस्तद्धर्मावच्छिन्नस्य तत्त्वमित्यस्यैव सम्यक्त्वात्। न च तद्धर्मान्यूनवृत्तिधर्मस्य तद्धर्मावच्छिन्नतत्त्वरूपत्वे यथोक्तसाधर्म्यवैधर्म्ययोः कथं तदनुमापकत्वं व्यभिचारादिति वाच्यम्। निखिलतत्त्वानुमापकत्वं साधर्म्यवैधर्म्ययोर्भाष्यकृता नाभिहितम्, अपि तु तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाधर्म्यवैधर्म्यहेतुकतद्धर्मावच्छिन्नतत्त्वज्ञानं निःश्रेयसहेतुरित्येवाभिहितम्। तस्य साधर्म्यवैधर्म्यहेतुकतद्धर्मसमवृत्तित्वानुमानमादायैवोपपन्नत्वादित्याहुः।

तादृशतत्त्वज्ञाने साधर्म्यादिरुपयोगं व्युत्पादयति—**तच्चेति**। **विविच्यते** संशयं छेत्तुं निश्चीयते। **अत्यन्तासङ्कीर्णा** अन्योन्याभावरूपपुरुषादिभेदाश्रयाः। **वक्रकोटरादिभिः** स्थान्वादिसाधर्म्यवैधर्म्यरूपैर्वक्रकोटरवत्त्वादिभिः। **विविच्यन्ते** संशयाद्युत्तरं परस्परं विभिन्नत्वेन निश्चीयन्ते इत्यनुषज्यते। न च **"कालाकाशादय"** इत्यनेनैव

शरीरात्मादीनामपि लाभात् तेषां विशिष्य पृथगुपादानं कथमिति वाच्यम्, स्वात्मनिष्ठशरीरादिभिन्नत्वज्ञानस्यैव मुक्त्युपयोगित्वेन प्रकृतशास्त्रे कर्तव्यतया विशिष्य पृथगुपादानात्। इत्थञ्च **"शरीरात्मादयो वा"** इत्यस्यानु शरीरादयो वेति योजना।

ननु "पदार्थानां तत्त्वज्ञानं निःश्रेयसहेतुः" इति भाष्यलिखितसूत्रे 'पदार्थाना'-मित्यस्य तत्त्व एव विशेषणत्वेन ज्ञानद्वयात् तत्त्वज्ञानमात्रस्य हेतुत्वलाभादग्रे द्रव्यादिविशेष्यकेतरभेदानुमानप्रदर्शनं किमर्थमित्यत आह—**एतेनेति**। भाष्यलिखितसूत्रेणेति शेषः। **'पदार्था एव'** इत्येवकारो भिन्नक्रमे। पदार्थाः **प्रधानतयैव** ज्ञानविशेष्यतयैवेत्यर्थः। तथा च 'पदार्थानाम्' इत्यत्र षष्ठ्यर्थो विशेष्यत्वम्। तस्य च ज्ञानेऽन्वय इति भावः।

**अभावस्तु स्वरूपवानपि पृथङ् नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वात्, न तु तुच्छत्वात्। उत्पत्तिविनाशचिन्तायां प्रागभावध्वंसाभावयोर्वैधर्म्ये चेतरेतराभावात्यन्ताभावयोस्तत्र तत्र निदर्शयिष्यमाणत्वात्। तेन द्रव्यादीनां साधर्म्यवैधर्म्याभ्यां तत्त्वं प्रतिपादयन् संग्रहो निःश्रेयसं साधयति यतोऽतः प्रेक्षावतामुपादेय इति तात्पर्यम्।**

ननु वैशेषिकसूत्रकृता अभावस्याविभजनाद् भावातिरिक्तोऽभावोऽलीक इति **माध्यमिका** वदन्ति। तन्मतं निरस्यति—**अभावस्त्विति**। **स्वरूपवानपीति** प्रामाणिकोऽपीत्यर्थः। **पृथङ् नोद्दिष्ट** इति। अतद्व्यावृत्तत्वमेव आचार्यनये द्रव्यत्वादिवैशिष्ट्यतया द्रव्यादिपदेनैव अभावस्याप्युद्दिष्टत्वादुक्तं पृथगिति। न विभज्योक्त इत्यर्थः। **प्रतियोगिनिरूपणेति**। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानजन्यलौकिकसाक्षात्कारविषयत्वादित्यर्थः।

न चैवं संयोगादेरप्यविभागापत्तिरिति वाच्यम्, संयोगादेः सम्बन्धिसाक्षात्काराधीनसाक्षात्कारविषयत्वेऽपि प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानाधीनसाक्षात्काराविषयत्वात्। स्वरूपसम्बन्धविशेषात्मकस्य प्रतियोगित्वस्य अवच्छेदकत्वस्य वा संयोगादेरभावादिति भावः।

वस्तुतस्तु 'स्वतन्त्रेच्छस्य' इति न्यायेन विवक्षादिहेत्वभावादेव नाभावो विभक्त इत्येव तत्त्वम्। **न तु तुच्छत्वादिति**। न तु अप्रामाणिकत्वादित्यर्थः। **वैधर्म्ये च** वैधर्म्यप्रकरणे च। **तत्र तत्रेति** शास्त्रे इति शेषः। नहि तावता मुमुक्षूणां तत्त्वज्ञाने प्रवृत्तिः। संग्रहार्थे शास्त्रे प्रवृत्तिः कथं स्यात्? तस्य मुक्त्यसाधनत्वादित्यत आह **तेनेति**। तथा चेत्यर्थः। **साधयति** प्रयोजयति। **प्रेक्षावतां** मुमुक्षूणाम्। **उपादेयः** प्रवृत्तिसाधतान्ज्ञाने। इह तत्साधनताज्ञानाच्च शास्त्रे प्रवृत्तिरिति भावः।

**निःश्रेयसं पुनर्दुःखनिवृत्तिरात्यन्तिकी। तत्र च वादिनामविवाद एव। नह्यपवृक्तस्य दुःखं प्रत्यापद्यत इति कश्चिदभ्युपैति।**

यद्यपि मुक्त्यपरनामकं निःश्रेयसं पञ्चविधम्—सालोक्य-सारूप्य-सार्ष्टि-सामीप्य-सायुज्यभेदात्। भगवता सह एकस्मिन् लोके वैकुण्ठाख्यस्थानेऽवस्थानं सालोक्यम्। सारूप्यं भगवता सह समानरूपता। चतुर्भुज-श्रीवत्स-वनमाला-लक्ष्मी-सरस्वतीयुक्तशरीरावच्छिन्नत्वमिति यावत्। वैकुण्ठवासिनां सर्वेषां चतुर्भुजत्वेऽपि श्रीवत्सयुक्तत्वादिविरहात्। सार्ष्टिः भगवदैश्वर्यसमानैश्वर्यम्। सामीप्यं भगवतोऽत्यन्त-समीपेऽवस्थानम्। सायुज्यञ्च निर्वाणम्। न्यायवैशेषिकमते आत्यन्तिकदुःखनिवृत्तिः।

सालोक्यादिदशायामपि दुःखनिवृत्तिसत्त्वेऽपि न सा आत्यन्तिकी। तस्य क्षयितया तदनन्तरं चरमदुःखस्योत्पाददिति न तद्दशायामतिव्याप्तिः। तथापि तत्र प्रकृते सालोक्यादिचतुष्टयं न निःश्रेयसपदार्थः, तस्य तत्त्वज्ञानवत् स्वतः पुरुषार्थ-त्वाभावादित्यभिप्रायेण सायुज्यमेव तदर्थमाह **निःश्रेयसं पुनरिति**। दुःखमुपक्रम्य 'तदत्यन्तविमोक्षोऽपवर्ग' इति श्रुतेरिति भावः। अत्र दुःखनिवृत्तिमात्रं संसारिता-दशायामप्यस्तीत्यत उक्तम् **आत्यन्तिकीति**।

ननु किं नामात्यन्तिकत्वम्। न चात्यन्तिकत्वमत्यन्ताभावरूपत्वं निवृत्तिपदञ्चा-भावपरमिति वाच्यम्, तथा सति नित्यत्वेन तत्त्वज्ञानासाध्यत्वापत्तेः। संसारिता-दशायामपि मुक्त्यापत्तेश्च। न च निवृत्तिपदं ध्वंसपरम्, आत्यन्तिकत्वञ्च दुःखप्राग-भावाधिकरणक्षणावृत्तित्वम्, इदानीन्तनमुक्तावव्याप्त्यापत्तेः। तस्याः पुरुषान्तरीय-दुःखतत्प्रागभावाधिकरणक्षणवृत्तित्वात्।

अथ निवृत्तिपदं ध्वंसपरमेव। आत्यन्तिकत्वञ्च स्वसमानाधिकरणक्षणा-वृत्तित्वम्। इदानीन्तनमुक्तावव्याप्तिवारणाय असमानाधिकरणत्वं प्रागभावविशेषणं दुःखविशेषणं वा। दुःखप्रागभावसमानाधिकरणत्वमात्रोक्तावसम्भवः। सर्वस्या एवातोतदुःखप्रागभावाधिकरणात्मवृत्तित्वादिति चेन्न, चरमदुःखसमानकालोत्पन्नो-पान्त्यदुःखध्वंसेऽतिव्याप्त्यापत्तेरिति।

मैवम्, निवृत्तिपदं ध्वंसपरमेव। आत्यन्तिकत्वञ्च स्वसमानाधिकरणदुःखा-धिकरणक्षणवृत्ति यद् यत् तदन्यत्वमित्यभ्युपगमात्। भेदकूटप्रवेशाच्च नाननुगमः।

**अन्ये तु** निवृत्तिपदं ध्वंसपरमेव। आत्यन्तिकत्वञ्च स्वीयदुःखत्वरूपसामान्य-धर्मावच्छिन्नप्रतियोगिताकत्वम्। तथा च तत्पुरुषीयदुःखत्वावच्छिन्नप्रतियोगिताक-दुःखध्वंसस्तत्पुरुषीयमुक्तिरिति फलितम्। दुःखपदञ्च स्वरूपकथनम्। यत् किञ्चिद् विशेषवति तत्प्रागभाववति च सामान्यध्वंसाभ्युपगमेऽपि यत्र विशेषान्तरं नोत्पद्यते, तत्र सामान्यध्वंसस्याप्यभ्युपगमात्। न चैवमतीतव्यक्तीनामपि तत्प्रतियोगितया

सत्त्वेन ध्वंसत्वेन कार्यकारणभावस्य व्यभिचारापत्तिः। भावत्वविशिष्टप्रतियोगितादात्म्योभयघटितसामानाधिकरण्यस्य तत्र प्रत्यासत्तित्वादिति वाच्यम्। अतीतव्यक्तिषु तस्य प्रतियोगितासम्बन्धेन स्थितावपि तत्र तेन सम्बन्धेन तस्योत्पत्त्यभावात्। न च तथापि ध्वंसस्य सामान्याभावत्वे मानाभाव इति वाच्यम्, मुक्तिरूपधर्मिग्राहकप्रमाणेनैव प्रकृते तत्सिद्धेरित्याहुः। तदसत्, अननुगमात्।

**प्राञ्चस्तु** आत्यन्तिकत्वं स्वसमानाधिकरण-दुःखप्रागभावाधिकरणक्षणवृत्ति यत् तदन्यप्रतियोगिकत्वम्। न चैवं दुःखपदवैयर्थ्यम्, चरमदुःखसमकालोत्पन्ने मुक्तान्यमनःसंयोगादिप्रतियोगिकत्वांशे घटादिध्वंसे चातिव्याप्तिवारणाय तदुपादानात्। न च सोऽपि ध्वंसो मुक्तिरेवेति वाच्यम्, मनोघटादेरपि मुक्तत्वापत्तेः। स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणवृत्तिभिन्नं यत् दुःखं तत्प्रतियोगिको ध्वंसो मोक्ष इति निष्कर्षः। उपान्त्यदुःखन्तु न तथा। तद्ध्वंसेऽतिव्याप्तिः। अत एव समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसोऽपवर्ग इति **अनुमानपरिच्छेदे मुक्तिवादे मणिकृतो महाशयाः**। अत्रापि वृत्त्यन्तं दुःखविशेषणम् न तु ध्वंसविशेषणम्। उपान्त्यदुःखध्वंसेऽतिव्याप्तेरित्याहुः। तदसत्, गौरवात्, प्रागभावानभ्युपगमे अप्रसिद्धिप्रसङ्गाच्च।

**नव्यास्तु** नात्यन्तिकत्वं चरमप्रतियोगिकत्वम्। चरमत्वञ्च लाघवात् तत्त्वज्ञाननाश्यतावच्छेदकतया सिद्धः स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणवृत्तिदुःखमात्रनिष्ठो दुःखत्वव्याप्यो जातिविशेषः। **मणिकारलक्षणे**ऽपि दुःखविशेषणीभूतं वृत्त्यन्तं जातिविशेषपरिचायकमेव। न च खड्गाभिघातादिजन्यतावच्छेदकजातिभिः सह साङ्कर्यमिति वाच्यम्, तस्य तादृशजातीनां विरुद्धत्वात्। केवलं तत्त्वज्ञानस्यैव तत्र तत्र जनकत्वात्, तत्त्वज्ञानेन चरमदुःखाद्युत्पाद्य तद्ध्वंसनात्, उत्कटेच्छाविषयत्वात् तत्साधनत्वेन प्रतियोगिनो दुःखस्याप्युपादेयत्वात्। न चैवं पृथग् दुःखपदवैयर्थ्यम् आत्यन्तिकी निवृत्तिरित्यस्यैव सम्यक्त्वादिति वाच्यम्, दुःखत्वव्याप्यजातिरिति बोधनाय तदुपादानादिति प्राहुः।

**तत्र चेति**। मुक्तिदशायां तादृशदुःखनिवृत्तिरस्तीत्यत्र न विवाद इत्यर्थः। आत्यन्तिकदुःखनिवृत्तिर्मुक्तिरित्यत्र न विवाद इत्यर्थः। नित्यसुखाभिव्यक्त्यादीनां मुक्तित्ववादीनामेव तत्र विवादात्।

यद्यपि न विवादोऽविवाद इति नञ्-तत्पुरुषाभ्युपगमे विवादभिन्न एव लक्ष्यते। न तु विवादात्यन्ताभाव इति। अव्ययीभावाभ्युपगमे नपुंसकलिङ्गतापत्तिः। तथापि अविवाद इत्यसमस्त एव नञ्समानार्थको शब्दोऽत्यन्ताभाववाचकः। तथा चात्र विवादात्यन्ताभावलाभ इति केचित्। वस्तुतस्तु पर्युदास 'नञ्' एवात्यन्ताभाववाची। नञापि क्वचित् तत्पुरुषसमासः साधुः। अन्यथा 'तदुभयाविरोध' इत्यादिप्रयोगानु-

पपत्तेः। तत्रासमस्तस्यापि दुर्वचत्वात्। तथा च नञ्तत्पुरुष एवात्रेति न काप्यनुपपत्तिः। विवादाभावमेव स्पष्टयति नहीति। **प्रत्यापद्यते** पुनरुत्पद्यते।

**केवलमात्मापि दुःखहेतुत्वान्निवर्त्तयितव्यः शरीरादिवदिति ये वदन्ति तेषां यद्यात्मा नास्तीति सत्यं किं निवर्तयितव्यम्? अत्यन्तासतो नित्यनिवृत्तत्वात्। अथास्ति तथापि किं निवर्तनीयम्। नित्यत्वेन तन्निवृत्तेरशक्यत्वात्।**

'दुःखत्वादात्मापि तत्त्वज्ञानेन नश्येत्' इति **सौगता** वदन्ति। तन्मतमाशङ्क्य निराकरोति **केवलमात्मापी**ति। शरीराद्यनवच्छिन्नात्मापीत्यर्थः। **निवर्त्ततितव्यः** तत्त्वज्ञानेन नाश्यः। **यद्यात्मा नास्तीति सत्यम्**। यद्यात्मत्वम् आत्मनिष्ठान्योन्याभावप्रतियोगितावच्छेदकमित्यर्थः। **किं निवर्तनीयमि**ति। कथमात्मा तत्त्वज्ञानेन नाशनीय इत्यर्थः। **अत्यन्ते**ति। ध्वंसप्रतियोगित्वस्य सत्त्वव्याप्यत्वादित्यर्थः। **किम्**। कथम्। **नित्यत्वेने**ति। धर्मिग्राहकप्रमाणेन तस्य नित्यत्वसिद्धेरिति भावः।

**अथ ज्ञानस्वभाव एवासौ निवर्तनीय इति मतम्। अनुमतमेतत्। दग्धेन्धनानलवदुपशमो मोक्ष इति वक्ष्यमाणत्वात्। तस्मादतिरिक्त आत्मनि प्रमाणं वक्तव्यमित्यवशिष्यते। तद् वक्ष्यामः।**

**ज्ञानस्वभाव एवे**ति। ज्ञानं द्विविधम् प्रवृत्तिविज्ञानम् आलयविज्ञानञ्चेति। तत्र अयं घटः, अयं पट इत्यादि घटपटादिविषयकं ज्ञानं प्रवृत्तिविज्ञानम्। अहमित्याकारकं स्वविषयकं ज्ञानमालयविज्ञानम् तदेवात्मेत्यर्थः। तच्च आलयविज्ञानं प्रवृत्तिविज्ञानस्योपादानम्। अत एवालय इत्युच्यते। **कस्यचिन्मते तु** विज्ञानमुत्पाद्यैव आलयविज्ञानम् न तु तदुपादानमिति मतभेदो द्रष्टव्यः। **अनुमतमेतदि**ति। यदि मुक्तिदशायां ज्ञानस्यात्यन्तोच्छेद इत्युच्यते, तदानीमिष्टापत्तिरित्यर्थः। ननु भवन्मते मुक्तिदशायां तत्त्वज्ञानस्यैव सत्त्वात् कथमिष्टापत्तिरित्यत आह—**दग्धेन्धने**ति। यथा दग्धेन्धननाशदशायामनलस्य नाशस्तथा चरमदुःखनाशकाले तत्त्वज्ञानस्यापि नाश इत्यस्माकमप्यभ्युपगमादित्यर्थः।

नन्वेवं ज्ञानरूपस्यात्मनो मोक्षदशायां नाश इति नः समीहितं सिद्धमेव। नच 'आत्मा ज्ञानवान्' इत्यादिप्रत्ययानुपपत्तिरिति वाच्यम्, प्रवृत्तिविज्ञानमादायैव तदुपपत्तेरित्यत आह—**तस्मादि**ति। **अतिरिक्त आत्मनी**ति। ज्ञानातिरिक्तस्यात्मपदवाच्यत्वे इत्यर्थः। **तद् वक्ष्याम** इति। तत्र प्रमाणमात्मग्रन्थे वक्ष्याम इत्यर्थः। तथा सति ज्ञानमुत्पन्नं विनष्टमिति प्रतीतिवद् 'आत्मा उत्पन्नः' 'आत्मा विनष्टः' इत्यपि प्रत्ययापत्तेः। न च आत्मनो ज्ञानातिरिक्तत्वे 'नित्यं विज्ञानमानन्दं ब्रह्म', इति श्रुतिविरोधस्तत्र ब्रह्मपदस्यात्मपरत्वादिति वाच्यम्, तत्र विशेषेण ज्ञानं यत्रेति बहु-

व्रीहिणा विज्ञानपदस्य मत्वर्थीय'अच्'प्रत्ययान्तत्वेन वा ज्ञानवत एवात्मनस्ततो लाभादिति भावः ।

**सांख्यानामपि दुःखनिवृत्तिरपवर्ग इत्यत्र न विप्रतिपत्तिः । प्रकृत्याश्रयं दुःखं न पुरुषाश्रयमिति विवादः । तन्मतमग्रे निराकरिष्यामः ।**

**अपवर्ग** इति । अपवर्गदशायामित्यर्थः । **प्रकृत्याश्रयं** प्रकृतिसमवेतम् । प्रकृतिपदं महत्तत्त्वपरम् । तस्यापि प्रकृतित्वात् । न तु मूलप्रकृतिपरम् । **सांख्यमते** ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मात्मकभावाष्टकानां महत्तत्त्व एवाभ्युपगमात् । भावो धर्मः । तथाहि तन्मते पञ्चविंशति तत्त्वसंज्ञकानि पुरुषमूलप्रकृतिमहत्तत्त्वाहङ्कारपञ्चतन्मात्रपञ्चकर्मेन्द्रियपञ्चज्ञानेन्द्रियपञ्चभूतभेदात् । तत्रात्मैव पुरुषः । स तु कूटस्थचैतन्यरूपः । कूटस्थत्वं जन्यधर्मानाश्रयत्वम्, 'पुरुषस्तु पुष्करपलाशवन्निर्लेप' इत्यभिधानात् । पद्मपत्रं यथा जलादिलेपयुक्तं न भवति, तथैव पुरुषोऽपि जन्यधर्मरूपलेपयुक्तो न भवतीति तदर्थः । चैतन्यञ्च ज्ञानातिरिक्तं नित्यं पुरुषनिष्ठं पुरुषतोऽभिन्नञ्च । अत एव पुरुषो न प्रकृतिर्न वा विकृतिः । अकारणत्वान्न प्रकृतिविकृत्युभयरूपः । पञ्चतन्मात्राण्यपि . गन्धतन्मात्रारसतन्मात्रारूपतन्मात्रास्पर्शतन्मात्राशब्दतन्मात्रारूपाणि पदार्थान्तराणि प्रकृतिविकृत्युभयरूपाणि । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि केवलं विकृतिरूपाणि । न्यायमतसिद्धषडिन्द्रियाणि ज्ञानेन्द्रियाणि । तान्यपि केवलविकृतिरूपाणि । पञ्चभूतानि चाकाशवायुतेजोजलपृथिवीरूपाणि । तान्यपि केवलविकृतिरूपाणि । तथा च तेषां संग्रहश्लोकः—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।

षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति । (सांख्यकारिका)

अयमर्थः—कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चिदुभयः । तत्र का प्रकृतिरेवेत्यत उक्तं मूलप्रकृतिः । का पुनः प्रकृतिविकृतयः, कियत्यश्चेत्यत उक्तं महदाद्याः प्रकृतिविकृतयः सप्त । महत्तत्वमहङ्कारो गन्धतन्मात्रा रसतन्मात्रा रूपतन्मात्रा स्पर्शतन्मात्रा शब्दतन्मात्रा इति सप्त प्रकृतयो विकृतयश्चेत्यर्थः । तत्र महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः । अहङ्कारस्तन्मात्राणामिन्द्रियाणामेकादशानाञ्च प्रकृतिर्विकृतिस्तु महतः । तदुक्तम्—

'प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्रा' इति ।

पञ्चतन्मात्रास्तु पञ्चभूतानामाकाशादीनां प्रकृतयो विकृतयस्तु अहङ्कारस्य । तद् यथा शब्दतन्मात्रा आकाशप्रकृतिः, स्पर्शतन्मात्रा वायुप्रकृतिः, रूपतन्मात्रा तेजःप्रकृतिः, रसतन्मात्रा जलप्रकृतिः, गन्धतन्मात्रा पृथिवीप्रकृतिः । अथ का विकृतिरेव कियती वेत्यत उक्तं षोडशकस्तु विकार इति । पञ्चभूतपञ्चकर्मेन्द्रियषड्ज्ञानेन्द्रियरूपाणि षोडश विकारा एव न प्रकृतय इत्यर्थः ।

यद्यपि पृथिव्यादयोऽपि गन्धादीनां प्रकृतय, एवं तद्विकारभेदाः पयोबीजादयोऽपि दध्यङ्कुरादीनां प्रकृतयो, गवादयो बीजादयो वा न पृथिव्यादिभ्यो विजातीयं तत्त्वम्। विजातीयतत्त्वोपादानत्वञ्च प्रकृतित्वमिह विवक्षितम्। आकाशादयस्तु न वृक्षाद्युपादानानि, किन्तु निमित्तान्येवेति न कोऽपि दोषः। अनुभयमाह 'न प्रकृति र्न विकृतिः पुरुषः' इति।

तन्मते आकाशाद्युत्पत्तिक्रमस्तु प्रथमं शब्दतन्मात्रादाकाशोत्पत्तिस्तत आकाशस्पर्शतन्मात्राभ्यां वायोरुत्पत्तिस्तत आकाशवायुरूपतन्मात्रेभ्यस्तेजसामुत्पत्तिरित्यादिक्रमेण बोध्य इति दिक्।

**ये त्वनुपप्लवां चित्तसन्ततिमनन्तामपवर्गमाहुस्तेऽप्युपप्लवस्य दुःखमयत्वात्तन्निवृत्तिमेवेच्छन्ति।**

**अनुपप्लवामिति।** उपप्लवः संसारः प्रवृत्तिविज्ञानमिति यावत्। तद्भिन्नामित्यर्थः। **चिन्तामणिकृतस्तु** उपप्लवो दुःखं तदभावविशिष्टामित्यर्थ इत्याहुः। **चित्तसन्ततिम्** आलयविज्ञानसन्ततिम्। **अनन्तामिति।** चित्तान्तरप्रागभावव्याप्यध्वंसप्रतियोगित्वमनन्तत्वम्। **उपप्लवस्य** प्रवृत्तिविज्ञानस्य। **दुःखमयत्वात्** दुःखहेतुत्वात्। उपप्लवपदस्य दुःखपरत्वमते दुःखमयत्वात् दुःखरूपत्वात्। **तन्निवृत्तिमेवेति।** एवकारो भिन्नक्रमे। मुक्तिदशायां दुःखनिवृत्तिमिच्छन्त्येवेत्यर्थः।

**न च चित्तसन्ततेरनन्तत्वं प्रामाणिकं निमित्तस्य शरीरादेरपाये नैमित्तिकस्य चित्तस्योत्पादयितुमशक्यत्वात्।**

**न चेति** नवेत्यर्थः। मोक्षदशायामिति शेषः। **निमित्तस्य** कारणीभूतस्य। **नैमित्तिकस्य** कार्यस्य। **उत्पादयितुमिति।** पूर्वालयविज्ञानेनोत्तरालयविज्ञानस्योत्पादयितुमशक्यत्वादित्यर्थः।

**उपप्लवावस्थायां तन्निमित्तमिति चेन्न। अनुपप्लवस्यापि तत्साध्यत्वात्। न हि शरीरनिरपेक्षा तत्सिद्धिः सम्भवति योगाभ्याससाध्यत्वात् तस्य। अन्यथान्योन्याश्रयप्रसङ्गात्। शरीरादिनिवृत्तावनुपप्लवश्चित्तस्य, अनुपप्लवे च तस्मिन् शरीरादिनिवृत्तिरिति। अथ शरीरादिकमपि चित्तविलसितमात्रं नतु वास्तवमित्यभिप्रायस्तत्र वक्ष्यते।**

**उपप्लवावस्थायामिति।** उपप्लवविशिष्टदशायामित्यर्थः। **तत्** शरीरम्। **अनुपप्लवस्यापीति।** अनुपप्लवचित्तसन्तानस्यापीत्यर्थः। **तत्साध्यत्वात्** शरीरसाध्यत्वात्। लाघवाज् ज्ञानत्वावच्छिन्नं प्रत्येव तादात्म्यावच्छेदकत्वोभयघटितसामानाधिकरण्यप्रत्यासत्या शरीरस्य हेतुत्वात्। न तूपप्लवविशिष्टत्वं ज्ञानविशेषणं गौरवादिति भावः।

नन्ववच्छेदकतासम्बन्धेन ज्ञानसामान्योत्पत्तिं प्रत्येव शरीरं कारणमनुपप्लवचित्तसन्तानस्यावच्छेदकद्वारा प्रसिद्धम्। अतः शरीरं विनापि तदुत्पत्तौ न किञ्चिद् बाधकमित्यरुचेराह **नहीति**। नवेत्यर्थः। **तत्सिद्धिः सम्भवतीति**। पूर्वपूर्वालयविज्ञानादुत्तरोत्तरालयविज्ञानस्योत्पत्तिः सम्भवतीत्यर्थः। तस्यानुपप्लवचित्तसन्तानसामान्यस्य योगाभ्यासे सति शरीरजन्यश्रवणादिसाध्यत्वस्य तैरुपगमादित्यर्थः।

ननु तस्य साक्षाद्योगाभ्यासजन्यत्वं तै र्न स्वीक्रियते अपितु शरीरादिनिवृत्तिद्वारा। तथा च शरीरनिरपेक्षा हि तत्सिद्धिः सम्भवतीत्यत आह **अन्यथेति**। शरीरादिनिवृत्तिद्वारा योगाभ्याससाध्यत्व इत्यर्थः। अन्योन्याश्रयमेव विवृणोति **शरीरादीति**। आदिपदाच्छरीरीयमनःसंयोगपरिग्रहः। **अनुपप्लवश्चित्तस्येति**। अनुपप्लुतं चित्तमित्यर्थः। तस्मिंश्चित्ते उपप्लवाश्रयचित्तस्य कालिकसम्बन्धेन स्वावच्छेदकशरीरव्याप्यतायास्तैरुपगमादित्यभिमानः।

**केचित्तु** अनुपप्लवस्यापि तत्साध्यत्वादित्यत्र हेतुमाह नहीति। अर्थस्तु पूर्ववत्। नन्वेतावता श्रवणाद्यव्यवहितपूर्वं शरीरसत्वमपेक्षितं न तु चित्तसन्ततेरव्यवहितपूर्वकाल इत्यस्वरसाद् दूषणान्तरमाह **अन्यथेति**। उपप्लवविशिष्टचित्तत्वावच्छिन्नं प्रति शरीरादेः कारणत्वकल्पने इत्यर्थः। अन्योन्याश्रयमेव विवृणोति शरीरादीति। शरीरादेर्जन्यज्ञानत्वावच्छिन्नं प्रति कारणत्वनिवृत्तावित्यर्थः। अनुपप्लवः शरीराद्यभावकालीनत्वम्। **चित्तस्येति**। सिध्यतीति शेषः। अन्यथा कारणाभावात् तत्काले तदुत्पत्तेरसम्भवादिति भावः। **अनुपप्लवे च** शरीराद्यभावकाले च। **तस्मिन्निति**। सिद्धे सतीति शेषः। **शरीरादिनिवृत्तिः** शरीरादेः सामान्यतो जन्यज्ञानत्वावच्छिन्नं प्रति कारणत्वनिवृत्तिः। तन्निवृत्तौ च विशेषतः कारणत्वसिद्धिरिति शेषः। अन्यथा सामान्यतः कारणत्वे बाधाभावाद् विशेषतस्तत्कल्पनाऽसम्भवादिति भाव इति व्याचख्युः।

**चित्तविलसितमात्रमिति**। ज्ञानस्वरूपमेवेत्यर्थः। **नतु वास्तवमिति**। न शरीरं पारमार्थिकमित्यर्थः। तथा च कथं तस्यावच्छेदकत्वेन चित्तकारणतेति भावः। **तत्र वक्ष्यत इति**। तत्र दूषणमात्मतत्त्वविवेके विज्ञानवादनिराकरणावसरे वक्तव्यमित्यर्थः।

**वेदान्तिनामपि अविद्यायां निवृत्तायां केवलात्मैवापवर्गे वर्त्तत इति मते न नो विवादः। 'न पुत्रः पुत्राय प्रियो भवत्यात्मने वै पुत्रः प्रियो भवती' त्यादिश्रौतोपपत्तिबलात् सर्वस्यात्मौपाधिकं प्रियत्वं स्वभावतस्त्वात्मैव प्रिय इति पुनरवशिष्यते। तत्र वक्ष्यते।**

परब्रह्माद्वैतसाक्षात्कारादविद्यायां निवृत्तायां स्वप्रकाशविज्ञानसुखात्मककेवलात्मैवापपर्गे वर्तते। तथा चानुशिष्टोऽविद्यानाशो मोक्षः। सा च दुःखवदतो द्वेष्योऽतो न

ध्वंसस्य मुक्तित्वे मुक्तेः स्वतःपुरुषार्थत्वहानिरित्येक**दण्डिमतमाह वेदान्तिनामिति**। **केवलात्मैवेति** दुःखादिरहितात्मैवेत्यर्थः। **अपवर्गेऽ**पवर्गदशायाम्। **न नो विवाद इति**। मुक्तिदशायामविद्यानिवृत्तेरात्मनो दुःखादिराहित्यस्य चास्माभिरप्यभ्युपगमादिति भावः।

यद्यपि प्रागभावाप्रतियोगी मोक्षकालीनध्वंसप्रतियोगी पदार्थविशेषोऽविद्या। तस्याश्चास्माभिरनभ्युपगमान्मुक्तिदशायां कथं तन्निवृत्तेरस्माकमभ्युपगमः? तथापि नैयायिकसिद्धमिथ्यावासनैव तेषामविद्या। सा च न्यायनये जन्या, तन्मते चाजन्या। विशेष्यप्रकारभेदेन ज्ञानसंस्कारयोः कार्यकारणभावभेदान्मिथ्याज्ञानस्यात्मविशेष्यकशरीराद्यभिन्नत्वप्रकारकत्वस्य संस्कारजनकत्वाभ्युपगमादित्येव भेदः।

न चाविद्याया अजन्यभावरूपत्वे कथं विनाशो जन्यभावत्वेन विनाशित्वादिति वाच्यम्। जन्यभावत्वेन विनाशित्वमित्यस्य हि विनाशित्वावच्छिन्नं प्रति जन्यभावत्वेन कारणत्वमिति नार्थः प्रागभावे व्यभिचारापत्तेः। अपि तु भावत्वेन नाशकता प्रागभावव्यावृत्तप्रतियोगित्वं नाश्यतावच्छेदकसम्बन्ध इत्येवार्थः। अन्यथा तस्या अतिरिक्तपदार्थत्वेऽप्येतद्दोषस्य दुर्वारत्वादित्याचार्यनिर्णयः।

**अन्ये तु** 'अविद्यायां निवृत्ताया' मित्यस्याविद्यापदवाच्यायां निवृत्तायामित्यर्थः। अविद्यापदवाच्या च तन्मते **यथोक्ता**तिरिक्तपदार्थरूपास्मन्मते च मिथ्याज्ञानमेवेति भावः। **न नो विवाद इति** मुक्तिदशायामविद्यापदवाच्यस्य मिथ्याज्ञानस्य निवृत्तेरात्मनो दुःखादिराहित्यस्य चास्माभिरभ्युपगमादिति भाव इति व्याचख्युः।

**केचित्तु** 'इति मते' इति वाक्ये। 'न नो विवाद' इति न तस्य प्रामाण्ये विवाद इत्यर्थः। अस्मन्मतेऽपि मिथ्याज्ञानस्यैवाविद्यापदवाच्यतया तद्वाक्यस्य प्रामाण्यसम्भवादिति व्याचख्युः।

**परे तु** 'न नो विवाद' इति न नो मोक्षदशायामात्मनो दुःखरहितत्वांशे विवाद इत्यर्थ इत्याहुः।

**न पुत्रः पुत्राय प्रियो भवतीति**। अन्येच्छानधीनपुत्रत्वप्रकारकज्ञानाधीनेच्छाविषयो भवतीत्यर्थः। वै शब्दोऽपित्वित्यर्थे। **आत्मने वै प्रियो भवति**। आत्मरूपेष्टसम्बन्धज्ञानाधीनेष्टो भवति। **श्रौतोपपत्तीति**। श्रुतिसिद्धमुक्तिबलादित्यर्थः। **आत्मौपाधिकम्**। आत्मरूपेष्टसम्बन्धज्ञानाधीनम्। **प्रियत्वम्**। इष्टत्वम्। **स्वभावतस्त्विति**। अन्येच्छां विना तु। **प्रियः**। इच्छाविषयः। अतएवात्मैव सुखरूपो नत्वात्मातिरिक्तं सुखमिति शेषः। दुःखाभावातिरिक्तस्वाभाविकेच्छाविषयस्यैव सुखत्वादिति भावः। **इति पुनरवशिष्यत** इति। **इति** अत्र वेदान्तिनां मते। **पुनः** दूषणाभिधानमवशिष्यत इत्यर्थः। **वक्ष्यते**। दूषणं वक्ष्यते। तथासत्यहं सुखमिति प्रत्ययः स्यान्न त्वहं सुखीति प्रत्ययः, सुखमुत्पन्नं सुखं विनष्टमित्यादिप्रत्ययो वा।

नचैवं 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतेः 'आनन्दं ब्रह्मणो रूपमि'ति श्रुतेश्च विरोधः। ब्रह्मपदस्यात्मपरतया आत्मानन्दयोरभेदस्य तदर्थत्वादिति वाच्यम्। तत्र 'आनन्द'पदस्य मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवदर्थकत्वात्। अन्यथा आनन्दशब्दस्याजहत्पुंलिङ्गतया नपुंसकलिङ्गत्वानुपपत्तेः। न चार्षो लिङ्गव्यत्यय इति वाच्यम्। यथोक्तेनैवोपपत्तावार्षत्वकल्पनायां मानाभावादिति भावः।

इदमुपलक्षणम्। अविद्यानाशस्य मुक्तित्वं यदुच्यते तदपि न सम्यग् दुःखमुपक्रम्य 'तदत्यन्तविमोक्षोऽपवर्गः' इति श्रुतिविरोधप्रसङ्गः। अविद्याख्यातिरिक्तपदार्थे मानाभावाच्च। न च नैयायिकसिद्धा मिथ्यावासनैव तेषामविद्या। तथापि तस्याः स्वतो द्वेष्यत्वाभावात्। दुःखप्रकारकज्ञानवदविद्यात्वप्रकारकज्ञानस्यापि पृथग् द्वेषहेतुत्वे मानाभावादिति बोध्यम्।

प्रकाशज्ञास्तु 'पुत्राय प्रियो भवति' पुत्रत्वज्ञानाधीनं सुखत्वेनाज्ञातो भवति। 'आत्मने वै प्रियो भवति' आत्मसम्बन्धज्ञानाधीनं प्रियत्वं सुखत्वेन ज्ञानं, स्वभावतस्तु आत्मेव प्रिय इति समवायसम्बन्धेनात्मैव सुखत्वाश्रय इत्यर्थः। यथा जवाकुसुमसान्निध्यात् स्फटिके लौहित्यं प्रतीयमानं जवाकुसुमे स्वाभाविकमिति भावः। शेषं पूर्ववदिति व्याचख्युः।

त्रिदण्डिमतानुयायिनस्तु परमस्तु परमात्मनि जीवात्मलयो मोक्षः। जीवात्मलयश्च जीवात्मवृत्तिसुखदुःखावच्छेदकीभूतलिङ्गशरीरापगमः। लिङ्गशरीरश्चैकादशेन्द्रियाणि पञ्चभूतानि। एतानि च परमसूक्ष्मतया प्रत्यक्षसिद्धशरीरनिष्ठानि। प्रत्यक्षसिद्धशरीरातिरिक्तं सूक्ष्मशरीरं वा लिङ्गशरीरम्। वस्तुतस्तु लयो विनाशः। तथाच परमात्मनिष्ठजीवात्मध्वंसो मोक्षः। न चात्मनो नित्यत्वस्य धर्मिग्राहकमानसिद्धतया कथं तन्नाश इति वाच्यम्। ध्वंसाप्रतियोगित्वरूपं नित्यत्वं न तस्य धर्मिग्राहकमानसिद्धमपि तु प्रागभावाप्रतियोगित्वरूपस्य, तत्त्वज्ञानाजन्यध्वंसाप्रतियोगित्वे सत्यनुत्पन्नत्वरूपस्य वा नित्यत्वस्यैव तत्र तत्सिद्धत्वात्।

न च तथापि तन्मते परमात्मजीवात्मनोरभिन्नतया परमात्मनो नित्यत्वेन तदभिन्नस्य नाशासम्भव इति वाच्यम्। परमात्मनि जीवात्मनां भेदाभेदयोरुभयोरेवाभ्युपगमात्। न च भेदाभेदयोर्विरोधात् एकत्र तयोरसम्भव इति वाच्यम्। अन्यत्र प्रतीतिबलात् तयोर्विरोधाभ्युपगमेऽप्यत्र तयोर्विरोधे मानाभावात्। न्यायमते परमात्मजीवात्मनोरभेदाभावात्तन्मते तस्य मुक्तित्वे बाधकाभावाच्च।

न च सुखदुःखाभावतत्साक्षात्कारवत् साधनान्यत्वेनात्मनाशो न पुरुषार्थ इति वाच्यम्। यथाहि (सुखदुःखसाक्षात्कारत्वेष्टसाधनत्वानीच्छायाः दुःखसाक्षात्कारत्वादृष्टसाधनत्वानित्यत्वस्य प्रयोजकानि तथा द्वेषविषयतावच्छेदकाश्रयविषयताश्रय-

प्रतियोगिताकाभावत्वेच्छादकाश्रयप्रतियोगिताकाभावत्वेच्छाविषयतावच्छेदकत्वाश्रय - प्रतियोगिताकाभावत्वेऽपि इच्छाद्वेषयोः प्रयोजके ।?) अत एव यस्य यत्र दुःखे द्वेषस्तस्यैव तदभावे इच्छा, यस्य यत्र सुखे इच्छा तस्यैव तदभावे द्वेषो नत्वन्यस्येति सर्वानुभवसिद्धम्। अन्यथा प्रायश्चित्तादिस्थले पापनाशस्यापि सुखदुःखाभाववत् साक्षात्कारवत् साधनान्यत्वेनापेक्षावतामिच्छाविषयत्वानुपपत्तिः। **बौद्धाधिकारदीधितावेवं** रीत्यैव पापनाशस्य पुरुषार्थत्वोपपादनात्। तथा चात्मनो दुःखहेतुत्वेन द्वेषविषयतया तद्ध्वंसोऽपि पापध्वंसवत् पुरुषार्थः।

न च तथापि न तस्य स्वतः पुरुषार्थत्वं मुक्तेः स्वतः पुरुषार्थत्वञ्च सर्वशास्त्रसिद्धमिति वाच्यम्, अन्येच्छानधीनेच्छाविषयत्वस्य स्वतःपुरुषार्थत्वरूपतया तस्यापि तत्र सत्त्वात्। अन्यथा प्रतियोगिद्वेषानधीनेच्छाविषयत्वादेव स्वतःपुरुषार्थत्वाभावे न्यायमतेऽपि मुक्तेः स्वतःपुरुषार्थत्वहान्यापत्तेः। तत्त्वज्ञानमुक्त्योः कार्यकारणभावस्तु प्रतियोगित्वसमवायोभयघटितसामानाधिकरण्यप्रत्यासत्त्यैवेत्याहुः।

तदसत्। दुःखमुपक्रम्य 'तदत्यन्तविमोक्षोऽपवर्ग' इति श्रुतिविरोधापत्तेः, स्वतःपुरुषार्थत्वहान्यापत्तेश्च, अन्येच्छानधीनत्ववत् स्वतो द्वेषातिरिक्तद्वेषानधीनत्वस्यापीच्छाविशेषणतया स्वतःपुरुषार्थघटकत्वात्। अन्यथा अहिकण्टकादिनाशस्यापि स्वतः पुरुषार्थत्वमित्यग्रेतनाचार्याभिप्रेतं भविष्यति। **मुक्तिवादे मणिकृतोऽप्येवम्।**

न चैवं बुद्ध्यादिरूपनवात्मविशेषगुणैकादशेन्द्रियशरीरात्मकैकविंशतिप्रभेदस्य पारिभाषिकदुःखान्तर्गततया सुखध्वंसस्य मुक्तित्वं कथं स्यात्? स्वतःपुरुषार्थत्वाभावादिति वाच्यम्, तस्य मुक्तित्वे मानाभावात्। न चैवं 'दुःखेनात्यन्तं विमुक्तश्चरती'ति श्रुतिविरोधः। तत्र दुःखपदस्यैकविंशतिपारिभाषिकदुःखपरत्वादिति वाच्यम्। तत्र दुःखपदस्यैकविंशतिदुःखपरत्वेऽपि सर्वेषां ध्वंसस्य मुक्तिरूपतायास्ततोऽलाभात्। तत्रापि दुःखपदेनैकविंशतिप्रभेदपारिभाषिकदुःखलाक्षणिकत्वे मानाभावात्। दुःखपदस्य तल्लाक्षणिकत्वे मानाभावाच्च। दुःखपदस्य तल्लाक्षणिकत्वे मनःश्रवणयोर्नित्यतया विमुक्तिपदेऽपि लक्षणापत्तेश्च। किञ्च आत्मनाशस्य मुक्तित्वे 'नित्यं विज्ञानमानन्दं ब्रह्म' त्यादिश्रुतौ नित्यपदस्य लाक्षणिकत्वापत्तेः। मुख्यार्थेनैवोपपत्तौ श्रुतौ लक्षणाभ्युपगमस्यान्याय्यत्वादिति बोध्यम्।

**भट्टास्तु** आत्यन्तिको न मोक्षस्तथा सति मुक्तेः स्वतःपुरुषार्थत्वहान्यापत्तेः। स्वतःपुरुषार्थत्वञ्च न अन्येच्छानधीनेच्छाविषयत्वमात्रमहिकण्टकादिनाशस्यापि स्वतः पुरुषार्थत्वापत्तेः। तस्य हि कण्टकादिजन्यदुःखद्वेषाधीनेच्छाविषयत्वेऽपि अन्येच्छाधीनेच्छानधीनत्वात्। यच्च द्वेषातिरिक्तद्वेषानधीनत्वमपीच्छाविशेषणमतिरिक्तान्तविशेषणप्रवेशे गौरवान्मानाभावाच्च। किन्तु अन्येच्छानधीनद्वेषाधीनेच्छाविषयत्वमेव। तद्दुःखध्वंसस्तु न तथा तस्य दुःखद्वेषाधीनेच्छाविषयत्वात्। तद् ध्वंसादि-

प्रकारकेच्छां प्रति तद्गोचरद्वेषस्य हेतुत्वादत एव यत्र दुःखे यस्य वलवान् द्वेषस्तस्यैव तदभावे भवतीच्छा नान्यस्येति सर्वानुभवसिद्धम्। तस्मादात्मविशेष्यकातिशयितसुखाभिव्यक्तिरेव मुक्तिः। अतिशयश्च तत्त्वज्ञानग्राह्यतावच्छेदकतया सिद्धोऽखण्डधर्मविशेषस्तादृशजातिविशेषो वा। न च तत्त्वज्ञानजन्यतावच्छेदकतया सुखसाक्षात्कारनिष्ठ एव मानसत्वव्याप्यजातिविशेषः स्वीक्रियतां लाघवादिति वाच्यं (सुख) निष्ठातिशयं विना तद्विषयकसाक्षात्कारे उत्कटेच्छाविषयत्वानुपपत्तेः। न च चन्दनसंयोगादिजन्यतावच्छेदकजातिभिः सह साङ्कर्यान्न सुखनिष्ठजातिसम्भव इति वाच्यं, तज्जातेस्तासां विरुद्धत्वात् चरमतत्त्वज्ञानस्य सुखरूपफलनाश्यतज्जन्यादृष्टविशेषस्य च साक्षात् तदवच्छिन्नं प्रति जनकत्वाददृष्टविशेषणस्य तज्जनकत्वाभ्युपगमान्न जन्यसुखमात्रस्य सुखविषयकजन्यसाक्षात्कारमात्रस्य च धर्मजन्यत्वनियमभङ्गः। चरमत्वस्य तज्जातेस्तस्यां विरुद्धत्वात्। चरमतत्त्वज्ञानोत्तरं पूर्वोपात्ताधर्मराशिविनाशकालं न तस्य तदविषयकसाक्षात्कारस्य चोत्पत्तिः। तदानीमेव तदुत्पत्ताविष्टापत्तौ वक्ष्यमाणश्रुतिविरोधोपपत्तेः। चरमतत्त्वज्ञानस्य साक्षाद्हेतुतया च विनश्यदवस्थफलनाश्यतज्जन्यादृष्टविशेषात् धारावाहिकसुखद्वयोत्पत्तिः। सुखद्वयाभ्युपगमे गौरवापत्तेः। तत्त्वज्ञानकारणत्वस्यावश्यकतया लाघवेन साक्षात्सम्बन्धेनैव तत्कल्पनात्। अदृष्टविशेषस्य द्वारत्वानभ्युपगमे च चरमतत्त्वज्ञानस्यैव कार्यसहवर्त्तितया हेतुत्वाभ्युपगमात्।

यत्तु तादृशसुखविशेषोऽजन्य एव लाघवात्। न चैवं संसारितादशायामपि तस्य सत्त्वात् तदानीमपि तद्ग्रहः स्यादिति वाच्यम्। चरमतत्त्वज्ञानस्य मुक्तिरूपफलनाश्यतज्जन्यादृष्टविशेषस्य च साक्षात् तदतिरिक्तजनकत्वादिति तत्त्वम्। तथापि सन्निकर्षादिरूपसामान्यसामग्रीमर्यादया संसारितादशायां मानसज्ञानापत्तेर्दुर्वारत्वात्। तद् वारणाय तादृशसुखेतरमानसं प्रति तादृशसुखभेदस्यापि कारणत्वकल्पने गौरवापत्तेः। तदपेक्ष्य लाघवात् तादृशसुखविशेषं प्रति तत्त्वज्ञानस्य कारणत्वकल्पनाया एव युक्तत्वात्।

न च साक्षात्कारस्य क्षणद्वयमात्रस्थायितया तन्नाशे मुक्त्यभावापत्तिरितिवाच्यम्। तादृशसुखविशेषस्य तत्साक्षात्कारस्य च लाघवेन ध्वंसाप्रतियोगित्वरूपनित्यत्वाभ्युपगमात्। जन्यभावस्य विनाशित्वनियमे मानाभावात्। योग्यविभुविशेषगुणत्वेन नाशस्वरूपयोग्ययोरपि तयोर्न नाशोपधायकत्वं तत्त्वज्ञानध्वंसस्य प्रतिबन्धकत्वाभ्युपगमात् सहवर्तिनाशरूपसहकार्यन्तरविरहाच्च। सहवर्त्तित्वं हि कालिकविशेषणतया स्ववृत्तित्वम्। मुक्त्यात्मकसाक्षात्कारस्तदविषयीभूतसुखञ्च न कालो मानाभावात्, तस्य विनाशप्रसङ्गवारणाय लाघवेन तथैव कल्पनाच्च।

न चैवं जन्यमात्रं कालोपाधिरिति प्रामाणिकप्रवादव्याघात इति वाच्यम्। तत्र जन्यत्वं नोत्पत्तिमत्त्वमपि तु विनाशिभावत्वं विनाशित्वमात्रं वेत्यभ्युपगमात्।

एतस्य कालत्वव्याप्यतया ध्वंसस्यापि कालत्वे बाधकाभावात्। तथा च नित्यसुखाभिव्यक्तिर्मुक्तिरिति फलितम्। नित्यत्वं ध्वंसाप्रतियोगित्वमात्रम्। तथा च श्रुतिः 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्' इति। ब्रह्मणः आत्मनः, न तु परमात्मनः। परमात्मनोऽबद्धत्वान्मोक्षस्याप्यभावेन 'तच्च मोक्षे प्रतिष्ठितम्' इत्यस्यासङ्गतत्वापत्तेः। रूपं धर्मः। आनन्दशब्दस्य पुंलिङ्गत्वेऽप्यार्षो लिङ्गपरित्यागः। मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दयुक्तं स्वरूपमिति वार्थः। तथा च आनन्दम् आनन्दविशिष्टम् आत्मनः स्वरूपं वा। मोक्षे सति तदीयमिथ्यावासनानाशे सतीति यावत्। प्रतिष्ठितं साक्षात्क्रियमाणम्। अत्रानन्दविशिष्टत्वं न तूपलक्षणं वेदे विशेषणत्वे सम्भवत्युपलक्षणत्वाकल्पनात्। अत आनन्दस्यापि साक्षात्कारलाभः।

यथा श्रुत्यन्तरं 'तावदेवास्य चिरं यावद् विमोक्ष्ये अथ सम्पत्स्ये कैवल्येने'ति। तदर्थश्च अस्य जीवात्मनश्चिरं कैवल्ये विमोक्षे न विमोक्षते मिथ्यावासनाभिरिति शेषः। अथ अनन्तरं सम्पत्स्ये कैवल्येनेति। न चाभ्यां सुखतत्कारणयोर्नित्यत्वं न सिद्धमिति वाच्यम्। प्रागुक्तयुक्तिबलादेव तयोर्नित्यत्वसिद्धेः। "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतौ तु 'न स्पृशत' इत्यस्य नोत्पद्यत इत्येवार्थो न तु सम्बद्ध्यत इत्यर्थः।

न चैवं 'दुःखेनात्यन्तं विमुक्तश्चरति' श्रुतिविरोधस्तत्त्वज्ञानोत्तरं दुःखेनात्यन्तं रहितो भवतीति तदर्थादिति वाच्यम्। श्रुत्या तत्त्वज्ञानोत्तरमात्यन्तिकदुःखनिवृत्ति-···ऽपि तत्र मुक्तित्वाबोधनात्। न चैवं 'आनन्दं ब्रह्मणो रूपम्' इत्यादि सुखसाक्षात्कारस्य तत्कालोत्पन्नत्वमेव प्रदर्शितम्। एवं 'तदेवास्य' इति श्रुत्यापि कैवल्यस्य मिथ्यावासनानाशानन्तर्यमेव बोधितम्। न तु कयापि श्रुत्या सुखाभिव्यक्तेर्मुक्तित्वं बोधितमिति वाच्यम्। 'आनन्द' मिति श्रुत्या दुरितमोचनानन्तरमानन्दसाक्षात्कारे बोधिते लाघवात् स्वतःपुरुषार्थत्वाच्च तस्यैव मुक्तित्वकल्पनात्। न चैवं दुःखमुपक्रम्य 'तदत्यन्तविमोक्षोऽपवर्ग' इति श्रुतावपि मानाभावाच्चेति प्राहुस्तन्मतमाशङ्क्य निराकरोति **तौतातितास्त्विति**।

**तौतातितास्तु अकार्यमपीश्वरज्ञानं शरीरमन्तरेणानिच्छन्तः कार्यमेव-सुखज्ञानमपवर्गेऽस्तीति वदन्तस्त्रपा विरोधो भयमिति त्रयमपि त्यक्तवन्तश्च।**

अपवर्गे अपवर्गकाले। अस्ति शरीरासत्त्वेऽपि भवतीत्युपेत्य अजन्यमपि ज्ञानमीश्वरे शरीरं विनाऽनभ्युपेत्य जन्यस्याप्यानन्दसाक्षात्कारस्य मुक्तिदशायां शरीरं विनाभ्युपगमात् त्रपा, कारणं विना कार्यमिति विरोधः, शरीरं विनापि ज्ञानाभ्युपगमे अनभिमतेश्वरसिद्धिप्रसङ्गाद् भयमित्यर्थः।

नचैवम् "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्" इति विरोध इति वाच्यम्। तस्य आनन्दयुक्तं ब्रह्मणः स्वरूपं तच्चानन्दाधिकरणं ब्रह्मणः स्वरूपं मोक्षे प्रतिष्ठितं मोक्षनिमित्तसाक्षात्कारविषयीभूतमित्यर्थादिति भावः। एतच्चापाततः। विनश्यदवस्थशरीरादेव तदुत्पादसम्भवात्, तस्य शरीरावच्छिन्नत्वे मानाभावेन तत्र शरीरस्याकारणत्वाच्च। अवच्छेदकतासम्बन्धेन सामान्योत्पत्तिं प्रत्येव तादात्म्यसम्बन्धेन शरीरस्य हेतुत्वात्। तस्मान्नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टमतमेव साधीयः। वैशेषिकमते गौरवान्मुक्तेः स्वतःपुरुषार्थत्वहानिप्रसङ्गात्। वामनादिदशावतारवद् भट्टस्यापि परमेश्वरावतारान्तरत्वेन तन्मतसिद्धश्रुत्यर्थपरित्यागानौचित्याच्च। श्रुतेः स्वेच्छया प्रामाणिकैकमीमांसकसिद्धार्थविपरीतार्थकत्वकल्पने बहुतरधर्मविलोपापत्तेः।

**स्वतन्त्रास्तु** नित्यमतिशयितसुखमेव मुक्तिरिति लाघवात्। नित्यत्वं ध्वंसाप्रतियोगित्वं नत्वनुत्पन्नत्वम्। "आनन्दं ब्रह्मणो रूप" मिति श्रुतावपि "प्रतिष्ठित" मित्यस्योत्पन्नमित्यर्थः। सर्वमन्यद् भट्टमतवदुपपादनीयमित्याहुः।

तदप्यसत्। 'आनन्द' मिति श्रुतेर्भट्टसिद्धार्थविपरीतार्थकल्पनापत्तेः। प्रागभावाभ्युपगन्तृ **प्राभाकरैकदेशिनस्तु** आत्यन्तिकदुःखप्रागभावो मुक्तिरस्त्विति वाच्यम्। स्वतो द्वेषाविरिक्तप्रतियोगिद्वेषानधीनेच्छाविषयत्वेन स्वतःपुरुषार्थत्वहान्यापत्तेरित्याहुः।

तदप्यसत्। तस्यानादितया तत्त्वज्ञानजन्यत्वासम्भवात्। विशिष्टस्य विशेषणातिरिक्तत्वात्। प्रतियोग्यजनके प्रागभावे भानाभावाच्चेति बोध्यम्।

**एतेन पारतन्त्र्यं बन्धः स्वातन्त्र्यञ्च मुक्तिरित्यपास्तम्। नहि पारतन्त्र्यं स्वतो हेयमपि तु दुःखहेतुतया।**

एतेनेति। पारतन्त्र्यं पापम्। स्वीयपारतन्त्र्यत्वावच्छिन्नप्रतियोगिताकसामान्यध्वंसो न भोगादेः साध्योऽपि तु तत्त्वज्ञानस्यैवेत्येतन्मात्रमभिप्रेत्य दूषयति नहीति। स्वतो हेयमिति। द्वेषान्तराधीनद्वेषविषयीभूतमित्यर्थः। तथा च पारतन्त्र्यध्वंसस्य मुक्तित्वे मुक्तेः पुरुषार्थत्वहान्यापत्तेः। अन्येच्छानधीनत्ववत् स्वतो द्वेषातिरिक्तद्वेषानधीनत्वस्यापीच्छाविशेषणतया स्वतःपुरुषार्थत्वघटकत्वादितिभावः। इदमुपलक्षणम्। "तावदेवास्य चिर" मित्यादि श्रुतिविरोधापत्तेः। तेन पूर्वोपात्तदुरितराशिनाशानन्तरमेव कैवल्यबोधनादिति बोध्यम्।

**स्वातन्त्र्यमपि यदि दुःखतत्साधननिवृत्तिस्तदा ओमित्युच्यते। ऐश्वर्यञ्चेत् कार्यतया तदपि साधनपरतन्त्रं क्षयि चेति दुःखाकरत्वाद् हेयमेवेति। तस्मादनिष्टनिवृत्तिरात्यन्तिकी निःश्रेयसमिति।**

ननु पारतन्त्र्यजन्यदुःखसामान्यनिवृत्तिरेव स्वातन्त्र्यमित्यत आह **स्वातन्त्र्य-**

**मपीति** । दुःखतत्साधननिवृत्तिरिति । दुःखस्य पारतन्त्र्यसाधनकस्य निवृत्तिरित्यर्थः । यथाश्रुते इष्टापत्तेरसङ्गतिः दुःखनिवृत्तेरेव स्वमते मुक्तित्वात् । **ऐश्वर्यमपीति** । अणिमादिसम्पादको योगजधर्मविशेष ऐश्वर्यम् । **कार्यतयेति** । शरीरादिजन्यतयेत्यर्थः । **साधनपरतन्त्रमिति** । शरीराद्यधीनोत्पत्तिकमित्यर्थः । तथा च शरीरादिकं विना कथं तदुत्पत्तिः स्यादिति भावः । ननु शरीरादिसत्त्वदशायामेव तत्समुत्पद्य तदभावदशायां तत्तिष्ठतीत्यत आह **क्षयि चेति** । जन्यभावत्वेनैव विनाशित्वादितिभावः । **दुःखाकरत्वादिति** । दुःखपदं द्वेषविशेषपरम् । द्वेषविशेषजनकत्वादित्यर्थः । यत्रेच्छा तदभावे द्वेष इति न्यायेन ऐश्वर्यध्वंसस्य द्वेषविषयत्वादिति भावः । हेयम् वाच्यतासम्बन्धेन मुक्तिपदस्य हेयम् । मुक्तिपदावाच्यमिति यावत् । ज्ञायमानलिङ्गत्वाद्यतिरिक्तरूपेण द्वेषविषयाजनकस्यैव मुक्तिपदवाच्यत्वनियमात् । अस्मदभिमतमुक्तिस्तु न तादृशद्वेषविषयजनिकाऽतीन्द्रियतयाऽविनाशितया च तादृशजनकत्वस्यैव तत्राभावादितिभावः । इदमुपलक्षणम् । ऐश्वर्यस्य मुक्तित्वे मुक्तेः स्वतःपुरुषार्थत्वानुपपत्तिरित्यपि बोध्यम् । स्वमतमुपसंहरति **तस्मादिति** ।

**नन्वपुरुषार्थोऽयं सुखस्यापि हानेरिति चेन्न । बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वान्मधुविषसंपृक्तान्नभोजनजन्यसुखवत् ।**

**अपुरुषार्थोऽयमिति** । अयम् आत्यन्तिकदुःखध्वंसो न पुरुषार्थो न पुरुषार्थप्रवृत्त्युद्देश्य इत्यर्थः । **सुखस्यापीति** । तदानीं सुखस्याप्यात्यन्तिकध्वंसोत्पादादित्यर्थः । तथा च तदुपाये तदर्थतया प्रवृत्तावेव तस्य प्रवृत्त्युद्देश्यत्वं स्यात् । तदेव च न सम्भवति । सुखाभावरूपबलवदनिष्टसम्वलिततत्त्वज्ञानेन तत्रापि बलवद्द्वेषोत्पादात् । फलगोचरबलवद्द्वेषस्य च साक्षादुपायगोचरबलवद्द्वेषोत्पादद्वारा उपायगोचरतदर्थिप्रवृत्तौ प्रतिबन्धकत्वादिति भावः । **प्रेक्षावद्धेयत्वादिति** । प्रेक्षावतां मुमुक्षूणां बलवद्द्वेषस्यैव विषयत्वादित्यर्थः । **मधुविषेति** । यथा मरणजन्यदुःखे बलवद्द्वेषवतां तत्संवलितज्ञानेन मधुविषसंपृक्तान्नभोजनजन्यसुखलववद् द्वेष एव नत्विच्छेत्यर्थः । तथा च मुमुक्षूणां सुखाभावोऽभीष्ट एव । नतु द्वेषविषयानुबन्धित्वेन सुखज्ञानं सुखेच्छाकारणं तदभावे द्वेषाभावादिति भावः ।

एतच्चापाततः । सुखत्वप्रकारकज्ञानस्यैवेच्छाहेतुत्वेन बहुतरदुःखानुविद्धत्वज्ञानसत्त्वेऽपि सुखेच्छोत्पत्तौ बाधकाभावात् । नहि दुःखानुविद्धत्वेन सुखज्ञानं सुखेच्छाप्रतिबन्धकं वा स्वतःपुरुषार्थत्वभङ्गप्रसङ्गान्मानाभावाच्च । न वा बहुतरदुःखानुविद्धत्वज्ञानं बलवद्द्विष्टार्थाविरुद्धत्वज्ञानं वा द्वेषहेतुर्मानाभावात् । दुःखत्वदुःखसाक्षात्कारत्वद्विष्टसाधनत्वेच्छाविषयतावच्छेदकाश्रयप्रतियोगिताकाभावत्वानामेव द्वेषप्रयोजकत्वात् ।

वस्तुतस्तु मुमुक्षूणामपि सुखेच्छायास्तदभावे (च) द्वेषस्य सत्त्वेऽपि तदभावे बलवद्द्वेषविरहात् तत्साधनताज्ञानसत्त्वेऽपि निरुक्तध्वंसार्थितया तदुपाये प्रवृत्तौ बाधका-

भावात् । अत एव यस्य सुखाभावे बलवद्द्वेषस्तस्य न भवत्येव तदर्थितया तदुपाये-प्रवृत्तिरित्येव तत्त्वम् ।

**तथापि दुःखोच्छित्तिरपुरुषार्थः । अनागतस्य निवर्त्तयितुमशक्यत्वाद् वर्त्तमानस्य च पुरुषप्रयत्नमन्तरेणैव विरोधिगुणान्तरोपनिपातनिवर्तनीयत्वाद् अतीतस्यातीतत्वादिति चेन्न । हेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवत् ।**

शङ्कते **तथापीति** । दुःखोच्छित्तिर्दुःखध्वंसः । **अपुरुषार्थ** इति । न पुरुषप्रवृत्तिविषयश्रवणादिजन्य इत्यर्थः । **पुरुषप्रयत्नमिति** । पुरुषप्रयत्नविषयं श्रवणादिकमित्यर्थः । **उपनिपात** उत्पत्तिः । तथा च यदि आत्यन्तिकदुःखध्वंसो मोक्षस्तदा तत्साधनताज्ञानेन श्रवणादौ शिष्टप्रवृत्तिर्न स्यादिति भावः । शिष्टत्वं भ्रमाजन्यत्वम् । इष्टापत्त्या परिहरति **हेतूच्छेद** इति । सप्तमी निमित्ततायाम् । पुरुषव्यापारपदञ्च शिष्टप्रवृत्तिपरम् । तथा च यथा प्रायश्चित्ते दुःखमूलभूतपापोच्छेदार्था शिष्टप्रवृत्तिस्तथात्रापि दुःखमूलोच्छेदायैव श्रवणादौ शिष्टपुरुषप्रवृत्तिर्नतु मुक्तिसाधनताज्ञानेनेत्यर्थः ।

**तथाहि मिथ्याज्ञानमिह सवासनं संसारमूलकारणम् । तच्च तत्त्वज्ञानेन विरोधिना निवर्त्यते । तन्निवृत्तौ रागाद्यपाये प्रवृत्तेरपायाज्जन्मापायः । तथाच दुःखसन्तानोच्छेदः । तच्च तत्त्वज्ञानं पुरुषप्रयत्नसाध्यमिति ।**

**मिथ्याज्ञानमिहेति** । इह आत्मनि तादात्म्येन शरीरप्रकारकं ज्ञानमित्यर्थः । **सवासनम्** तादृशमिथ्यासंस्कारद्वारकम् । संसारस्यादृष्टस्य । **तच्चेति** मिथ्यावासनारूपं द्वारमिति शेषः । **विरोधिना** स्वोत्तरोत्पन्नस्वसमानाधिकरणेन **निवर्त्यते** नाश्यते ।

न च स्वजन्यस्मृतेरेव संस्कारजनकतया तत्त्वज्ञानस्य कथं मिथ्यावासनानाशकत्वमिति वाच्यम् । संस्कारनिष्ठवैजात्यस्यैव स्मृतिनाश्यतावच्छेदकतया मिथ्याधीजन्यनिखिलसंस्कारं प्रति ज्ञानस्यैव नाशकत्वादितिभावः । **तन्निवृत्तौ** मिथ्यावासनोच्छेदे । **रागाद्यपाय** इति । मिथ्यावासनाविशिष्टरागद्वेषयोरभाव इत्यर्थः । यथाश्रुतन्तु न सङ्गच्छते । तत्त्वज्ञानवतोऽपि प्रवृत्तिश्रुत्या रागद्वेषसत्वात् (साक्षोदपि रागद्वेषश्रुतेः सत्त्वाद्वा ?) । **प्रवृत्तेरपायादिति** । धर्माधर्मोत्पत्तेरभावादित्यर्थः । **जन्मापाय इति** । विशिष्टशरीरसम्बन्धाभाव इत्यर्थ । **दुःखसन्तानोच्छेद** इति । दुःखोत्पत्तेरभाव इत्यर्थः ।

ननु तथापि तत्त्वज्ञानमेव दुःखहेतूच्छेदकं, श्रवणादौ कथं प्रवृत्तिरित्यत आह **तच्चेति** । **पुरुषप्रयत्नेति** । पुरुषप्रयत्नविषयश्रवणादिसाध्यमित्यर्थः ।

ननु तथापि 'आत्मा वारे मैत्रेयि श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यश्चे'ति श्रुत्या ज्ञानादेरपि श्रुतिबलेन तद्धेतुत्वात्। दातव्यमित्यादाविव आत्मा साक्षात्कर्त्तव्य इत्यादावपि विधेरिष्टसाधनतार्थकत्वात्। एतेन स्वसमानाधिकरणदुःखाधिकरणक्षणावृत्तिदुःखध्वंसत्वं न कार्यतावच्छेदकमपि (?) समाजग्रस्तत्वाद् (?) अन्यथा चैत्रसमकालीनघटत्वादिनापि जन्यताप्रसङ्गोऽपि निरस्तः आत्मसमाजग्रस्तस्य कार्यतानवच्छेदकत्वे मानाभावो मूलम् (?)

न च श्रुतेरेव मानतया तदनवकाशात् भवत्वस्य तत्त्वज्ञानादिनाश्यतावच्छेदकदुःखनिष्ठजातिविशेषपरिचायकतया विजातीयदुःखध्वंसत्वस्यैव कार्यतावच्छेदकत्वेनात्मसमाजग्रस्तत्वविरहाच्च (?)। न च तथापि विजातीयदुःखकारणात् विजातीयदुःखं दुःखान्तरस्थलक्लृप्तनाशकाच्च तन्नाश इति क्रमेण अर्थसमाजग्रस्तत्वं तत्रापि दुर्वारमिति वाच्यम्। तत्त्वज्ञानादिभिन्नस्य तादृशविजातीयदुःख(ध्वंस)साधनस्याभावात् न चैवं विजातीयदुःखमपि तत्त्वज्ञानादिगोचरप्रवृत्त्युद्देश्यं स्यात्, तदनुत्पाद्य तद्ध्वंसोत्पादनासम्भवादिति वाच्यम्। बलवद्द्वेषाविषयतया स्वध्वंसरूपपरमेष्टसाधनतया च तस्यापि प्रवृत्त्युद्देश्यत्वे क्षतिविरहात्। तत्त्वज्ञानादेस्तज्जनकत्वेऽपि तदुद्देश्येन तत्त्वज्ञानादौ न प्रवृत्तिः। तद्ध्वंसस्य परमेष्टतया तद्ध्वंसोद्देश्येनैव तत्त्वज्ञानादौ प्रवृत्तिर्नान्तरीयकतया च भोजनादिजन्यश्रमदुःखवत् तस्याप्युत्पत्तिरित्यभ्युपगमाच्चेति दिक्।

**किं पुनरत्र प्रमाणम् ? दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्याचार्याः।**

**किं पुनरत्रप्रमाणमिति**। दुःखध्वंसस्य स्वसमानाधिकरणदुःखाधिकरणक्षणावृत्तित्वादिरूपात्यन्तिकत्वे किं प्रमाणमित्यर्थः। यद्यपि "आत्मा वारे मैत्रेयि श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यश्च" इत्युपक्रम्य 'दुःखेनात्यन्तं विमुक्तश्चरती'ति श्रुतिरेव तत्र मानम्। तत्त्वज्ञाने सति दुःखप्रतियोगिकात्यन्तविमुक्तिमान् भवतीति तदर्थात्। एवमात्मा ज्ञातव्यो "न स पुनरावर्त्तत" इति श्रुतिरपि तत्र मानम्। स आत्मतत्त्वज्ञः न पुनरावर्त्तते न पुनः शरीरादिमान् भवतीति तदर्थः। तथापि स्फुटत्वात् तदुपेक्ष्यानुमानमाह **दुःखसन्ततिरिति**। सन्ततिः कार्यम्। तथा च दुःखरूपं कार्यमित्यर्थः। एवं प्रदीपरूपकार्यवदित्यर्थः। हेतोर्भावकार्यत्वरूपस्य सन्ततित्वस्य पक्षदृष्टान्तयोः सत्त्वस्पष्टीकरणाय कार्यत्वेनोपन्यासः। **अत्यन्तमुच्छिद्यत** इति। आत्यन्तिकध्वंसप्रतियोगीत्यर्थः। **इत्याचार्या** इति। इति प्रमाणमाचार्या आहुरित्यर्थः।

ननु किं नाम ध्वंसस्यात्यन्तिकत्वम्। यत्किंचित्कार्यप्रागभावाधिकरण(क्षण) वृत्तित्वं, कार्यमात्रप्रागभावाधिकरणक्षणावृत्तित्वं वा ? नाद्यः सिद्धसाधनात्। न द्वितीयः इदानीन्तनदुःखधारासु व्यभिचारात्। न च सर्वमुक्तिकालीनदुःखत्वावच्छिन्नप्रति-

योगिताकसामान्यध्वंसव्यक्तिमादाय भावकार्यमात्रसाध्यसत्त्वान्न व्यभिचार इति वाच्यम्। तथापि दृष्टान्तस्य तादृशसाध्यवत्त्वेन निश्चितत्वाप्रसाध्याङ्गकत्वापत्तेः (?)।

एतेन दुःखप्रागभावाधिकरणक्षणवृत्तित्वं वा नात्यन्तिकत्वम्। सर्वमुक्त्यङ्गीकारे चेदानीन्तनदुःखधारात्मके व्यभिचारात्। सर्वमुक्त्यनङ्गीकारेऽपि दृष्टान्तस्य प्रसाध्याङ्गकत्वप्रसङ्गात्।

अत्राहुः स्वसमानाधिरणदुःखप्रागभावाधिकरणक्षणवृत्ति यद् यत्तदन्यप्रतियोगिकत्वं, स्वसमानाधिकरणदुःखाधिकरणक्षणवृत्तिमदन्यत्वं वा तत्। सर्वमुक्तिकालीनसामान्यध्वंसमादायेदानीन्तनदुःखधारास्वपि साध्यसत्त्वे न व्यभिचारः। प्रदोपतद्ध्वंसयोः स्वसमानाधिकरणदीपप्रागभावयोरप्रसिद्ध्या न दृष्टान्तसिद्धिः। 'पार्थिवपरमाणुगते'त्याद्यग्रिमग्रन्थश्च तद्व्याख्यावसर एव सङ्गमनीयः।

**प्रकाशानुयायिनस्तु** पक्षे दुःखसन्ततिपदं दुःखत्वपरम्। अत्यन्तमुच्छिद्यत इत्यस्य च दुःखप्रागभावानधिकरणवृत्तिध्वंसप्रतियोगिमति वर्त्तते इत्यर्थः। तथा च दुःखप्रागभावानधिकरणवृत्तिर्यो ध्वंसस्तत्प्रतियोगिमात्रवृत्तित्वं साध्यम्। खण्डप्रलयदशायां तादृशकालस्याप्यप्रसिद्ध्या साध्याप्रसिद्ध्यापत्तेः। नाप्यभावीयविशेषणम् इदानीन्तनध्वंसप्रतियोगिदुःखमादाय सिद्धसाधनापत्तेः। कालस्य तादृशविशेषणतया दुःखप्रागभावानधिकरणत्वात्। परन्तु कालिकविशेषणत्वाभावीयविशेषणत्वान्यतरसम्बन्धेन तदधिकरणत्वं विवक्षितम्। पक्षधर्मताबलाच्च तादृशकालविशेषसिद्धिः। एवं तद्वृत्तित्वमपि कालिकविशेषणताविशेषेण सर्वमुक्तिकालसिद्धिदशायां तादृशतद्वृत्तित्वस्याप्रसिद्धेः। नाप्यभावीयविशेषणताविशेषेण कालस्य तेन सम्बन्धेन दुःखध्वंसानधिकरणतया बाधापत्तेः। परन्तु कालिकविशेषणत्वान्यतरसम्बन्धेनैव तद्वृत्तित्वमपि विवक्षणीयम्। न चाकाशादिवृत्तित्वेनार्थान्तरमिति वाच्यम्। दुःखध्वंसे तादृशान्यतरसम्बन्धेन(अर्थ ?)कालान्यवृत्तित्वस्य बाधात् चरमदुःखसहकालोत्पन्नध्वंसप्रतियोग्युपान्त्यदुःखवृत्तितया, सर्वचरममोक्ष्यमानपुरुषीय चरमदुःखस्थितिसमयवृत्तिपुरुषान्तरीयविनश्यदवस्थचरमदुःखवृत्तितया चार्थान्तरवारणाय मात्रान्तर्भावः। हेतौ च सन्ततित्वं कार्यम्। अचिरसमवेतधर्मध्वंसत्वे व्यभिचारवारणाय समवेतान्तप्रवेशः। सत्तादौ व्यभिचारवारणाय मात्रान्तर्भावस्य साध्ये विवक्षायामपि न तदन्तर्भावनीयम्। प्रदीपसन्ततिवदित्यस्य च प्रदीपद्व्यणुकवृत्तिरूपादिवदित्यर्थः। साध्ये मात्रानन्तर्भावे प्रदीपत्ववदित्यर्थः। दुःखप्रागभावानधिकरणेषु प्रदीपारम्भकपरमाणुषु वर्त्तते यो ध्वंसस्तत्प्रतियोगिनि दीपवत् द्व्यणुके तयोर्वृत्तेरित्याहुः।

तदसत्। अस्मात् सामान्यतो दुःखप्रागभावानधिकरणविशेषासिद्धावपि सिसाधयिषिततया मुक्तेरसिद्ध्यैव (?) स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणा-

वृत्तिप्रतियोगिदुःखध्वंसस्य, स्वसमानाधिकरणदुःखप्रागभावाधिकरणक्षणावृत्तिप्रतियोगि-दुःखध्वंसस्य, स्वसमानाधिकरणदुःखध्वंसाधिकरणक्षणावृत्तिदुःखध्वंसस्य वा प्रत्येक-मुक्तित्वात् । दुःखप्रागभावाधिकरणक्षणावृत्तिप्रतियोगिकध्वंसस्य, दुःखाधिकरणक्षणा-वृत्तेर्दुःख(ध्वंस) स्य वा सर्वमुक्तित्वात् । उपान्त्यदुःखध्वसेऽतिव्याप्तिवारणाय प्रतियोगि-कत्वान्तर्भावः ।

**पार्थिवपरमाणुगतरूपादिसन्तानेनानैकान्तिकमिदमिति चेन्न । सर्वात्मगतदुःखसन्ततिपक्षीकरणे फलतस्तस्यापि पक्षेऽन्तर्भावात् । नहि सर्वमुक्तिपक्षे सर्वोत्पत्तिमन्निमित्तस्यादृष्टस्याभावात् तदुत्पत्तौ वीजमस्ति । न च सर्वभोक्तृणामपवृक्तौ तदुत्पत्तेः प्रयोजनमस्ति । नहि बोजप्रयो-जनाभ्यां विना कस्यचिदुत्पत्तिरस्ति ।**

सर्वमुक्तिमुपेक्ष्यैव शङ्कते—**पार्थिवपरमाणुगतेति** । पार्थिवपरमाणुगतं रूपादिकं सन्तानं प्रयोज्यं यस्येति व्युत्पत्त्या आत्मसंयोगेनेत्यर्थः । वह्निक्रियाद्वारा आत्मसंयोगस्य पार्थिवपरमाणुवृत्तिरूपादिप्रयोजकत्वात् । दुःखप्रागभावादिसामानाधिकरण्यसम्पादनाय आत्मानुधावनम् । यथाश्रुतन्तु न सङ्गच्छते । रूपतदध्वंसयोः स्वसमानाधिरणदुःख-प्रागभावदुःखयोरप्रसिद्धया(?)पार्थिवपरमाणुरूपादावपि साध्यसत्त्वात् ।

प्रकाशकृन्मतेऽप्युक्तव्युत्पत्त्या सन्तानान्तं वह्न्यात्मसंयोगमादाय तद्वृत्तिसंयोग-त्वादावनैकान्तिकमित्यर्थः । वह्न्यात्मयोरुभयोरेव कालिकविशेषणत्वाभावीयविशेषण-त्वान्यतरसम्बन्धेन दुःखप्रागभावाधिकरणतया तद्वृत्तिसंयोगादौ साध्याभावादिति भावः । इदमुपलक्षणं घटपटसंयोगादिकमादायापि व्यभिचारो बोध्यः ।

सर्वमुक्तिसत्त्वान्न व्यभिचार इति समाधत्ते **सर्वात्मगतेति** । सर्वात्मगतदुःख-समूहं दुःखत्वेन पक्षीकरणे इत्यर्थः । फलतः सर्वमुक्तेरप्रसिद्धया । पक्षेऽन्तर्भावादिति । इदानीन्तनदुःखधारात्मकपक्षतुल्यत्वादित्यर्थः । सर्वमुक्तिकालीनसामान्यध्वंसमादाय तत्रैवात्रापि साध्यसत्त्वादिति भावः ।

ननु सर्वमुक्तिसिद्धावपि तत्काले नात्मसंयोगसामान्यध्वंसस्तदानीमपि आत्म-संयोगधारोत्पत्तेरित्यत आह **नहीति** । पक्षे बीजमस्ति सामग्र्यस्ति । **न चेति** । नवेत्यर्थः । प्रयोजनमस्ति प्रामाणिकं फलमस्ति । बोजप्रयोजनाभ्यामिति । सामग्री-प्रामाणिकफलाभ्यामित्यर्थः । अस्ति प्रामाणिकी भवति । तथा च सर्वमुक्तिकाले आत्मसंयोगोत्पत्तौ कारणबाधो मानाभावादिति भावः ।

यथाश्रुतन्तु न सङ्गच्छते । प्रयोजनत्वं ध्वंसवारणाय, कर्त्तव्यताप्रयोज-केच्छाविषयत्वम् । तदाश्रयेन विनापि भोगस्य रागादिध्वंसस्य नान्तरीयकगमनादिकस्य परमाणुपरत्वादिति तद्ध्वंसादेश्चोत्पादात् ।

**ननु सर्वमुक्तिरित्येव नेष्यत इति चेत् तर्हि य एव नापवृज्यते तस्यैव दुःखसन्तानेऽनैकान्तिकमिदं किमुदाहरणान्तरगवेषणया। एवमस्तु। न चोदाहरणमादरणीयमिति चेन्न असिद्धेः। सिद्धौ वा संसार्येकस्वभावा एव केचिदात्मान इति स्थिते अहमेव यदि तथा स्यां तदा मम विपरीतप्रयोजनं पारिव्राजकमिति शङ्कया न कश्चित्तदर्थं ब्रह्मचर्यादिदुःखमनुभवेत्।**

मीमांसकः शङ्कते **सर्वमुक्तिरेवेति**। दुःखध्वंसस्य सामान्यतो दुःखाधिकरणक्षणावृत्तित्वमेव नेष्यत इत्यर्थः। न चोक्तानुमानादेव व्यभिचारास्फूर्तिदशायां तत्सिद्धिरिति वाच्यम्। पक्षतावच्छेदकसामानाधिकरण्येन निरुक्तात्यन्तोच्छेदविषयत्वांशे तदनुमितेः प्रामाण्येऽपि पक्षतावच्छेदकावच्छेदेन तादृशविषयत्वांशे तदनुमितेः प्रामाण्ये मानाभावादिति भावः, असिद्धेरिति भावः। **असिद्धेरिति**। तादृशपुरुषस्यैवासिद्धेरित्यर्थः। बाधकाभावादुक्तानुमितेः पक्षतावच्छेदकावच्छेदेन अत्यन्तोच्छेदविषयत्वांशेऽपि प्रामाण्यादिति भावः। पक्षतावच्छेदकावच्छेदेन तद्विषयत्वांशे तदनुमितेरप्रमात्वे बाधकमाह **सिद्धौ वेति**। तादृशपुरुषस्य सिद्धौ वेत्यर्थः। सर्वमुक्त्यभावसिद्धौ वेत्यर्थ इति **कश्चित्**। **संसार्येकस्वभावाः**। स्वरूपाः। स्थिते ज्ञाते। विपरीतप्रयोजनं दुःखमात्रसाधनम्। तदर्थं मोक्षार्थम्।

**अथ यदि सर्वदुःखसन्ततिनिवृत्तिर्भविष्यति तर्हि इयता कालेन किं नाम नाभूत? एकैकस्मिन् काले यद्येकोऽप्यपवृज्येत तदाप्युच्छन्नः संसारः स्यात् कल्पानामनन्तत्वात्। सत्यम्। अनन्ता ह्यपवृक्ता न तु सर्वे सम्प्रति संसारस्य प्रत्यक्षसिद्धत्वात्। नन्वेतदेव न स्यादित्युच्यत इति चेन्न कालनियमे प्रमाणाभावात्।**

अभिप्रायमुद्घाटयितुं शङ्कते **अथेति**। एकैकस्मिन्काल इति। एकैकस्मिन् कल्प इत्यर्थः। उच्छन्नः संसार इति। अयं कालः सर्वदुःखसन्ततिनिवृत्तिमान् स्यादित्यर्थः। **सम्प्रति**। अस्मिन् काले। **संसारस्य** दुःखस्य। **एतदेवेति**। सर्वदुःखस्य सन्ततिनिवृत्त्यधिकरणत्वमेव, वर्त्तमानकालवत् कस्यापि कालस्य न स्यादित्यर्थः।

ननु वर्त्तमानकालस्य तादृशनिवृत्त्यधिकरणत्वे प्रत्यक्षस्य बाधकत्वेऽपि भाविकालस्य तादृशनिवृत्त्यधिकरणत्वे किं बाधकम्? न च यो यत्कालवृत्तिध्वंसप्रतियोगिकालावृत्तिकालोत्तरोत्पत्तिको भवतीति व्याप्तिरेव बाधिकेति वाच्यम्। उत्पत्स्यमानघटे व्यभिचारात्। (न च भूतजातीयकार्यं भवति तन्नोत्पत्स्यते?) यथा गगनादिरिति व्याप्तिरेव बाधिकेति वाच्यम्। सर्वमुक्तेरपि ध्वंसत्वादिना भूतजातीयत्वात्। सर्वमुक्तिं पक्षीकृत्य उत्पत्स्यमानत्वाभावसाधने सिद्ध्यसिद्धिभ्यां व्याघाताच्चैति चेन्न। पूर्वकाल-

दृष्टान्तेन कालत्वस्य दुःखवत्त्वव्याप्यत्वेन निश्चयात् तस्यैव बाधकत्वात्। प्रलया-भ्युपगमेऽपि ब्रह्माण्डान्तरे तदानीं दुःखसत्त्वेन व्यभिचारविरहादिति भावः। भावार्थं दूषयति—**कालनियम इति**। कालदुःखवत्त्वनियमे मानाभावादित्यर्थः।

**न च सर्वोत्पत्तिमन्निमित्तादृष्टानुपपत्तौ सर्वमुक्तेरनुत्पत्तिः, अपवर्गस्य भोगतत्साधनेतरत्वात्। नह्यदृष्टनिवृत्तिरदृष्टसाध्या, एकस्याप्यनपवर्गप्रसङ्गात्।**

**अदृष्टानुपपत्ताविति**। अतस्तस्याभावेनेत्यर्थः। **भोगतत्साधनेतरेति**। तथा च भोगतत्साधनं प्रत्येव प्रतियोगितातिरिक्तरूपेणादृष्टं हेतु; न तु तदितरं प्रतीति भावः।

नन्वेवमदृष्टनिवृत्तेः स्वसमानाधिकरण-स्वसमानकालीनादृष्टसाध्यत्वं कथं स्यात्? भोगतत्साधनेतरत्वादित्यत आह **नहीति**। **अदृष्टसाध्येति**। स्वसमानाधिकरण-स्वसमानकालीनादृष्टसाध्येत्यर्थः। स्वं निवृत्तिः। तेन प्रतियोगिविधया साध्यत्वेऽपि नासङ्गतिः। **अनपवर्गप्रसङ्गादिति**। आत्यन्तिकादृष्टनाशो न स्यादित्यर्थः। एतच्च वस्तुगतिमनुरुध्योक्तम्। वस्ततस्तु कार्यमात्रं प्रति अदृष्टस्य कारणत्वेऽपि न सर्वमुक्त्यनुपपत्तिः। तत्त्वज्ञानजन्यादृष्टस्य मुक्तिरूपफलनाश्यतया तत एव चरममुक्तिसम्भवादिति ध्येयम्।

**स्यादेतत्। आदिमती प्रदीपसन्ततिर्निवर्त्तते। दुःखसन्ततिस्त्वियमनादिरनुवर्त्तिष्यते इति चेन्न, मूलोच्छेदानुवृत्त्योः प्रयोजकत्वात्। मूलोच्छेदाद्धि सन्ततेरुच्छेदो मूलानुवृत्तौ चानुवृत्तिः। अन्यथा आदिमत्त्वाविशेषेऽपि कालानियमो न स्यात्। काचित् प्रदीपसन्ततिः प्रहरमनुवर्त्तते, काचिदहोरात्रमित्याद्यनियमो हि तैलादिमूलोच्छेदादिनियमप्रयुक्त इति। "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत" इत्याद्यागमाच्चायमर्थोऽध्यवसेयः।**

कालनियमे मानाभावादिति पूर्वमुक्तं तत्र प्रमाणं शङ्कते **स्यादेतदिति**। प्रदीपसन्ततिर्विजातीयप्रदीपसामान्यम्। निवर्त्तते वैजात्यरूपेण कालनिष्ठात्यन्ताभावप्रतियोगी भवति। दुःखसन्ततिस्तु दुःखसामान्यन्तु। अनुवर्त्तिष्यते सर्वस्मिन्नेव काले वर्त्तिष्यते। तेन रूपेणादृष्टस्य तेन रूपेण कालत्वव्यापकत्वनियमाद्। तथा च दुःखत्वं कालव्यापकतावच्छेदकम् अनादितावच्छेदकत्वादित्यनुमानमेव कालत्वस्य दुःखत्वव्याप्यत्वे मानं विजातीयप्रदीपत्वचित्रत्वादिकमेव व्यतिरेकदृष्टान्तः। स्वाश्रयध्वंसकालीन-प्रागभावप्रतियोगिमात्रवृत्तिर्या जातिस्तद्वत्त्वं तेन रूपेणादिमत्त्वम्। विजातीयप्रदीपत्वचित्रत्वादिनाऽनादित्ववारणाय समानकालीनान्तं प्रागभावविशेषणम्। मात्र-

पदमप्यत एव। विनष्टदुःखादिवारणाय विजातीयस्वाश्रयध्वंसासमानकालीनप्रागभाव-प्रतियोगिवृत्तिर्या जातिस्तद्वत्त्वम्. तेन रूपेणादिमत्त्वमिति भावः।

अप्रयोजकतया दूषयति **नेति**। मूलोच्छेदानुवृत्त्योरिति सावधारणम्। प्रयोजकत्वात् कार्योच्छेदानुवृत्त्योः प्रयोजकत्वात्। सन्ततेः कार्यस्य। प्रदीपसन्ततिः विजातीयप्रदीपधारा।

**केचित्तु** दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वादिति पूर्वोक्तानुमानेऽनादित्व-हेतुना सत्प्रतिपक्षमाशङ्कते **स्यादेतदितीत्याहुः**।

तदसत्। पूर्वोक्तानुमाने स्वसमानाधिकरण-दुःखप्रागभावाधिकरणक्षणावृत्ति-यद् यत्तदन्यप्रतियोगिध्वंसप्रतियोगित्वादिरूपस्यात्यन्तोच्छिन्नत्वस्य साध्यतया तद-भावस्यानादित्वहेतुना साधने प्रदीपादावेव व्यभिचारापत्तेः। तस्यापि प्रदीपत्वादिना-ऽनादित्वात्। न च पूर्वोक्तानुमाने दुःखत्वं पक्षः, दुःखप्रागभावानधिकरणवृत्तिध्वंस-प्रतियोगिमात्रवृत्तित्वं साध्यम्। कार्यमात्रसमवेतधर्मत्वरूपं सन्ततित्वं हेतुरिति **प्रकाशानुयायि**व्याख्यानाभिप्रायेणानादितावच्छेदकत्वहेतुना प्रतिपक्षमाशङ्कत इति वाच्यम्। तथापि शब्दत्वादौ व्यभिचारात्।

न च पूर्वोक्तानुमाने दुःखत्वं पक्षः, स्वाश्रयप्रागभावासमानकालीनध्वंसप्रति-योगिवृत्तित्वं साध्यम्, भावकार्यवृत्तित्वं हेतुरित्यभिप्रायेण अनादितावच्छेदकत्वहेतुना आत्मादिव्यतिरेकदृष्टान्तेन सत्प्रतिपक्षमाशङ्कत इति वाच्यम्। स्वत्वस्यैकस्यानु-गतस्याभावेन पूर्वोक्तानुमाने तथा साध्यसम्भवादिति ध्येयम्।

दुःखध्वंसस्यात्यन्तिकत्वे श्रुतिमपि प्रमाणमाह **अशरीरमिति**। वाव इति सम्बोधने। भो इत्यर्थः। सम्बोध्या मैत्रैयी। सन्तं मिथ्यावासनाशून्यम्। प्रियाप्रिये सुखं दुःखञ्च। न स्पृशतः नोत्पद्येते। अयमर्थः—सुखदुःखध्वंसस्यात्यन्तिकत्वरूपोऽर्थः।

**मणिकृतस्तु** वावसन्तमिति यङ्लुकि। तथा च शरीरयोगं विना पुनः पुनर्व-सन्तमित्यर्थ इत्याहुः। तदसत्। तथासति 'अभ्यस्तादन्तिरनकार' इति नकारलोपा-पत्तेः। तस्मात् **कल्पतरुकार**सम्मतोक्तव्याख्यैव ज्यायसी।

**स्यादेतत्। तत्त्वज्ञानं हि विरोधितया समूलं मिथ्याज्ञानमुन्मूलयन् निःश्रेयसहेतुः। न चोपपत्त्या शब्देन वा जनितमिदं परोक्षम् अपरोक्षं मिथ्याज्ञानं निवर्तयितुमुत्सहते। दिङ्मोहादौ तथानुपलब्धेः। ततोऽपरोक्ष-मव्युत्थायि बलवत्तरं तत्त्वज्ञानं तन्निवर्त्तनसमर्थम्। तच्च कुतो भवतीत्यत आह तच्चेति। ईश्वरदेशना उपदेशो वेद इति यावत्। तेनाभि-व्यक्तात् प्रतिपादिताद् धर्मादेवेत्यर्थः। अयमर्थः शास्त्रेण पदार्थान् विविच्य श्रुतिस्मृतीतिहासपुराणोपदिष्टयोगविधिना दीर्घकालादरनैरन्तर्यसेवितान्निवृ-**

**त्तिलक्षणाद् धर्मादेव तत्त्वज्ञानमुत्पद्यते, यतोऽपवृज्यते। न ह्युपपत्त्या विना विवेको न च विवेचनं विनोपदेशमात्रेणाश्रद्धामलक्षालनं, न च तेन विना शुकाभ्यासो, न च तमन्तरेण निवर्त्तको धर्मो, न च तेन विना दृढभूमिविभ्रमसमुन्मूलनसमर्थंस्तत्त्वसाक्षात्कार इति।**

न च साधर्म्यवैधर्म्यहेतुकस्तत्त्वज्ञानं यदि निःश्रेयसहेतुस्तदा संसारितादशायामपि कदाचित् तादृशज्ञानसत्त्वात् कुतो न मुक्तिरित्यत आह **भाष्ये तच्चेति**। साधर्म्यवैधर्म्यहेतुकतत्त्वज्ञानञ्चेत्यर्थः। **ईश्वरदेशनेति**। ईश्वरदेशना वेदः। तेनाभिव्यक्तः कथितो यो धर्मो निदिध्यासनरूपस्तस्मादेव तत्सहकारेणैव। निःश्रेयसहेतुरित्यनुषज्यते। एतच्च समाधिसौकर्यादुक्तम्। वस्तुतस्तु मननस्यानुमितित्वव्याप्यवैजात्येनैव मोक्षजनकत्वम्। तच्च वैजात्यं संसारिताकालीनसाधर्म्यादिहेतुकतत्त्वज्ञानव्यावृत्तमतो न ततो मुक्तिरित्यपि बोध्यमित्येव भाष्यव्याख्यानं ज्यायः।

**आचार्यास्तु** शरीरादिभिन्नत्वप्रकारकात्मसाक्षात्कार एव मोक्षहेतुः। 'तमेव विदित्वे'ति श्रुतावपि तं विदित्वैवेति एवकारव्यत्ययेन योजनेत्यभिप्रायेण तच्चेत्यादिभाष्यमन्यथावतारयति **स्यादेतदिति**। **तत्त्वज्ञानं हीति**। विरोधितया विरोधिविषयतया समूलं मिथ्याज्ञानमुन्मूलयत् तत्त्वज्ञानं हीति योजना। समूलं मिथ्याज्ञानमुन्मूलयत् प्रत्यक्षमूलकं मिथ्याज्ञानं प्रतिबध्नत् पक्षमूलकस्य मिथ्याज्ञानस्य प्रतिबन्धसमर्थमिति यावत्। तथैव सकलप्रामाणिकसिद्धत्वादिति भावः।

समूलं सवासनम्। वासना च संस्कार इति **प्रकाशः**। **उपपत्त्येति**। अनुमानेनेत्यर्थः। **शब्देन वेति**। यद्यप्येतन्मते शाब्दं ज्ञानं नास्ति तथापि न्यायमतमभ्युपेत्येदमुक्तम्। यद्वा उपपत्तिपदं शब्देतरलिङ्गपरम्। तथा च शब्देतरलिङ्गेन शब्दलिङ्गेन वेत्यर्थः। इदं तत्त्वज्ञानम्। **मिथ्याज्ञानमिति**। साक्षात्कारात्मकं मिथ्याज्ञानमित्यर्थः। **निवर्त्तयितुं** प्रतिबद्धुम्। **उत्सहते** समर्थं भवति। **दिङ्मोहादाविति**। इयं दिक् प्राचीति साक्षात्कारिभ्रमे इयं दिक् न प्राची सूर्यास्तशालित्वादित्याद्यानुमानिकादि ज्ञानस्य प्रतिबन्धकत्वादर्शनादित्यर्थः। **अपरोक्षम्** साक्षात्कारात्मकम्। **अव्युत्थायि** भ्रमत्वज्ञानानास्कन्दितम्। **बलवत्तरम्** प्रमात्वाभावानास्कन्दितं ज्ञानम्। **तन्निवर्तनसमर्थमिति**। साक्षात्कारात्मकमिथ्याज्ञानप्रतिबन्धसमर्थमित्यर्थः। बलवत्तरं संस्काराधायकमिति तु **प्रकाशः**।

तदसत्। तत्त्वज्ञानस्य संस्कारजनकत्वे मानाभावात्। संस्कारजनकत्वस्य प्रतिबन्धकतायामनुपयोगित्वेन तदभावस्य व्यर्थत्वप्रसङ्गाच्च। **तच्चेतीति**। एवञ्च तच्चेत्यस्य साक्षात्कारात्मकं तत्त्वज्ञानञ्चेत्यर्थ इति भावः। धर्मात् योगजधर्मादृष्टविशेषात्। नन्वेवं शास्त्रस्य तत्र नोपयोग इत्यत आह **अयमर्थ इति**। **शास्त्रेणेति** शास्त्रबोधितसाधर्म्यवैधर्म्येणेत्यर्थः। **विविच्य** परस्परभिन्नत्वेनानुमाय। **योगविधिनेति**

आसनप्राणायामादिनेत्यर्थः। **दीर्घकालादरनैरन्तर्यसेवितात्** निरन्तरदीर्घकालात् तत्रैव शरीरादिभिन्नत्वेनानुज्ञाने निदिध्यासनाद्यैः सेवितादुत्पादितात्। ततश्च धर्मविशेषणं निरन्तरत्वं क्रमिकत्वम्। आदृतात् उत्पादितात्। **निवृत्तिलक्षणाद्धर्मादेव**। निवृत्तिः भोगादिनिवृत्तिः। सैव लक्षणं चिह्नं यस्य तादृशाद् धर्मादेव। योगजधर्माख्यादृष्टविशेषादेवेति यावत्। **तत्त्वज्ञानमिति**। साक्षात्कारत्वविशिष्टं तत्त्वज्ञानमित्यर्थः।

तथा च मननहेतुसाधर्म्यवैधर्म्यज्ञानद्वारा शास्त्रस्य मोक्षजनकतत्त्वज्ञाने उपयोग इति भावः। यद्यपि मोक्षज्ञानमुपनीतभानार्थकमलौकिकप्रत्यक्षं तच्चानुमानिकादिनिश्चयस्यापि प्रतिबध्यम्। लौकिकप्रत्यक्षस्यैव समानेन्द्रियजविपरीतलौकिकनिश्चयनिवर्त्त्यत्वनियमात्। अन्यथा सुरभिचन्दनमित्याद्युपनीतभानेऽपि आनुमानिकादिविपरीतनिश्चयस्य अभिन्नेन्द्रियजन्यविपरीतनिश्चयस्य वा प्रतिबन्धकत्वापत्तेः। दिङ्मोहादिदोषविशेषजन्यतया न विपरीतनिश्चयप्रतिबध्यदोषविशेषाजन्यज्ञानस्यैव तत्प्रतिबध्यत्वाद् इत्यनया रीत्या तच्चेत्यादिग्रन्थावतारणमसङ्गतम्। तथापि प्रत्यक्षनिश्चयसामान्यं प्रत्येव प्रत्यक्षरूप एव विपरीतनिश्चयो विरोधी नत्वानुमानिकादिनिश्चयः। सुरभिचन्दनमित्याद्युपनीतभानेऽप्यानुमानिकादिविपरीतनिश्चयो न विरोधीति जरन्मतानुसारेणेदम्।

**स्वतन्त्रास्तु** लौकिकप्रत्यक्षान्यविशिष्टबुद्धिं प्रत्येवानुमित्यादिसाधारणविपरीतनिश्चयः प्रतिबन्धक इति सर्वसिद्धम्। तत्र लौकिकत्वं न लौकिकसन्निकर्षावच्छेदक 'इदं पश्यामी'त्यनुव्यवसायसिद्धलौकिकत्वाख्यविषयताविशेषः, किन्तु तद्विषयिताव्यापकः साक्षात्कारत्वावच्छिन्नविषयितानामको भगवज्ज्ञानसाधारणविषयिताविशेषः। स च लौकिकप्रत्यक्ष इव योगजसाक्षात्कारे दिङ्मोहादिरूपदोषविशेषजन्योपनीतभाने च वर्त्तते। दिङ्मोहादावपि प्राचीत्वं साक्षात्करोमीत्याद्यनुव्यवसायात्। अन्यथा प्राचीत्वोपरागत्वरक्तत्वादीनामानुमानिकलोकालोकाद्यभावनिश्चयसत्त्वे दोषविशेषजन्योपनीतभानमपि तेषां न स्यात्। लौकिकप्रत्यक्षान्यत्ववत् तद्वारणाय विशेषाजन्यत्वस्यापि प्रतिबध्यतावच्छेदककोटौ प्रवेशे महद्गौरवप्रसङ्गात्।

दोषविशेषाजन्योपनीतभाने च न तादृशी व्यापिका विषयिता, तेन सुरभिचन्दनमित्याद्युपनीतमाने, इदं रजतमित्यादिदोषविशेषजन्यस्मर्यमाणारोपे च आनुमानिकादिविपरीतनिश्चयोऽपि विरोधी। न चेदं रजतमित्यादिदोषविशेषजन्योपनीतभ्रमेऽपि रजतत्वं साक्षात्करोमीत्याद्यनुव्यवसायसत्त्वेन तादृशविषयितासत्वात् तत्राप्यानुमानिकादिविपरीतनिश्चयस्याप्रतिबन्धकतापत्तिर्दुर्वारैवेति वाच्यम्। तत्र रजतत्वं पश्यामीत्यनुव्यवसायस्य लौकिकसन्निकर्षजन्यतावच्छेदकलौकिकविषयत्वांशे भ्रमत्वं, रजतत्वं साक्षात्करोमीत्यनुव्यवसायस्यापि साक्षात्कारत्वनिरूपितविषयत्वांशे भ्रमत्वमनायत्या कल्पनात्। न वा दिङ्मोहादावपि प्राचीत्वं साक्षात्करोमीत्याद्यनुव्यवसाये लौकिक-

सन्निकर्षजन्यतावच्छेदकलौकिकत्वाख्यविषयताया एव भ्रमो ननु तदतिरिक्तविषयिता तद्विषय इति वाच्यम् । बाधकं विना भ्रमत्वकल्पनायोगाद् । (न चातिरिक्तविषयता-कल्पनायोगात्(?) न चातिरिक्तविषयिताकल्पनागौरवमेव बाधकमिति वाच्तम् । अति-रिक्तैकल्पनामपेक्ष्यानन्तदोषविशेषजन्यत्वस्य प्रतिबध्यतावच्छेदके प्रवेशस्यैव गरीय-स्त्वात् ।

न च तादृशविषयताशालिप्रत्यक्षान्यत्वं प्रतिबध्यतावच्छेदकं, तादृश-विषयिताशालिप्रत्यक्षनिश्चयान्यत्वं वा । आद्ये लौकिकसंशयस्यापि आनुमानिकादि-निश्चयाप्रतिबध्यत्वापत्तेः । अन्त्ये दोषविशेषजन्यसंशयस्य प्रतिबध्यत्ववारणाय दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकघटकत्वमावश्यकमिति वाच्यम् । सामान्यतः तादृशविषयिताशालिप्रत्यक्षान्यत्वस्यैव प्रतिबध्यतावच्छेदकघटकत्वात् ।

न चैवमानुमानिकादिविपरीतनिश्चयसत्त्वेऽपि लौकिकसंशयापत्तिरिति वाच्यम् । तदानीं लौकिकप्रतियोगिनिश्चयस्योत्पत्त्या तस्यैव कार्यसहभावेन संशयप्रतिबन्धकत्वाभ्युपगमात् । एवं लौकिकप्रत्यक्षं प्रति समानेन्द्रियजन्यलौकिक-विपरीतनिश्चयस्य प्रतिबन्धकतायामपि दोषविशेषाजन्यत्वं प्रतिबध्यतावच्छेदके न निवेश्यते किन्तु सामान्यतस्तदिन्दियजन्यप्रत्यक्षं प्रत्येव तदिन्द्रियजन्यसाक्षात्कार-त्वनिरूपितविषयिताविशेषशालिविपरीतनिश्चयत्वेन प्रतिबन्धकत्वम् । योगजधर्म-जन्यसाक्षात्कारस्य 'अयमुरग' इत्यादिदोषविशेषजन्योपनीतभानस्य च लौकिकप्रत्यक्ष-प्रतिबन्धकत्वमिष्टमेव ।

न चैवं 'शङ्खो न पीतः' 'अयं नोरगः' 'स्फटिको न रक्तः' इत्यादि लौकिक-चाक्षुषानन्तरं 'शङ्खः पीत,' अयमुरगः' 'रक्तः स्फटिकः' इत्यादिपित्ताद्यात्मकदोष-विशेषजन्यचाक्षुषभ्रमः कथं स्यादिति वाच्यम् । पित्तादेर्दोषविशेषस्य कार्यसहभावेन पीतत्वाभावादिलौकिकप्रत्यक्षप्रतिबन्धकतया पूर्वं पित्तादिदोषसत्त्वे तदुत्पत्तिसमये वा पीतत्वाभावादिलौकिकप्रत्यक्षासम्भवात् ।

न च तथा चक्षुषा 'शङ्खो न पीत' इत्यादि लौकिकविपरीतनिश्चयोत्तरं पित्तादिदोषोत्पत्तौ तत्र तदग्रिमक्षणे 'शङ्खः पीतः' इत्यादिपित्तादिदोषविशेषजन्य-भ्रमो न स्यादिति वाच्यम् । तत्र फलबलात् क्षणैकविलम्बेनैव पित्तादिदोषविशेषोत्पत्ति-कल्पनात् । क्षणैकविलम्बाभावस्य शपथमात्रनिर्णेयत्वात् ।

न च 'शङ्खो न पीतः' इत्यादि लौकिकप्रत्यक्षं प्रति अनन्तदोषविशेषाणां प्रति-बन्धकत्वकल्पनामपेक्ष्य दोषविशेषजन्यत्वस्य प्रतिबध्यतावच्छेदककोटौ प्रवेशो लघीयानिति वाच्यम् । 'शङ्खः पीतः' इत्यादिभ्रमोत्पत्तिकाले तदुत्तरकाले वा सर्व-(शङ्ख ?) धर्मितावच्छेदकपीतत्वाभावादिलौकिकप्रत्यक्षस्यानायत्त्यापि दोषविशेषाणां प्रतिबन्धकत्वात् ।

अथ तथापि यत्र 'शङ्खो न पीतः' इत्याद्यपेक्षाबुद्ध्यात्मकलौकिकविपरीतनिश्चयोत्तरं पित्तादिरूपदोषोत्पत्तिस्तत्र तदग्रिमक्षणे 'शङ्खः पीतः' इत्यादि भ्रमोत्पत्तये दोषविशेषाजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वमावश्यकम्। तत्रापि चतुर्थक्षणे दोषोत्पादाभ्युपगमे क्षणद्वयोपपत्तेरिति चेन्न। अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वस्य सर्वसिद्धत्वात्। तावता पित्तादिरूपदोषविशेषजन्यत्वस्य पीतत्वादिविपरीतनिश्चयप्रतिबध्यतावच्छेदके प्रवेशस्यावश्यकत्वेऽपि मिथ्याज्ञानप्रतिवध्यतावच्छेदके मिथ्यावासनादिरूपदोषविशेषजन्यत्वप्रवेशे मानाभावात्।

तत्त्वज्ञानस्य मिथ्याज्ञानप्रतिबन्धकतायाः सर्वसिद्धत्वादित्यभिप्रायेणावतरणिकामाह तत्त्वज्ञानं हीत्यादि पूर्ववद् योजना। समूलं मिथ्यावासनादिरूपदोषविशेषमूलकम्। अपरोक्षं साक्षात्कारत्वनिरूपितविषयिताविशेषविशिष्टम्। मिथ्याज्ञानं मिथ्यावासनादिरूपदोषजन्यं मिथ्याज्ञानमित्यर्थः। **दिङ्मोहादाविति**। साक्षात्कारत्वनिरूपितविषयिताशालिनि दोषविशेषजन्यदिङ्मोहादौ आनुमानिकादिविपरीतनिश्चयस्य प्रतिबन्धकत्वादर्शनादित्यर्थः।

न च मिथ्याज्ञाने तादृशविषयितायां मानाभाव इति वाच्यम्। दिङ्मोहादौ 'प्राचीत्वं साक्षात्करोमि' इत्यनुव्यवसायवद् अत्रापि 'आत्मनि शरीराद्यभिन्नत्वं साक्षात्करोमि' इत्याद्यनुव्यवसायात्। न चासौ भ्रमो बाधकाभावादिति भावः। अपरोक्षमिति। साक्षात्कारत्वनिरूपितविषयिताविशिष्टमित्यर्थः। तच्चेतीति। एवञ्च तच्चेत्यस्य साक्षात्कारत्वनिरूपितविषयिताविशिष्टं तत्त्वज्ञानञ्चेत्यर्थ इति भावः। तत्त्वज्ञानमुत्पद्यत इति। साक्षात्कारत्वनिरूपितविषयिताविशिष्टं तत्त्वज्ञानमुपद्यते इत्यर्थः।

न च तथा सत्यपि इन्द्रियसन्निकर्षादौ पित्तादिरूपदोषप्रतिबन्धान्न पीतत्वाभावादिग्रहस्तथा मिथ्यावासनादिदोषसत्त्वे योगजधर्मादपि न तत्त्वज्ञानसम्भव इति वाच्यम्। दोषस्य लौकिकसन्निकर्षजन्यतावच्छेदकलौकिकत्वाख्यविषयिताशालिप्रत्यक्षं प्रत्येव प्रतिबन्धकत्वात् तत्सत्त्वेऽपि योगजधर्मात् तत्त्वज्ञानोत्पत्तौ बाधकाभावादिति भावः। सर्वमन्यत् पूर्ववद् इत्याचार्यग्रन्थं परिष्कृत्य योजयन्ति।

ननु श्रुत्यादिवाक्येभ्य एव श्रवणरूपं शरीरादिभिन्नत्वेनात्मज्ञानमस्ति। तत एव निदिध्यासनद्वारा तत्त्वसाक्षात्कारो भविष्यति किं शास्त्रबोधितसाधर्म्यज्ञानादिनेत्यत आह **न हीति**। उपपत्त्या विना शास्त्रबोधितसाधर्म्यादिज्ञानेन विना। विवको मननाख्यं शरीरादिभिन्नत्वेनात्मानुमानम्। विवेचनं विनेति साधर्म्यादिहेतुकमननाद् विनेत्यर्थः। उपदेशमात्रेणेति श्रवणमात्रेणेत्यर्थः। निदिध्यासनद्वारेति शेषः। अश्रद्धामलक्षालनं मिथ्यावासनानाशरूपव्यापारजनकस्तत्त्वसाक्षात्कारः। अश्रद्धा मिथ्यावासना। तद्रूपं यन्मलं तद्रूपो यो दोषस्तस्य क्षालनं विनाशो यस्मादिति व्युत्पत्तेः। मननस्यापि तत्त्वसाक्षात्कारहेतुतायाः श्रुतिसिद्धत्वादिति भावः।

नन्वेवं मननमेवास्तु किं श्रवणेनेत्यत आह **न च तेन बिनेति**। श्रवणेन-विनेत्यर्थः। शुकाभ्यास इति। मननेऽप्रामाण्यशङ्काजनकपदार्थोपस्थितिविशिष्टस्य पुरुषस्य अभ्यासो निदिध्यासनमित्यर्थः। निदिध्यासनं प्रति अगृहीताप्रामाण्यकमनन-स्यैव कारणतायाः सर्वसिद्धत्वात्।

न च मननं मुक्तावेव हेतुर्नतु निदिध्यासनमिति वाच्यम्। मुक्तिजनने उत्तरोत्तरेषां पूर्वपूर्वव्यापारत्वात्, आशुविनाशिनां क्रमिकाणामन्यथा मेलकासम्भवादिति भावः। इदमुपलक्षणम्। श्रवणस्यापि मोक्षहेतुत्वस्य श्रुतिसिद्धत्वादित्यपि बोध्यम्। ननु श्रवणमननमेवास्तु किं निदिध्यासनेनेत्यत आह **न च तमन्तरेणेति**। योगजविधिना शरीरादिभिन्नतया आत्मज्ञानरूपं निदिध्यासनाख्यमभ्यासमन्तरेणेत्यर्थः। **निवर्त्तको धर्मः** योगजो धर्मः। **दृढभूमिविभ्रमेति**। ज्ञानान्तरानिवर्त्तनीयमिथ्याज्ञानमित्यर्थः। इदमुपलक्षणम्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यश्चे'ति श्रुत्या श्रवणमननवन्निदिध्यासनस्यापि मोक्षहेतुत्वबोधनात् तस्याप्यावश्यकत्वमित्यपि बोध्यम्।

न च सौभरिप्रभृतीनां निदिध्यासन-तज्जन्ययोगजधर्मयोः सत्त्वेऽपि तत्त्वज्ञानं न जातमिति पुराणादिसिद्धं तत्कथमुपपद्यते सकलसामग्रीसत्त्वे कार्योत्पत्तेरावश्यकत्वादिति वाच्यम्। यागादिजन्यापूर्वेण·······अनेनापि तत्त्वज्ञानजनने कालविशेषस्य सहकारित्वात्। वस्तुतस्तु सौभरिप्रभृतीनां योगजधर्मजनकनिदिध्यासनस्य न जातत्वे तत्त्वज्ञानजनकस्य तस्याभावान्न तत्त्वज्ञानम्। न हि तत्त्वज्ञानजनकतावच्छेदकनिदिध्यासननिष्ठवैजात्यव्यापकवैजात्येन योगजधर्मजनकतया तदतिरिक्तनिदिध्यासनस्यापि तज्जनकत्वम्।

न च श्रवणमननयोरविशिष्टतया तत्त्वज्ञानतावच्छेदकवैजात्यावच्छिन्ननिदिध्यासनोत्पत्तावेव तेषां किं बाधकमिति वाच्यम्। तादृशवैजात्यावच्छिन्ननिदिध्यासनं प्रति योगजधर्मप्रयोजकमनननिष्ठवैजात्यव्याप्यवैजात्येन मननस्य कारणत्वात्। तादृशमननस्य च तेषामभावात्। तादृशविजातीयमननं प्रति विजातीयश्रवणस्य हेतुत्वात्। तच्च श्रवणनिष्ठवैजात्यं योगजधर्मप्रयोजकश्रवणनिष्ठवैजात्यव्याप्यम्।

न च तादृशश्रवणोत्पत्तावेव तेषां किं बाधकमिति वाच्यम्। यथा हि संसारितादशायामपि श्रुतिवाक्यज्ञानादिरूपात्मविशेष्यकशरीरादिभिन्नत्वप्रकारकशाब्दसामान्य-सामग्रीसत्त्वेऽपि न योगजधर्मप्रयोजकविजातीयश्रवणोत्पत्तिः। तादृशश्रवणं प्रति दुरदृष्टविशेषस्य, तादृशश्रवणेतरश्रवणसामग्र्या वा, उत्पत्तिसम्बन्धेन कार्यसहवर्त्तितया तादृशेतरश्रवणस्यैव वा प्रतिबन्धकत्वात्। निदिध्यासनेन तत्त्वज्ञाने जनयितव्येऽननुगततत्तत्कालविशेषादेः सहकारित्वकल्पनामपेक्ष्यातिरिक्तजातित्रयस्य तत्त्वज्ञानप्रयोजक-श्रवणं प्रति अतिरिक्तैकप्रतिबध्यप्रतिबन्धकभावस्य च कल्पनाया एव युक्तत्वादिति भावः।

**एतेन सत्त्वशुद्धिद्वारेण आरादुपकारकं कर्म सन्निपत्योपकारकञ्च तत्त्वज्ञानमिति मन्तव्यम् । न तु तुल्यकक्षतया तत्समुच्चयः । नापि ज्ञानेन धर्मो जन्यते विहितत्वादिति धर्मस्यैव प्राधान्यम् । दृष्टद्वारेणैवोपपत्तौ अदृष्ट-कल्पनानवकाशात् । अन्यथा भेषजादिविधिष्वपि तथा कल्प्येत । उपपत्ति-विरुद्धश्च ज्ञानकर्मसमुच्चयः । काम्यनिषिद्धयोस्त्यागादेव समुच्चयानु-पपत्तेः । नापि असङ्कल्पितफलकाम्यकर्मसमुच्चयः चतुर्थाश्रमविधि-विरोधात् । यावन्नित्यनैमित्तिकसमुच्चयस्यापि तत एवानुपपत्तेः । यत्या-श्रमविहितकर्मणा ज्ञानस्य समुच्चय इत्यपि नास्ति । तदभावेऽपि गृहस्थस्य ज्ञाने सति मुक्तेः । यतः स्मरन्ति**

**"कर्मणैव हि संसिद्धिमास्थिता जनकादय" इति**

**"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।**
**श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥"**

**न च साध्यस्यावैचित्र्ये साधनवैचित्र्यमुपपद्यते । न च स्वर्गवदप-वर्गेऽपि प्रकारभेदः सम्भवति । तस्मात् तत्त्वज्ञानमेव निःश्रेयसहेतुः । कर्माणि तु अनुत्पन्नज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मनिवारणद्वारेण प्रायश्चित्तवदुपयुज्यन्ते । उत्पन्नज्ञानस्य तु अन्तरालब्धवृष्टेः कारीरीपरि-समाप्तिवत् प्रारब्धकर्मसमापनं लोकसंग्रहार्थमिति युक्तमुत्पश्यामः ।**

तत्त्वज्ञानकर्मणोः परस्परसहकारेण दण्डचक्रन्यायान् मोक्षहेतुत्वम् । अत एव तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।

"तत्प्राप्तिहेतुर्विज्ञानं कर्मचोक्तं महामते" इति विष्णुपुराणम् ।"

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥ इति हारितश्चेति

ये वदन्ति तन्मतं निराकरोति **एतेनेति** । तत्त्वज्ञानमात्रं मोक्षहेतुत्वेनोक्त-मित्यर्थः । **सत्त्वेति** । सत्त्वम् आत्मा । तस्य शुद्धिः तत्त्वज्ञानोत्पत्तिप्रतिबन्धको-ऽधर्मनाशः । तद्द्वारेण । **आरात्** परम्परया । **उपकारकं** मोक्षप्रयोजकं कर्मेत्यर्थः । **सन्निपत्य** कर्मापेक्षया सन्निधायकम् । कर्मानन्तरं ज्ञानोत्पत्तिरिति भावः । **नत्विति** । न तु नियमेनैककालवर्त्तितया तयोर्द्वयोर्मोक्षकारणत्वमित्यर्थः ।

ननु मिथ्यावासनानाशस्वरूपव्यापारजनकस्तत्त्वसाक्षात्कार इति पूर्वोक्तम-सङ्गतम् । तत्त्वज्ञानस्य मिथ्यावासनानाशव्यापारकत्वे मानाभावात् । न च व्यापारं विना चिरविनष्टस्य तत्त्वसाक्षात्कारस्य कथं कालान्तरभाविमोक्षजनकत्वमिति वाच्यम् । विहितकर्मणो धर्मद्वारेण फलजनकत्वनियमेऽदृष्टस्य द्वारत्वावश्यकतया द्वारान्तरकल्पने-

मानाभावात्। तच्चादृष्टं मुक्त्यैव फलेन नश्येदित्यन्तरातटस्थाशङ्कां निराकरोति **नापोति । विहितत्वादिति** । विहितत्वात् विहितकर्मणो धर्मद्वारैव फलजनकत्व-नियमादिति भावः। **धर्मस्यैवेति** । प्राधान्यं व्यापारत्वम्। **दृष्टद्वारेणैवेति** । मिथ्या-वासनारूपादृष्टभिन्नद्वारेणैवेत्यर्थः। **अदृष्टकल्पनेति** । लघोर्गुरोर्वा अदृष्टातिरिक्तस्य व्यापारत्वेनोपपत्तावदृष्टस्य व्यापारत्वं न कल्प्यत इति सकलप्रामाणिकसिद्धान्तात्। तदनादरेऽन्यथासिद्धिमात्रविलोपप्रसङ्गादिति भावः।

ननु प्रकृते दृष्टद्वारकत्वेन नोपपत्तिः, विहितकर्मणो धर्मद्वारैव फलजनकत्व-नियमादित्यत आह **अन्यथेति** । विहितकर्मणो धर्मद्वारैव फलजनकत्वनियम- इत्यर्थः। **तथा कल्प्येतेति** । अदृष्टद्वारा रोगनाशादिजनकताबोधकत्वं कल्प्यत इत्यर्थः। तथा च विहितत्वं भेषजपानादावेव अदृष्टद्वारा फलजनकत्वव्यभिचारीति भावः। इदमुप-लक्षणम्। मिथ्यावासनानाशस्य मुक्तिजनकत्वे श्रुतिरेव मानम्। 'तदेवास्य चिरं यावन्न विमोक्ष्ये। अथ सम्पत्स्ये कैवल्येने'ति श्रुतेः। अस्योत्पन्नतत्त्वज्ञानिनस्तावदेव चिरं तावदेव कैवल्ये विलम्बः यावन्न विमोक्ष्ये यावन्न मिथ्यावासनाभिर्मोक्ष्यते। अथानन्तरं सम्पद्यते कैवल्येनेति। तदर्थादकार्याविलम्बेन च कार्यविलम्बाभावात्।

एतेन वक्ष्यमाणरीत्या साक्षादेव तत्त्वज्ञानस्य मुक्तिजनकत्वसम्भवात् किं द्वारेण ? अस्तु वा द्वारापेक्षा, तथापि लघुतरं संस्कारमपहाय मिथ्यावासनानाशस्य कथं तत्त्वसाक्षात्कारव्यापारत्वमिति वाच्यम्। स्मृतिसंस्कारनाशयोर्विशिष्यैव हेतुहेतु-मद्भावात् निखिलमिथ्याधीजन्यसंस्कारं प्रति तत्त्वज्ञानस्यैव नाशकत्वात्। न चात्र मानाभावः। "भिद्यते हृदयग्रन्थि" रित्यादि वक्ष्यमाणश्रुतेरेव तत्र मानत्वात्। हृदय-ग्रन्थिः मिथ्यावासनावस्तुस्मृतिर्न संस्कारनाशिका विशेष्यप्रकारभेदेन अनन्तनाश्य-नाशकभावापत्तेः। कालरोगयोरपि नाशकत्वकल्पनापत्तेः। चरमस्मृतित्वेन नाशकत्वेऽपि चरमत्वस्य अतिरिक्तजातिविशेषस्य कल्पनापत्तेः। श्रुतेरनुरोधात् मिथ्यावासनानाशं प्रति तत्त्वज्ञानस्याप्यतिरिक्तकारणताकल्पनापत्तेश्च। किन्तु मिथ्यावासनादृष्टत्वेन(?) श्रुतिसिद्धतत्त्वसाक्षात्कार एव मिथ्यावासनानाशकतावच्छेदकतया अदृष्टनाशक-तावच्छेदकतया वा अवश्यक्लृप्तत्वेन जातिविशेषेण समानासमानविषयकनिखिल-समानाधिकरणसंस्कारनाशकनाश्यतावच्छेदकञ्च सामान्यतः संस्कारमेव। आत्मघटित-सामानाधिकरण्यं प्रतियोगित्वैकात्मवृत्तिसंस्कारत्वोभयघटितसामानाधिकरण्यं वा प्रत्यासत्तिः।

काशीमरणादेरपि वक्ष्यमाणयुक्त्या तत्त्वज्ञानद्वारैव मुक्तिजनकतया न तत्र मिथ्यावासनानुपपत्तिः। उद्बोधकविलम्बादेव स्मृतिविलम्बसम्भवेन तत्त्वज्ञानपूर्वं सर्वदा संस्कारसत्त्वेऽपि न क्षतिः। चरमदुःखनिष्ठवैजात्यमादाय च न विनिगमनाविरहः। तथा सति अदुःखचरमदुःखानां हिरण्यगर्भादितत्त्वज्ञानिनामपि विहितनिषिद्धाचरणेन

धर्माधर्मोत्पादापत्तेः। श्रवणमननमादाय च न विनिगमनाविरहः। तथा सति निदिध्यासनतो योगजधर्मानुत्पत्तिप्रसङ्गात्। मिथ्यावासनाया अदृष्टसामान्यं प्रत्येव हेतुत्वात् निदिध्यासनमादाय न च त्रिनिगमनाविरहः, योगिनामपि धर्माधर्मोत्पत्तिश्रवणात्।

नचैवं तत्त्वज्ञानजन्यसंस्कारस्य क्षणिकत्वापत्तिरिति वाच्यम्। तत्त्वज्ञानस्य संस्कारजनकत्वे मानाभावात्। प्रकाशकारलिखनमात्रस्यानादेयत्वात्। तस्य संस्कारजनकत्वेऽपि सहवर्त्तिनाशरूपनाशसामान्यकारणाभावादेव तस्य क्षणिकत्वकारणसम्भवाच्च इत्याचार्यनिगर्वः।

**केचित्तु** 'तदेवास्ये'ति श्रुतौ 'न विमोक्ष्ये' इत्यस्य पूर्वविद्यमानाधर्मराशिभिर्न विमोक्ष्यते इत्यर्थः। तथा च पापनाश एव तत्त्वज्ञानस्य व्यापारः। न चादृष्टस्य भागैकनाश्यतया तत्त्वसाक्षात्कारात् कथं पापनाशः ? अन्यथा "माभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति स्मृतिविरोधापत्तेः। अभुक्तमित्यस्य क्रियाविशेषणतया भोगानुपधायकत्वविशिष्टस्य, जन्यतासम्बन्धावच्छिन्नभोगाभावाश्रयस्य वा प्रतियोगि न कर्मेति तदर्थादिति वाच्यम्। अदृष्टं हि प्रारब्धमदृष्टं तदितरमदृष्टञ्च। प्रारब्धं शरीरारम्भकजातीयत्वम्। फलोपधायकतासम्बन्धेन भोगवत्त्वमिति यावत्। शरीरारम्भकजातीयादृष्टस्य भोगजनकत्वनियमात्। भोगः सुखदुःखसाक्षात्कारः। तत्र प्रारब्धादृष्टस्य भोगादेव नाशः। अतएव प्रारब्धकर्मणां भोगादेव क्षय इति प्रामाणिकाः।

नाश्यनाशकभावस्तु तत्तत्कर्मजन्यतावच्छेदकादृष्टनिष्ठवैजात्यभेदेन तज्जन्यतावच्छेदकसुखदुःखनिष्ठवैजात्यभेदेन च विभिन्नः। तथा हि तत्तत्सुखविशेषवद्धर्मविशेषत्वेन तत्तत्सुखविशेषत्वेन प्रतियोगित्व-धर्मविशेषनिष्ठफलोपधायकत्वोभयघटितसामानाधिकरण्यं प्रत्यासत्तिः। कर्मनाशापारगमनकीर्त्तनादिनाश्ये च तादृशधर्मे व्यभिचारवारणाय सुखविशेषवत्त्वं धर्मविशेषणम्। तच्च फलोपधायकतासम्बन्धेन सुखनिष्ठविशेषतत्तददृष्टविशेषजन्यतावच्छेदकजातिव्याप्यस्तददृष्टविशेषजन्यतत्तत्पुरुषीयचरमसुखमात्रवृत्तिजातिविशेषः। तेनैकस्माददृष्टाद् धारावाहिकशतवर्षाद्यवच्छिन्नसुखानुपपत्तिः। एवं तत्तद्दुःखविशेषवत्तत्तदधर्मविशेषत्वेन, तत्तद्दुःखविशेषत्वेन यत्र प्रतियोगितासम्बन्धेन तत्तद्दुःखविशेषवदधर्मनाशस्तत्र तत्तदधर्मविशेषनिष्ठफलोपधायकतासम्बन्धेन तत्तद्दुःखविशेष इति सामानाधिकरण्यं प्रत्यासत्तिः। प्रायश्चित्तादिनाश्यकीर्त्तनादिनाश्ये च तादृशाधर्मे व्यभिचारवारणाय दुःखविशेषवत्त्वमधर्मविशेषणम्। शेषं पूर्ववत्।

"माभुक्तं क्षीयते कर्मे" ति श्रुतावपि कर्मपदं प्रारब्धकर्मपरम्। अन्यथा कर्मत्वावच्छेदेन तादृशनाशप्रतियोगित्वाभावबोधने कर्मनाशापारगमनादिनाश्ये धर्मे प्रायश्चित्तादिनाश्येऽधर्मे च बाधापत्तेः।

न चैवंरूपेण भोगादृष्टयोर्नाश्यनाशकभावे (कल्पिते) स्वर्गरूपचरमफलनाश्याङ्गापूर्वस्यासङ्ग्रहः। तस्य स्वर्गाजनकतया फलोपधायकतासम्बन्धेन स्वर्गवत्त्वाभावा-

दिति वाच्यम् । स्वजन्यपरमापूर्वस्यैव अङ्गापूर्वनाशकतया स्वर्गस्य तदनाशकत्वात् । नाश्यनाशकभावस्तु अपूर्ववदपूर्वनाशत्वेन प्रतियोगित्वापूर्ववृत्तिफलोपधायकत्वोभय-घटितसमानाधिकरन्यं प्रत्यासत्तिः। अपूर्वत्वं धर्मत्वम् । अपूर्वजनकापूर्वे व्यभिचार-वारणाय अपूर्ववत्त्वमपूर्वविशेषणम् । तच्च फलोपधायकतासम्बन्धेन ।

न चैवम् अजनितप्रधानापूर्वाङ्गापूर्वाणां न सङ्ग्रह इति वाच्यम् । तस्य तत्त्व-ज्ञानादिनाश्यतया तदसङ्ग्रहेऽपि क्षतिविरहात् । अपूर्वजनकप्रारब्धेतरादृष्टानि च कियन्ति तत्त्वज्ञाननाश्यानि कियन्ति च कर्मनाशापारगमन-कीर्त्तन-प्रायश्चित्तादि नाश्यानि । तत्त्वज्ञानादृष्टयोर्नाश्यनाशकभावस्तु तत्त्वज्ञानवन्नाशत्वेन तत्त्वज्ञानत्वेन । प्रतियोगित्वैकात्मवृत्तित्वोभयघटितसामानाधिकरण्यञ्च प्रत्यासत्तिः । समवायविशेषणतो-भयघटितसामानाधिकरण्यस्य प्रत्यासत्तित्वे तत्त्वज्ञानद्वितीयक्षणोत्पन्नघटाद्यात्मसंयोग-नाशे घटादावपि वर्त्तमाने व्यभिचारापत्तेः । तत्त्वज्ञानत्वञ्च मिथ्यावासनादृष्टनाशकताव-च्छेदकतया सिद्धो योगजधर्म(जन्य)आत्मतत्त्वसाक्षात्कारनिष्ठो जातिविशेषः । भोगादिनाश्येऽदृष्टे व्यभिचारवारणाय तत्त्वज्ञानवत्त्वं नाशविशेषणम् । तच्च स्ववृत्ति-प्रतियोगिकत्व-कालिकविशेषणत्व-स्वसमानाधिकरणत्वलक्षणत्रितयसम्बन्धेन विवक्षि-तम् । स्वपूर्वं भोगादिना नष्टे स्वसमानाधिकरणादृष्टे व्यभिचारवारणाय स्ववृत्ति-प्रतियोगिकत्वप्रवेशः । स्ववृत्तित्वं कालिकविशेषणतासम्बन्धेन । स्वोपगमानन्तरं भोगादिना विनङ्क्ष्यति स्वसमानाधिकरणादृष्टे व्यभिचारवारणाय कालिकविशेषणत्व-प्रवेशः । स्वद्वितीयक्षणे भोगादिर्भिर्विनश्यति व्यधिकरणादृष्टे व्यभिचारवारणाय स्वसमानाधिकरणत्वप्रवेशः । स्वसमानाधिकरणत्वञ्च स्वसमवायिमात्रवृत्तिध्वंसीय-विशेषणताविशेषसम्बन्धेन वर्त्तमानत्वम् । एतादृशसम्बन्धेन तत्त्वज्ञानवत्त्वञ्च संस्कार-नाशस्यापीति न तत्र पृथङ्नाश्यनाशकभावः ।

न च तथापि तत्त्वज्ञानोत्पत्त्यनन्तरं विलम्ब्य भोगेन नाश्यमानेऽदृष्टे चरमदुःख-रूपफलनाश्ये योगजधर्मे च तत्त्वज्ञानोत्पत्तिद्वितीयतृतीयक्षणयोस्तादृशनाशापत्तिर्दुर्वा-रेति वाच्यम् । तत्त्वज्ञानवन्नाशो हि द्विविधः । भोगोपधायकप्रतियोगिकस्तदनुपधायक-प्रतियोगिकश्च । तत्र प्रथमस्य न तत्र तदानीमापत्तिः । उपधायकतासम्बन्धेन तत्कारणस्य भोगस्य तत्र विरहात् । नापि द्वितीयस्य तत्र तदानीमापत्तिः । भोगानुप-धायकप्रतियोगिकनाशं प्रति भोगोपधायकादृष्टस्य तादात्म्यसम्बन्धेन प्रतिबन्धकत्वात्, भोगोपधायकतासम्बन्धेन भोगवत्त्वात् । भोगवत्त्वञ्च प्रकृतप्रतिबध्यत्वप्रतिबन्धक-तावच्छेदकतया प्रसिद्धः सुखत्वदुःखत्वव्यापकसुखदुःखोभयसाधनजातिविशेषः ।

न च तावता तत्त्वज्ञानोत्तरं विलम्ब्य भोगेन नाश्यमानेऽदृष्टे आपत्तिवारणेऽपि तदुत्तरं चिरविलम्बभाविनाशके तत्समानकालीनात्मवृत्तिसंयोगादिके भोगानुपधायक-प्रतियोगिकतादृशनाशापत्तिर्दुर्वारा, तत्र यथोक्तप्रतिबन्धकविरहादिति वाच्यम् ।

भोगानुपधायकप्रतियोगिकस्तत्त्वज्ञानवन्नाशो हि द्विविधः। भावनादृष्टप्रतियोगिकः भावनादृष्टेतरगुणप्रतियोगिकः। भावनादृष्टप्रतियोगिके न तत्रापत्तिसम्भवः, अन्यत्र क्लृप्ततत्सामग्रीविरहात्। नापि द्वितीयस्य तत्रापत्तिसम्भवः। अदृष्टप्रतियोगिकनाशत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेनादृष्टत्वेनापि कारणत्वात्। अस्तु वा तत्त्वज्ञानवददृष्टनाशत्वं कार्यतावच्छेदकम्। स्ववृत्त्यदृष्टत्व-स्वाधिकरणात्मवृत्तित्वोभयञ्च एकत्र द्वयमिति न्यायेन नाशकतावच्छेदकसम्बन्धः। अदृष्टत्वस्य स्ववृत्तित्वं कालिकविशेषणतासम्बन्धेन। अदृष्टत्वञ्च भावनाख्यसंस्कारादृष्टसाधारणं प्रत्यक्षावृत्तिजातीतरात्मविशेषगुणवृत्तिजातिमत्त्वम्। संस्कारत्वजातेरभ्युपगमे तु प्रकृतनाशकतावच्छेदकतया मानससाक्षात्कारप्रतिबन्धकतावच्छेदकतया सिद्धो भावनादृष्टसाधारणजातिविशेष एवात्रादृष्टत्वम्। तत्त्वज्ञानोत्पत्तिसमकालं वा भावनादृष्टयोरुत्पत्तौ भानाभावेन तयोः क्षणिकत्वसम्भावना।

न च तथापि तत्त्वज्ञानस्यादृष्टनाशकत्वे मानाभाव इति वाच्यम्। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" इति श्रुतेरेव मानत्वात्। हृदयग्रन्थिर्मिथ्यावासना। अस्य योगिनः। कर्माणि अदृष्टानि। तस्मिन् आत्मनि। दृष्टे साक्षात्कृते। एतेन श्रवणादिमादाय विनिगमनाविरहः प्रत्युक्तः। तथा सति 'अव'धातोः स्वारसिकलक्षणापत्तेः।

न च साक्षात्कारसामान्यपरत्वेऽपि तस्य लक्षणा 'रसं पश्यति' 'गन्धं पश्यति' इत्याद्यप्रयोगात् चाक्षुष एव तस्य शक्तत्वादिति वाच्यम्। यत्र 'पश्य' आदेशस्तत्र साक्षात्कारत्वप्रकारेणापि बोधस्य ततोऽनुभवसिद्धतया साक्षात्कारत्वविशिष्टेऽपि तस्य शक्तत्वात्, निरूढलाक्षणिकत्वात्।

न च तथापि निदिध्यासनमादाय विनिगमनाविरहो दुर्वारः, तस्यापि साक्षात्काररूपत्वादिति वाच्यम्। श्रुतावात्मदर्शनपदेन तत्त्वज्ञानमेव बोध्यत इत्यनादिमीमांसादिसिद्धत्वात्।

न च तथाप्येतच्छ्रुत्या तत्त्वज्ञानोत्तरवर्त्तित्वमेवादृष्टनाशस्य बोध्यते। न तु तत्त्वज्ञानस्यादृष्टादिनाशे जनकत्वमिति वाच्यम्। 'सति' सप्तमीतो जनकताबोधस्यौत्सर्गिकत्वात्। अतएव यथा 'शीते पाथसि पीते तृषा शाम्यती'त्यत्र जलपानस्यापि तृषोपशमहेतुत्वं स्वरसतः प्रतीयते। 'भिद्यते हृदयग्रन्थि' रित्यत्रापि तत्त्वज्ञानस्यादृष्टादिनाशकत्वं प्रतीयत इति **बौद्धाधिकारदीधितौ भट्टाचार्याः।**

एवं "यथैषिकातृण....प्रोतं प्रदूयेतैवं चास्य सर्वे पाप्मानः प्रदूयन्त" इति श्रुतिरपि तत्त्वज्ञानस्य पापनाशकत्वे मानम्। ईषिका वीरणम्। प्रोतं दण्डम्। प्रदूयेत नश्यति। प्रतॄ उपताप इत्यनुशासनात्। अस्य आत्मविदः।

न चैतच्छ्रुत्या आत्मविदः पापनाशवत्ताबोधनेऽपि पापनाशजनकत्वमात्मतत्त्वज्ञाने न बोध्यत इति वाच्यम्। यथा शीतलतर सरोऽवगाहनवतो दुःखं व्यपैतीत्यत्र सरोऽवगाहनस्य दुःखव्यपगमहेतुत्वं प्रतीयते तथात्रापि जनकताप्रत्ययात्। एवं "ज्ञानग्निः सर्वकर्माणि भस्मसात् कुरुते तथे'ति भगवद्गीतापि तत्त्वज्ञानस्य कर्मनाशकत्वे मानम्। अत्र कर्मपदं तत्त्वज्ञानसमानकालीनप्रारब्धकर्मपरम्। तेन प्रायश्चित्तादिनाश्ये भोगनाश्ये वा कर्मणि न बाधः। भस्मसात् कुरुते नाशविशिष्टानि कुरुते।

न च कर्मपदं तत्त्वज्ञानोत्तरकृतविहितनिषिद्धक्रियापरम्। भस्मसात् कुरुते इत्यस्य तादृशजनकानि कुरुत इत्यर्थः। मिथ्यावासनारूपकारणोच्छित्तिद्वारा तत्त्वज्ञानस्यादृष्टानुपधानप्रयोजकत्वात्। तथाच श्रुतिः "यथा पुष्करपलाश आपो नाश्लिष्यन्ते एवं एवंविदि पापं कर्म न श्लिष्यत" इति। एवंविदि आत्मतत्त्वविदीति वाच्यम्। तथाच 'भस्मसात्' पदे स्वारसिकलक्षणापत्तेः।

न च 'भस्मसात्' पदस्य नाशविशिष्टपरत्वेऽपि लक्षणेति वाच्यम्। तत्र तस्य निरूढ़लाक्षणिकत्वात्।

अथास्तु तत्त्वज्ञानस्यादृष्टनाशकत्वम्। तथापि भोगद्वारैव तस्य तन्नाशकत्वं न तु साक्षात्। तस्य नाशकत्वे भोगानुपधायकप्रतियोगिनाशकत्वावच्छिन्नं प्रति भोगोपधायकादृष्टस्य तादात्म्यसम्बन्धेन प्रतिबन्धकत्वकल्पनापत्तेः, भोगद्वारकत्वे च तत्त्वज्ञानवददृष्टनाशकत्वेन तत्त्वज्ञानत्वेनैव नाश्यनाशकभावः। नाशकतावच्छेदक सम्बन्धश्चादृष्ट...जन्यभोगोपधायकत्वम्। चरमभोगस्य विशिष्यनाशकतया च तत्त्वज्ञानोत्तरमेकव्यक्तिभोगादेव न शतवर्षाद्यवच्छिन्नभोगजनकादृष्टनाशः। अदृष्टस्य तत्त्वज्ञानवत्त्वञ्च स्ववृत्तित्वस्वसमानाधिकरणत्वोभयसम्बन्धेन। अतो न प्रतिबध्यप्रतिबन्धकभावान्तरापेक्षा। अतएव तत्त्वज्ञानमपि अदृष्टनाशकं परन्तु भोगस्तद् व्यापार इति **मुक्तिवादे मणिकृतो महाशया** इति चेन्न। तत्त्वज्ञानस्य भोगाजनकतया भोगस्य तद्द्वारत्वासम्भवात्।

न च कायारण्यद्वारा तस्य भोगजनकत्वमिति वाच्यम्। तत्रापि तस्याहेतुत्वात्। विनैव तत्त्वज्ञानं तपश्चरणयोगादिवशादेव सौभरिप्रभृतीनां कायारण्यश्रुतेः। वस्तुतस्तु भोगो न तत्त्वज्ञानव्यापारः किन्तु सहकारी। भोगसहकारेणैव तत्त्वज्ञानस्यादृष्टनाशकत्वाभ्युपगमात्। अन्यथा तत्रापि तस्यास्वातन्त्र्येण अदृष्टनाशकत्वे यथोक्तरीत्यैव नाश्यनाशकभावेन कार्यतावच्छेदकधर्म-कारणतावच्छेदकसम्बन्धयोः शरीरगौरवापत्तेः। भोगानुपधायकप्रतियोगिनाशत्वावच्छिनं प्रति भोगोपधायकादृष्टस्य तादात्म्यसम्बन्धेन गुरुतरातिरिक्तप्रतिबन्धकत्वकल्पनापत्तेः। 'ज्ञानाग्निः सर्वकर्माणि' इत्यत्र सर्वकर्मपदेऽर्थसङ्कोचापत्तेः। भोगस्य सहकारित्वे च सामान्यतोऽद्रष्टनाशत्वा-

वच्छिन्नं प्रत्येव तत्त्वज्ञानत्वेन कारणता। यत्र प्रतियोगितासम्बन्धेनादृष्टनाशस्तत्र कालिकविशेषणतासम्बन्धेन विषयतासम्बन्धेन वा तत्त्वज्ञानमिति सामानाधिकरण्यं प्रत्यासत्तिः। भेदप्रतियोगितया अदृष्टस्यापि तत्त्वज्ञानविषयत्वात्। अदृष्टत्वञ्च प्रकृत-नाश्यतावच्छेदकतया मिथ्यावासनाजन्यतावच्छेदकतया च सिद्धो धर्माधर्मोभय-साधारणजातिविशेषः। तत्त्वज्ञानत्वञ्च प्रतियोगित्वैकात्मवृत्तित्वोभयघटितसामाना-धिकरण्यप्रत्यासत्त्या मिथ्यावासनानाशकतावच्छेदकतया संस्कारसामान्यनाशकता-वच्छेदकतया वा सिद्धो योगजधर्मजन्यात्मतत्त्वसाक्षात्कारनिष्ठो जातिविशेषः। संसार स्यानन्ततया सर्वदैवादृष्टनाशपूर्वं कस्यचित्पुरुषस्यान्ततो भगवत एव वा तत्त्वज्ञान-सत्त्वान्न व्यभिचारः।

न च तत्त्वज्ञानं मानसत्वव्याप्यजातिः कथं भगवत्साक्षात्कारनिष्ठेति वाच्यम्। भगवत्साक्षात्कारस्यैव मुक्तिजनकत्वान्न साक्षात्कारस्यापि चाक्षुषत्वादिषड्जात्यनाश्रय-तया तस्य मानसत्वविरुद्धत्वात्। अस्तु वा सामान्यत आत्मसाक्षात्कारत्वेनैव नाशकता।

न चैवंरूपेणादृष्टतत्त्वज्ञानयोर्नाश्यनाशकभावे अदृष्टमात्रस्य क्षणिकत्वापत्तिः, क्षणद्वयमात्रस्थायित्वापत्तिरिति वाच्यम्। भोगादिरूपविशेषसामग्रीविरहेणैव तद्वारण-सम्भवात्।

न चैवं तत्त्वज्ञानस्य सामान्यतो नाशकत्वाभ्युपगमो व्यर्थ इति वाच्यम्। श्रुति-स्मृतिसिद्धतया तदभ्युपगमात्। "एवञ्च तावदेवास्ये'ति श्रुतौ 'न विमोक्ष्ये' इत्यस्य पूर्वोपात्ताधर्मराशिभिर्भोगेन न विमोक्ष्यते इत्यर्थ इति तत्त्वम्।

कर्मनाशापारगमन-धर्मयोर्नाश्यनाशकभावस्तु कर्मनाशापारगमनत्वेन, कर्म-नाशापारगमनवन्नाशत्वेन। कर्मनाशापारगमनत्वञ्च अदृष्टनाशकतावच्छेदकतया सिद्धः कर्मनाशैकतीरविभागाधीनापरतीरसंयोगानुकूलक्रियामात्रवृत्तिगमनत्वव्याप्य-जातिविशेषः। नातो दुर्वारत्वम्। प्रतियोगित्व-दुःखाश्रयीभूतशरीरावच्छिन्नत्वोभय-घटितसामानाधिकरण्यं प्रत्यासत्तिः। कर्मनाशापारगमनं विनापि जायमाननाशके व्यभिचारवारणाय कर्मनाशापारगमनवत्त्वं नाशविशेषणम्। तच्च स्ववृत्तिप्रतियोगि-कत्व, कालिकविशेषणत्व, स्वाश्रयशरीरावच्छेद्यत्वलक्षणत्रितयसम्बन्धेन विवक्षितम्। प्रत्येकदलव्यावृत्तिस्तु पूर्ववत्।

न च तथापि कर्मनाशापारगमनकालीनाधर्मसंस्कारेष्वपि कर्मनाशापारगमनो-त्पत्तिलक्षणे तादृशनाशापत्तिर्दुर्वारेति वाच्यम्। कर्मनाशापारगमनवन्नाशो हि द्विविधः। धर्मेतरगुणप्रतियोगिकः, धर्मप्रतियोगिकश्च। तत्र प्रथमस्य न तदानीमापत्तिः क्लृप्तत-त्कारणान्तरविरहात्। नापि द्वितीयस्य तत्र तदानीमापत्तिः। धर्मप्रतियोगिकनाशं प्रति धर्मत्वेनापि कारणत्वात्। अस्तु वा कर्मनाशापारगमनवद्धर्मनाशत्वं कार्यतावच्छे-

दकम्। स्ववृत्तिधर्मत्व-स्वाश्रयशरीरावच्छेद्यत्वोभयमेकत्रद्वयमिति न्यायेन नाशकतावच्छेदकसम्बन्धः। पारगमनस्य विनश्यदवस्थतादशायां धर्मोत्पत्तौ मानाभावेन तत्रापत्तिस्तदवस्थेत्याहुः।

तदसत्। श्रुतिस्मृतिसिद्धतया तत्त्वज्ञानस्य मिथ्यावासनानाशकत्ववत् पापस्यापि स्वातन्त्र्येण भोगसहकारेण वा नाशकत्वेऽपि पापनाशस्य मुक्तिजनकत्वं न 'तावदेवास्य चिरम्' इति श्रुतिसिद्धम्। तस्य हि मुक्तिजनकत्वं पापप्रतियोगिकनाशत्वेन, पापत्वावच्छिन्नप्रतियोगिताकनाशत्वेन वा स्वाभिधानस्यासङ्गतत्वापत्तेः। न द्वितीयः पापत्वादेः सामान्यधर्मस्य ध्वंसप्रतियोगितावच्छेदकत्वकल्पने गौरवान्मानाभावाच्च। न 'तावदेवास्य चिरम्' इति श्रुतिरेव तत्र प्रमाणम्। मिथ्यावासनानाशविषयकत्वेनैवोपपत्त्या तच्छ्रुतेर्गौरवसम्पादकतद्विषयकत्व एव विवादात्। मिथ्यावासनानाशस्य च मानसाप्रतियोगिकनाशकत्वेनैव मुक्तिजनकत्वम्। अतो लाघवात् 'तदेवास्य चिरम्' इति तदर्थः।

नन्वेवं प्रथमं श्रुतिवाक्येभ्य आत्मविशेष्यकं शरीरादिरूपात्मेतरनिखिलपदार्थभिन्नत्वप्रकारकं श्रवणं, ततः शास्त्रबोधितसाधर्म्यैः सर्वेषामेवात्मतदितरपदार्थानां परस्परभिन्नतयानुमानं मननाख्यं, ततः शास्त्रादिबोधितासनप्राणायामादियोगविधिपूर्वकं शरीरादिरूपात्मेतरनिखिलपदार्थभिन्नत्वप्रकारकमात्ममानसप्रत्यक्षं निदिध्यासनाख्यमिति क्रमेण चिरकालं श्रद्धापूर्वकं क्रमिकं पुनस्तादृशं त्रयं त्रयं ज्ञानम्। ततश्चरमात् क्रमिकतादृशश्रवणमनननिदिध्यासनात् योगजधर्मजनकतावच्छेदकशब्दत्वानुमितित्वप्रत्यक्षत्वव्याप्यजातिविशेषाक्रान्ताद् योगजधर्मोत्पत्तिः। तस्मिन्नुत्पन्ने तज्जनकत्वात् श्रवणादित्रयात्, तदुत्तरोत्पन्नात् श्रवणादित्रयाद् वा योगजधर्मसहकारेण आत्मतत्त्वज्ञानं मिथ्यावासनानाशकतावच्छेदकप्रत्यक्षत्वव्याप्यजातिविशेषाकान्तं (तेनोत्पाद्यते) मिथ्यावासना नाशः। तेन मिथ्यावासनानाशेन चरमदुःखमुत्पाद्य मुक्तिर्जन्यत इति **मुक्त्युत्पत्तिप्रकारः**।

तथा च तत्त्वज्ञानिनां तत्त्वज्ञानोत्पत्तिचतुर्थक्षणे नियमतो मुक्तत्वापत्तिरपेक्षणीयान्तराभावात्। अथेष्टापत्तिः। तत्त्वज्ञानोत्पत्त्यनन्तरं कायव्यूहेन भोगे मानाभावात्। कायव्यूहेन भोगश्रवणस्य योगिपरत्वात्। तत्त्वज्ञानिनान्तु तत्त्वज्ञानपूर्वोत्पन्नभोगतत्त्वज्ञानाभ्यां तत्त्वज्ञानोत्पत्तिद्वितीयक्षण एव मिथ्यावासनानाशसमकालं तत्त्वज्ञानपूर्वोत्पन्नभोगव्यधिकरणतत्त्वज्ञानाभ्यां तत्त्वज्ञानोत्पत्तिसमकालं वा पूर्वावस्थितसकलादृष्टनाशात् तत्त्वज्ञानेनादृष्टे नाशयितव्ये भोगस्य व्यापारतायाः प्रागेव निराकरणादिति चेन्न। हिरण्यगर्भ-मनु-जनकप्रभृतीनां तत्त्वज्ञानोत्पत्त्यनन्तरमपि श्रुतिस्मृतीतिहासपुराणादितो कल्पमहाकल्पमन्वन्तरादिजीवित्व-भोक्तृत्वश्रवणात्। "यथा पुष्करपलाश आपो न श्लिष्यन्ते एवं एवंविदि पापं कर्म न श्लिष्यत" इति श्रुतित आत्मतत्त्वविदोऽपि देहादिसत्त्वावगमाच्च। एवंविदि आत्मतत्त्वविदि।

न च मुक्तस्यापि महाकल्पादिजीवित्व-सुखभोक्तृत्वे देहादिमत्वे च बाधकाभाव इति वाच्यम्। शरीरादिना घटितैकविंशतिप्रभेदभिन्नपारिभाषिकदुःखानामात्यन्तिक ध्वंसस्य मुक्तित्वे विवादेऽपि मुक्तेस्तत्समनियतत्वस्य सर्वसिद्धत्वादिति।

मैवम्। यागादिजन्यापूर्वेण स्वर्गादिजनन इव मिथ्यावासनानाशेऽपि मुक्तिजनने तत्प्रतियोगिचरमदुःखजनने वा कालविशेषस्य सहकारित्वात्।

**नव्यास्तु** तत्त्वज्ञानं मिथ्यावासनानाशकम्। "भिद्यते हृदयग्रंथि' रित्यादि श्रुतिसिद्धत्वात्। लाघवाच्च मिथ्यावासनानाशोऽपि मुक्तिजनकः "तावदेवे'ति श्रुतेः। किन्तु तत्त्वज्ञानस्य मुक्तिजनकत्वं न मिथ्यावासनानाशसम्बन्धेन। न वा मिथ्यावासनानाशेन जनने चरमदुःखजनने वा कालविशेषाणामननुगतानां सहकारिता, गौरवात्। लाघवात् समवायसम्बन्धेनैव तत्त्वज्ञानस्य मुक्तिजनकत्वात्।

न चैवं हिरण्यगर्भादीनामुत्पन्नतत्त्वज्ञानानां महाकल्पादिजीवनानन्तरं कथं मुक्तिः ज्ञानस्याशुविनाशितया उत्पन्नतत्त्वज्ञानस्य तदानीं विरहादिति वाच्यम्। मुक्तव्यवहितपूर्वं श्रवणमननिदिध्यासनतत्त्वज्ञानान्तराणामविरलक्रमेण पुनरुत्पत्त्या पूर्वोत्पन्नमिथ्यावासनानाशेन मुक्तिः। (ततो मिथ्यावासनानाशोत्पत्तितृतीयक्षणे न मुक्त्युत्पत्तिरिति। मिथ्यावासनानाशपूर्वोत्पन्नस्य, तत्समकालोत्पन्नस्य मिथ्यावासनानाशकतावच्छेदकवैजात्याक्रान्तत्वेऽपि ( मुक्तव्यवहितपूर्वं श्रवणादेः ) तद्व्यावृत्तत्वेऽपि तद्वैजात्येन मुक्तिजनकतया तस्य चरमदुःखाद्यजनकत्वात्।

वस्तुतस्तु तस्य सविकल्पकरूपतया न मुक्तिजनकत्वसम्भवः। "तमेव विदित्वा अतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय" इत्येवकारघटितश्रुत्या आत्ममात्रविषयकनिर्विकल्पकस्य मुक्तिजनकत्वबोधनेन तदेकवाक्यतया "आत्मावाऽरे" त्यादि श्रुतावपि साक्षात्कारपदस्यात्ममात्रविषयकनिर्विकल्पकपरतया तादृशनिर्विकल्पकमात्रवृत्तिवैजात्येनैव मुक्तिजनकत्वात्।

न च 'तद् विदित्वैवेति' व्युत्क्रमेण योजनायां मानाभावात्, 'नान्यः पन्था विद्यतेऽयनाये' ति भागस्य एवकारार्थानुवादकत्वप्रसङ्गाच्च। अयनो मोक्षः।

न च तस्य यथाश्रुतार्थे "मिथ्याज्ञानमुन्मूलयन् तत्त्वज्ञानमेव निःश्रेयसहेतुरि' त्याचार्योक्तनियमभङ्गः, निर्विकल्पकज्ञानस्य मिथ्याज्ञानाविरोधित्वादिति वाच्यम्। तन्नियमस्याप्रयोजकत्वात्।

न च तथापि तस्य यथाश्रुतार्थे तदानीं मानसत्वादिभानवारणाय आत्मविषयकप्रत्यक्षं प्रति तादृशनिर्विकल्पकस्यैव कार्यसहवर्त्तितया प्रतिबन्धकत्वस्यावश्याभ्युपेयत्वेन गौरवापत्तिरिति वाच्यम्। गौरवभीत्या श्रुतयंथाश्रुतार्थत्यागे बहुतरधर्मविलोपापत्तेः। तन्निर्विकल्पकस्य भगवत्साक्षात्कार इव मानसत्वाद्यनाश्रयतया मानससाक्षात्कारं प्रति

मानसेतरज्ञानसामग्र्याः प्रतिबन्धकत्वादेव तदानीं मानसत्वादिभानवारणसम्भवेनातिरिक्तप्रतिबन्धकत्वाकल्पनाच्च।

न च मानसेतरज्ञानसामग्रीत्वस्यानुगतस्यासम्भवात् तत्त्वज्ञानसाधारणकारणमेलकरूपसामग्र्या अपि पृथक् प्रतिबन्धकत्वकल्पने गौरवं दुर्वारमेवेति वाच्यम्। अव्यवहितपूर्ववर्त्तितासम्बन्धेन मानसेतरज्ञानविशिष्टत्वस्यैव मानसेतरसामग्रीत्वस्यानुगतस्य सम्भवात्।

न च तस्य निर्विकल्पकरूपत्वे श्रवणादीनां किंविधया तत्र कारणत्वमिति वाच्यम्। तत्र तत्कारणत्वस्य "आत्मा वा' इत्यादिश्रुतिसिद्धतया पृथगेव तस्य तत्र कारणत्वात्।

न च "तमेव" इत्यादिश्रुतिबलान्निर्विकल्पकज्ञानस्यैव मुक्तिजनकत्वाभ्युपगमे तत्त्वज्ञानादीश्वरात्मविषयकनिर्विकल्पकसाक्षात्कारस्यैव मुक्तिजनकत्वापत्तिः। "परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति"। 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्त्वाद्' इत्यव्यवहितपूर्वश्रुत्या भगवदात्मन एव प्रक्रान्ततया तच्छब्देन तत्र भगवदात्मन एव परामर्शात्। तदेकवाक्यतया च 'आत्मा वे' त्यादिश्रुतावप्यात्मपदस्य भगवदात्मपरत्वादिति वाच्यम्। इष्टत्वात्। 'विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति' इत्यादिबहुतरश्रुतावात्मसाक्षात्कारस्यैव मुक्तिहेतुत्वबोधनात्। केनापि चागमेन स्वात्मतत्त्वज्ञानस्य मोक्षहेतुत्वाबोधनात्।

न च श्रवणादीनामविशिष्टतया तादृशवैजात्याश्रयात्मनो भगवदात्मनो वा सविकल्पकरूपो निर्विकल्पकरूपो वा साक्षात्कार एव हिरण्यगर्भादीनां महाकल्पादिपूर्वं प्राथमिकतत्त्वज्ञानादुत्पन्न इति वाच्यम्। तादृशसाक्षात्कारं प्रति पूर्वनिदिध्यासनव्यावृत्तवैजात्येन निदिध्यासनस्य तादृशविजातीयनिदिध्यासनं प्रति पूर्वमननव्यावृत्तवैजात्येन मननस्य तादृशविजातीयमननं प्रति च पूर्वश्रवणव्यावृत्तवैजात्येन श्रवणस्य हेतुत्वात्। तादृशवैजात्याश्रयश्रवणं प्रति तादृशश्रवणेतरसामग्र्याः कार्यकालवृत्तितया तादृशश्रवणेतरश्रवणस्य वा प्रतिबन्धकतया च न पूर्वश्रवणोत्पत्तिसमये तादृशश्रवणोत्पत्तिः।

इत्थञ्च श्रवणमनननिदिध्यासनान्न साक्षात्कारनिष्ठं मुक्तिजनकतावच्छेदकमेकं जातिचतुष्टयम्, तच्च मिथ्यावासनानाशश्रवणमनननिदिध्यासनानुसाक्षात्कारव्यावृत्तम्। अन्यथा हिरण्यगर्भादीनां जीवद्दशायामेव प्राथमिकतत्त्वज्ञानान् मिथ्यावासनानाशोत्पत्तितृतीयक्षणे मुक्त्यापत्तेः।

अपरञ्च तन्निष्ठं मिथ्यावासनानाशकतावच्छेदकजातिचतुष्टयम्, तच्च मुक्तिजनकतावच्छेदकवैजात्यचतुष्टयं विरुद्धं व्यापकं वेत्यन्यदेतत्। अन्यथा मुक्तिजनकता-

वच्छेदकवैजात्यचतुष्टयस्यैव तन्नाशकतावच्छेदकत्वे हिरण्यगर्भादीनां महाकल्पादिपूर्व-श्रुतिस्मृत्यादिसिद्धमिथ्यावासनानाशानुपपत्तेः।

अपरञ्च जातित्रयं श्रवणमननिदिध्यासननिष्ठं योगजधर्मजनकतावच्छेदकम्, तच्च योगजधर्मजन्यमिथ्यावासनानाशकतत्त्वज्ञानजनकताच्छेदकश्रवणमननिदि-ध्यासननिष्ठं वैजात्यत्रयव्यापकम्। अन्यथा योगजधर्मजन्यमिथ्यावासनानाशकतत्त्व-ज्ञानजनकतावच्छेदकत्वे सौभरिप्रभृतीनां योगिनामपि योगजधर्मवत् तत्त्वज्ञानस्याप्यु-त्पादापत्तेः। तेषामतत्त्वज्ञता आगमसिद्धेत्येकदेशश्रवणादिषु वैजात्यानि तादृश-विजातीयश्रवणत्रयम्। प्रतिबध्यप्रतिबन्धकभावश्च त्रयः। कालविशेषाणामनुगताना-मनन्तानां कारणत्वकल्पनामपेक्ष्य लाघवादित्याहुः।

**स्वतन्त्रास्तु** मिथ्यावासनानाशकतावच्छेदकश्रवणमननिदिध्यासनात्मतत्त्व-साक्षात्कारनिष्ठवैजात्यचतुष्टयमेव मुक्तिजनकतावच्छेदकम्। आचार्यादि(?)सर्वतत्त्व-वैजात्यचतुष्टयान्तरकल्पने चरमविजातीयश्रवणं प्रत्यपि अतिरिक्तैकप्रतिबध्य-प्रतिबन्धकभावकल्पने च गौरवप्रसङ्गाच्च। हिरण्यगर्भादीनां मुक्त्यव्यवहितपूर्वं तादृश-श्रवणमननिदिध्यासनतत्त्वज्ञानान्तराणामविरलक्रमेण पुनरुत्पत्त्या च न व्यभिचारः।

न च मुक्तिजनकं स्वात्ममात्रविषयकं भगवदात्ममात्रविषयकं वा निर्विकल्पकमेव मिथ्यावासनानाशकञ्च शरीरादिभिन्नत्वप्रकारकम्; तत्कथमेकेन वैजात्येन निर्वाह इति वाच्यम्। मिथ्यावासनां प्रत्यपि स्वात्ममात्रविषयकस्य भगवदात्ममात्रविषयकस्य वा निर्विकल्पकसाक्षात्कारस्यैव नाशकत्वात्।

न चैवं हिरण्यगर्भमनुजनकप्रभृतीनां महाकल्पादिपूर्वमपि मिथ्यावासनानाशक-निर्विकल्पकं स्वात्मादिमात्रविषयकसाक्षात्कारसत्त्वात् तदानीमेव मुक्त्यापत्तिः। काल-विशेषाणां सहकारित्वाभ्युपगमे च महद्गौरवमिति वाच्यम्। मुक्तिं प्रति अदृष्टसामान्यस्य प्रतिबन्धकत्वाद् एकदेशवैजात्याभ्युपगमेऽपि चरमविजातीयश्रवणं प्रति अतिरिक्तैक-प्रतिबध्यप्रतिबन्धकभावकल्पनस्यावश्यकत्वाद् धर्मत्वेन चाधर्ममादाय विनिगमना-विरहः। कस्यचित् केवलधर्मभोगानन्तरं कस्यचिच्च केवलाधर्मभोगानन्तरं मुक्त्युत्पत्त्या प्रत्येकप्रतिबन्धकतया आपत्तिवारणासम्भवात्।

न चादृष्टस्य प्रतिबन्धकत्वे श्रवणादीनां सामान्यतो ज्ञानत्वेनैव मुक्तिजन-कतास्त्विति वाच्यम्। तथा सति श्रुतौ श्रवणत्वादिना विशिष्यनिर्देशस्यासङ्ग-तत्वापत्तेः।

न च तावता शाब्दत्वानुमितित्वप्रत्यक्षत्वैरेव जनकतास्त्विति वाच्यम्। मिथ्यावासनानाशकतावच्छेदकजातिमपेक्ष्य तेषां व्यापकधर्मत्वेनान्यथासिद्धत्वात्।

एवञ्च मिथ्यावासनानाशस्यापि मुक्तिजनकत्वे मानाभावः। न च "तावदेवास्य चिरं यावन्न विमोक्ष्य" इति श्रुतिरेव मानमिति वाच्यम्। तत्रापि "यावन्न विमोक्ष्य" इत्यस्य यावन्नादृष्टसामान्येन विमुच्यते, यावन्नादृष्टसामान्यनिवृत्तिरित्येवार्थात्, मिथ्यावासनानाशकत्वन्तु तत्त्वज्ञानस्यास्त्येव, "भिद्यते हृदयग्रन्थि" रिति श्रुतेः।

इत्थञ्च श्रवणादिषु सप्तैव वैजात्यानि, चत्वारि मिथ्यावासनानाशकतावच्छेदकानि, त्रीणि च योगजधर्मजनकतावच्छेदकानि।

न चादृष्टसामान्यस्य मुक्तिप्रतिबन्धकत्वे कार्यसामान्यं प्रति अदृष्टस्य कारणताया मुक्तावेव व्यभिचारः। इदानीन्तनमुक्तौ पुरुषान्तरीयादृष्टसत्त्वादेव व्यभिचारविरहेऽपि सर्वमुक्त्यन्तर्गतचरमपुरुषीयमुक्तौ व्यभिचारस्य दुर्वारत्वादिति वाच्यम्। भावकार्यसामान्यं प्रत्येवादृष्टस्य कारणत्वात्। अत एव भावकार्यमात्रस्यादृष्टजन्यत्वनियमादिति **बौद्धाधिकारदीधितौ मुक्तिवादे भट्टाचार्या** इति प्राहुः।

**तार्किकास्तु** मुक्तिं प्रति नादृष्टं प्रतिबन्धकम्, न वा मिथ्यावासनादिनाशो हेतुः। लाघवान् मिथ्यावासनानाशकतत्त्वज्ञानमेव समवायसम्बन्धेन साक्षाद्धेतुः। परन्तु भट्टमते मुक्त्यात्मकसुखाभिव्यक्तिवद् अस्माकं मिथ्यावासनानाशकतत्त्वज्ञानमपि जन्यमविनाशि। तेन हिरण्यगर्भादीनां मुक्त्यव्यवहितपूर्वं श्रवणाद्यनन्तरानभ्युपगमेऽपि न क्षतिः। तच्च तत्त्वज्ञानमात्मनि कालिकाव्याप्यवृत्तिः। यथा घटाद्यभावो नित्योऽपि घटाद्यपसारणदशायामेव भूतलादौ वर्त्तते न तु घटादिसत्त्वदशायां तथैवोत्पन्नमपि तत्त्वज्ञानमुत्पत्तिक्षणे मुक्त्युत्पत्तिक्षणे मुक्त्यव्यवहितपूर्वक्षणद्वये च आत्मनि वर्तते नान्यदा, फलबलेन तथा कल्पनात्। तथा च तत्त्वज्ञानस्य कार्यसहवर्तितया हेतुत्वादेव हिरण्यगर्भादीनां भोगपूर्वं न मुक्त्यापत्तिः।

न च तत्त्वज्ञानस्याविनाशित्वे "दग्धेन्धनानलवदुपशमो मोक्ष" इति सिद्धान्तव्याघात इति वाच्यम्। तस्य निर्युक्तिकत्वेन गौरवसम्पादकत्वेन चानुपादेयत्वादित्याहुः।

तदसत्। तथासति "तावदेवास्य चिरम्" इति श्रुतौ "यावन्न विमोक्ष्य" इत्यस्यासङ्गतत्वापत्तेरिति दिक्।

ननु भाष्यकारलिखनमात्रं कर्मणो न साक्षात् तत्त्वज्ञानसहकारित्वसाधकमित्यत आह **उपपत्तिविरुद्धश्चेति**। युक्तिविरुद्धश्चेत्यर्थः। (निष्कामकर्म) समुच्चयः स्यादित्यत आह **नापीति**। समुच्चयः तत्त्वज्ञानसहकारिता। **चतुर्थाश्रमेति**। तेन विधिना निखिलकाम्यकर्मत्यागिनोऽपि मोक्षबोधनादिति भावः। **तत एवेति**। चतुर्थाश्रमविधिविरोधादेवेत्यर्थः। तेन गृहस्थादिसाधारणनित्यनैमित्तिककर्मत्यागिनोऽपि मोक्षबोधनादिति भावः। **स्मरन्ति** मोक्षजनकताः स्मरन्ति, स्मृतिकर्तारो

वदन्ति, स्मृतयो बोधयन्ति वा। **संसिद्धिमास्थिता इति**। तत्त्वज्ञानं संप्राप्नुवन्ति इत्यर्थः। गृहस्थस्य तत्त्वज्ञाने प्रमाणमुक्त्वा तस्य मुक्तौ मानमाह **न्यायागतेति**।

न चैवं "मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः" इति श्रुतिविरोधः। तच्छ्रुत्या चतुर्थाश्रमस्यैव मोक्षाश्रमत्वबोधनादिति वाच्यम्। तस्य प्राशस्त्यपरत्वात्। गृहस्थस्य पुत्रदारादिसङ्गो दुर्वार इत्यसाधारण्येन तथा व्यपदेशाच्च। अन्यथा उक्तस्मृतिद्वयविरोधापत्तेः। आश्रमचतुष्टयमुपक्रम्य "स ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुतौ सङ्गे चोपपत्तेरिति भावः।

ननु सामान्यतो मुक्तित्वावच्छिन्नं प्रति तत्त्वज्ञानमेव हेतुः। तच्च तत्त्वज्ञानं कश्चिन्मोक्षं गृहस्थाश्रमविहितावश्यकनिखिलकर्मसहकारेण, कश्चिच्च यत्याद्याश्रमविहितावश्यकनिखिलकर्मसहकारेण जनयतीत्युपेयमतः सामान्यव्यभिचारो न दोषाय। तथा च स्वस्वाश्रमविहितनिखिलनित्यकर्मणां तत्त्वज्ञानसहकारितेत्यत आह **न चेति**। **साध्यस्यावैचित्र्य** इति। कार्यतावच्छेदकभेदाभाव इत्यर्थः। **साधनवैचित्र्यमिति**। परस्परव्यभिचारितावच्छेदकधर्मावच्छिन्नसहकारेण सामान्यकारणस्य कार्यजनकत्वमुपपद्यत इत्यर्थः।

नन्वपवर्गनिष्ठविभिन्नधर्माविव कार्यतावच्छेदकावुपेयावित्यत आह—**न चेति**। प्रकारभेदः धर्मभेदः। कार्यतावच्छेदक इति शेषः। अपवर्गस्याभावरूपतया परस्परव्यावृत्तवैजात्यस्य कार्यतावच्छेदकत्वेन वक्तुमशक्यत्वात्। न च तत्तद्व्यक्तिरेव कार्यतावच्छेदकमस्त्विति वाच्यम्। अनन्तकार्यकारणभावप्रसङ्गाद्। मानाभावाच्च। नहि कर्मणामपि मोक्षकारणत्वं श्रुतिबोधितं येन तदनुरोधाद् गौरवमपि स्वीक्रियेत।

एतेन चरमदुःखनिष्ठपरस्परवैजात्यावच्छिन्नध्वंसत्वमेव कार्यतावच्छेदकमुपेयमित्यपि परास्तम्, कर्मणां मोक्षकारणत्वे मानाभावात्। न च पूर्वलिखितविष्णुपुराणहारीतवाक्यमेव प्रमाणमिति वाच्यम्। तस्य तत्त्वज्ञानप्रतिबन्धकाधर्मनाशत्वप्रयोजकतापरत्वेनाप्युपपत्तेः।

न च कर्मणां दुरितध्वंसजनकताकल्पनामपेक्ष्यापूर्वद्वारा तत्त्वज्ञानसहकारिताकल्पनमेव लघीय इति वाच्यम्। कर्मणां प्रतिबन्धकाधर्मध्वंसद्वारा तत्त्वज्ञानजनकत्वस्यागमसिद्धत्वात्। तदुक्तम्—

विद्या चैव तपश्चैव निःश्रेयसकरावुभौ।<br>
तपसा किल्बिषं हन्ति विद्ययामृतमश्नुते॥<br>
कषाय(स्य) पक्तिः कर्माणि ज्ञानन्तु परमा गतिः।<br>
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते॥ इति।

कषायस्य दुरितस्य। पक्तिः पाकः। हेतवो नाशहेतव इति यावत्। पक्वे नाशिते। तथा च भगवद्गीता "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः"। संसिद्धिं तत्त्वज्ञानम्।

एतेन तत्त्वज्ञानप्रतिबन्धकाधर्मनाशं प्रत्येवानुगतानां कर्मणां कथं कारणता, अपवर्गवत् तत्रापि परस्परव्यावृत्तानुगतकार्यतावच्छेदकस्य वक्तुमशक्यत्वात्। यदि च तत्तद्व्यक्तित्वमेव तत्र कार्यतावच्छेकं तदा मुक्तावपि तुल्यमित्यपि निरस्तम्। कर्मणां प्रतिबन्धकाधर्मनाशजनकत्वस्यागमसिद्धतया गौरवस्याकिञ्चित्करत्वादिति भावः। **तत्त्वज्ञानमेवेति**। विरोधिनां नाशे।

ननु काशीमरणमहादानतत्तत्तीर्थस्नानादीनां कर्मणामपि मोक्षहेतुत्वश्रवणादवधारणोऽयमसङ्गतः। न च तत्त्वज्ञानद्वारा मोक्षप्रयोजकत्वमेव तेषाम्, न तु मोक्षजनकत्वमिति वाच्यम्। तेषामनुपदमेव तत्त्वज्ञानानुत्पादाददृष्टद्वारैव तदुत्पादकत्वं वाच्यम्। तथा च अदृष्टद्वारैव मुक्तिं प्रत्यपि हेतुत्वसम्भवेन प्रयोजकताकल्पने मानाभावात्। तत्तत्कर्मणामननुगततया केवलतत्त्वज्ञानजन्यमुक्तौ व्यभिचारितया च न मुक्तिजनकत्वसम्भवः। मुक्तेरभावरूपतया परस्परव्यावृत्तवैजात्यस्य कार्यतावच्छेदकत्वेन वक्तुमशक्यत्वात्। तत्त्वज्ञाने तु परस्परव्यावृत्तावान्तरपरस्परवैजात्यावच्छेदेनैव तेषां जनकत्वमिति वाच्यम्। चरमदुःखनिष्ठपरस्परव्यावृत्तवैजात्यप्रतियोगिकध्वंसत्वमपेक्ष्य तत्त्वज्ञाननिष्ठपरस्परव्यावृत्तवैजात्यानां लघुतया तेषामेव कर्मजन्यतावच्छेदकत्वाद् अनायत्या श्रुतेः प्रयोजकतापरत्वकल्पनात्। तत्त्वज्ञानं प्रति वाराणसीमृत्योः कारणत्वस्यागमसिद्धत्वेनावश्यकतया मुक्तिं प्रत्यपि तस्य कारणत्वकल्पने गौरवाच्च।

एतेन मुक्तिसामान्यं प्रत्येव काशीमरणं हेतुस्तत्त्वज्ञानादिकञ्च काशीमरणसम्पादकतया प्रयोजकमित्येव किं न स्याद्, विनिगमकाभावात्। यत्र श्रवणादिक्रमेण मुक्तिस्तत्रापि येन केनापि शरीरेण काशीमरणादित्यपि निरस्तम्। तत्त्वज्ञानजनकत्वस्यागमसिद्धत्वाच्छ्रुतिसिद्धतया लघुतया च तत्त्वज्ञानस्यैव मिथ्यावासनानाशकतया मिथ्यावासनानाशानुरोधेनैव काशीमरणाद्युत्तरमपि तत्त्वज्ञानस्यावश्यकत्वाच्च।

न च ततश्चैव तेषां मिथ्यावासनानाशकत्वमिति वाच्यम्। मिथ्यावासनानाशस्य मुक्तिजनकतायां विवादेऽपि तदुच्छेदं विना न मोक्ष इति सकलाध्यात्मशास्त्रसिद्धत्वात्। काशीमरणादेस्तत्त्वज्ञाननैरपेक्ष्येण मुक्तिजनकत्वे "तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाये"ति श्रुतिविरोधापत्तेश्च। तत्र नान्यः पन्था विद्यतेऽयनायेति भागस्य तत्त्वज्ञानसमवहितान्यो न मोक्षोपधायको भवतीत्यर्थादिति भावः।

ननु यदि तत्तत्कर्मणां तत्त्वज्ञानप्रतिबन्धकाधर्मनाशकत्वमेव न तु मोक्षजनकत्वं तदा उत्पन्नतत्त्वज्ञानस्य कर्मणोऽनाचरणप्रसङ्गः। न च नित्यकर्माकरणे प्रत्यवायापत्तिवारणाय तस्य कर्माचरणमिति वाच्यम्। तेषामकरणेऽपि प्रत्यवायासम्भवादित्यत आह **उत्पन्नेति**। **प्रारब्धकर्मसमापनमिति**। कर्मणः प्रारम्भणं तत्समापनञ्चेत्यर्थः। **लोकसङ्ग्रहार्थमिति**। लोकशिक्षार्थमित्यर्थः। तथा चास्मत्कर्म दृष्ट्वा लोकः कर्म संगृह्णात्विति करणतया(?)तत्र तस्य प्रवृत्तेरिति भावः।

**केचित्तु** लोकसङ्ग्रहार्थमिति विहितकर्मणोऽकरणे आरब्धतदसमापने च लोकानां यद् अधार्मिकत्वेन ज्ञानं तदभावार्थमित्याहुः। तदसत्। "जानन्नेव मितो योगी योगसिद्धिञ्च विन्दतोति पुराणाज्जनावमाननस्य योगिनामिष्टत्वादिति ध्येयम्।

**एतेन "अथातो धर्मं व्याख्यास्यामः" "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" "तद्वचनादाम्नायसिद्धेः प्रामाण्यम्" इति त्रिसूत्री व्याख्याता। अन्यथाव्याख्याने हि 'यतोऽभ्युदये'ति प्रत्येकसमुदायाभ्यामुभयत्राप्यव्यापकं स्यात्। यतोऽभ्युदयसिद्धिः स धर्म इत्येतावतैव लक्षणसिद्धे पारम्पर्येण निःश्रेयसेऽप्यस्य हेतुत्वं प्रतिपादयितुं निःश्रेयसग्रहणमिति।**

ननु कर्मणो मोक्षजनकत्वे "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म" इति पारिभाषिकधर्मलक्षणसूत्रविरोधः। यस्मात् कर्मणोऽभ्युदयस्य तत्त्वज्ञानस्य निःश्रेयसस्य च सिद्धिः स धर्म इति तदर्थादित्यत आह **एतेनेति**। कर्मणस्तत्त्वज्ञानप्रतिबन्धकाधर्मध्वंसद्वारा मुक्त्युपयोगित्वेनेत्यर्थः। तत्रापि कारणाकारणादिसाधारणप्रयोजकत्वस्यैव पञ्चम्यर्थतया यस्य कर्मणोऽभ्युदयप्रयोजकत्वे सति निःश्रेयसप्रयोजकत्वं तद्धर्म इत्यर्थादिति भावः। **तद्वचनादिति**। तेनेश्वरेण वचनात् प्रणयनात्, आम्नायस्य वेदस्य प्रामाण्यमित्यर्थः। **त्रिसूत्री**। वैशेषिकाणां सूत्रत्रयम्। **अन्यथाव्याख्याने हीति**। जनकत्वस्य पञ्चम्यर्थतया व्याख्याने हीत्यर्थः। **यतोऽभ्युदयेतीति**। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति सूत्रमित्यर्थः। **प्रत्येकसमुदायाभ्यामुभयत्रेति**। अभ्युदयजनकं निःश्रेयसजनकं वा यत् तद्धर्म इति प्रत्येकजनकत्वं वार्थः। अभ्युदयजनकत्वे सति निःश्रेयसजनकं यत् तद्धर्म इति, समुदायजनकत्वं वा उभयस्मिन्नेवार्थे सतीत्यर्थः। **अव्यापकं स्यादिति**। निखिललक्ष्याविषयकं स्यादित्यर्थः। कर्मादिलक्षणधर्मविषयकत्वेऽपि तत्त्वज्ञानप्रतिबन्धकाधर्मनाशककर्मणोऽपि धर्मतया तद्विषयत्वात् प्रतिबन्धकाधर्मनाशेनान्यथासिद्धतया तस्याभ्युदयनिःश्रेयसौ प्रत्येव जनकत्वे मानाभावादिति भावः।

ननु भवन्मतेऽपि अभ्युदयप्रयोजकं यत् तद्धर्म इत्येव सम्यक्, किं निःश्रेयसप्रयोजकत्वदलेन? तत्त्वज्ञाने चरमदुःखेऽतिव्याप्तिवारणायाभ्युदयप्रयोजकत्वदलस्यावश्यकत्वादाह **यत इति**। सिद्धे निर्दोषे। अस्य कर्मणः। हेतुत्वं प्रयोजकत्वम्।

इति द्रव्यरहस्ये मुक्तिवादरहस्यम्।

**एवं प्रतिपन्नप्रयोजनाभिधेयसम्बन्धो जिज्ञासुः पृच्छति अथेति। अथ कानि द्रव्याणि, कियन्ति च; के गुणाः कियन्तश्च; कानि कर्माणि कियन्ति च; किं सामान्यं कतिविधञ्च; के विशेषाः; कः समवाय इत्यर्थः।**

**एवमिति**। प्रयोजनं निःश्रेयसम्। अभिधेयं द्रव्यादि। सम्बन्धः तत्त्वज्ञाननिःश्रेयसयोर्हेतुहेतुमद्भावलक्षणो द्रव्यादिपदार्थग्रन्थयोर्ज्ञाप्यज्ञापकभावलक्षणो वा।

जिज्ञासुः द्रव्यादिकं विशिष्य जिज्ञासुः। अग्रे विभागस्यापि करणात् तद्विषयकप्रश्नं पूरयति **कियन्ति चेति**। एवमग्रेऽपि।

**किञ्च तेषामिति। सामान्यतो विशेषतश्च पदार्थानां द्रव्याणां गुणानां कर्मणामिति नेयम्। चकारौ तु मिथः समुच्चये। साधर्म्यवैधर्म्य-योरेष्वेवान्तर्भूतत्वात्। पृथक् लक्षणार्थमपि न प्रश्नः।**

किञ्च तेषामिति भाष्यधारणम्। अग्रे सामान्यतो विशेषतश्च साधर्म्ययोर्वक्तव्य-त्वात् पूरयति **सामान्यतो विशेषतश्चेति**। तेषामित्यस्य व्याख्या पदार्थानामिति। **चकारौ त्विति**। किञ्चेति चकाराद् द्रव्यादिप्रश्नसमुच्चयः। वैधर्म्यञ्चेति चकारः साधर्म्यसमुच्चायक इत्यर्थः।

ननु द्रव्यादिलक्षणस्य साधर्म्यादिर्लक्षणं किं न पृष्टमित्यत आह **साधर्म्येति**। **एष्वेव** द्रव्यादिष्वेव। तथा च द्रव्यादेर्लक्षणमेव साधर्म्यादिर्लक्षणमिति न पृथक् प्रश्न इति भावः।

**केचित्तु** ननु द्रव्यादेर्लक्षणप्रश्नः कुतो न कृत इत्यत आह **साधर्म्येति**। **एष्वेव**। तथा च साधर्म्यादिः प्रश्न एव द्रव्यादीनां लक्षणप्रश्न इति भाव इत्याहुः।

**तत्रेति। तत्र तेषु द्रव्यादिषु वक्तव्येषु द्रव्याणि पृथिव्यादीनि। यद्यपि विभागस्य न्यूनाधिकसंख्याव्यवच्छेदपरत्वादेव नवत्वं लब्धं तथापि स्पष्टार्थं नवग्रहणम्। एवकारश्च विप्रतिपत्तिनिराकरणार्थः।**

तत्रेति भाष्यग्रन्थस्तस्य व्याख्यानं **तेष्वित्यादि**। निर्धारणे सप्तमी। ननु यथा उपस्थितेषु पुरुषेषु 'अस्मै देय' मिति विशेषविधानेऽन्यस्यैव दाननिषेधज्ञानम्, यथा वा तेषामेव मध्ये 'अस्मै न देय' मिति विशिष्य निषेधे तदितरेभ्यो दानज्ञानम्, तच्च लक्षणादिना शाब्दरूपमनुमितिरूपं वेत्यन्यदेतत्, तथा विभागस्यापि न्यूनाधिकसंख्या-व्यवच्छेदबोधकत्वमनुभवसिद्धम्। तथा च पृथिव्यप्तेजोवाय्वित्यादिविभागादेव न्यूनसंख्या-व्यवच्छेदलाभात् किं तल्लाभार्थं नवग्रहणेनेत्यत आह **यद्यपीति**। **विभागस्य** सामान्य-तोऽवगतानां विशेषरूपेणाभिधानं विभागस्तस्य। **न्यूनाधिकेति**। **परत्वात्** बोधकत्वात्। **नवत्वं लब्धम्**। नवपदलभ्यं न्यूनसंख्याव्यवच्छेदवत्त्वम्। विभाजकोपाधीनां परस्परसा-मानाधिकरण्यव्यवच्छेदोऽधिकसंख्याव्यवच्छेदः। तच्च संसर्गमर्यादया विभागजन्यबोधे भासते। पृथिव्यादीनां जलत्वाद्यसामानाधिकरण्यविशिष्टतादात्म्यसम्बन्धेन द्रव्यत्वा-वच्छिन्नेऽन्वयात्।

वस्तुतस्तु विभाज्यतावच्छेदकसामान्यविभाजकोपाधिमन्निष्ठान्योन्याभावप्रतियो-गितावच्छेदकव्यवच्छेदोऽधिकसंख्याव्यवच्छेदः। अन्यथा सव्यभिचारविरुद्धत्वेत्यादिदुष्ट-हेतुविभागादधिकसंख्याव्यवच्छेदालाभापत्तेर्विभाजकतावच्छेदकानां दोषाणां परस्पर-

सामानाधिकरण्यव्यवच्छेदविरहात्। एतदपि संसर्गमर्यादया भासते। पृथिव्यादीनां पृथिवीनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकद्रव्यत्वविशिष्टाभेदसम्बन्धेन द्रव्यत्वावच्छिन्नेऽन्वयात् न्यूनसंख्याव्यवच्छेदः। तत्तद्विभाजकोपाध्यवच्छिन्नातिरिक्ते विभाज्यतावच्छेदकसामान्यधर्मव्यवच्छेद्ये विभाज्यतावच्छेदकसामान्यधर्मस्य विभाजकतावच्छेदकं यत् तद्धर्मावच्छिन्नभेदसमुदायवद्वृत्तित्वाभाव इति यावत्। संसर्गमर्यादया विभागजन्यशाब्दबोधे भासते। पृथिवीत्वाद्यवच्छिन्नप्रतियोगिताकभेदसमुदायाधिकरणवद्वृत्तित्वाभाववत् द्रव्यत्वविशिष्टाभेदसम्बन्धेन पृथिव्यादीनां द्रव्यत्वावच्छिन्नेऽन्वयात्। नामार्थयोरभेदातिरिक्तसम्बन्धमात्रेणान्वयबोधस्यैव निराकाङ्क्षतया व्यापकत्वस्य संसर्गमध्ये प्रवेशेऽप्यव्युत्पत्तिविरहात्।

न चैवं यत्र विभाजकतावच्छेदकतत्तद्धर्मावच्छिन्नभेदसमुदायवदप्रसिद्धं तत्र कथं न्यूनसंख्याव्यवच्छेदलाभः, यथा पदार्थोऽभावश्चेत्यादाविति वाच्यम्। तत्र सामान्यधर्मनिष्ठस्य स्वावच्छिन्ननिष्ठाधिकरणतानिरूपकतानवच्छेदकतादृशभेदसमुदायत्वकत्वस्य न्यूनसंख्याव्यवच्छेदशब्दार्थत्वात्। स्वपदं विभाज्यतावच्छेदकसामान्यधर्मपरम्। एतदपि संसर्गमर्यादया शाब्दबोधे भासते। भावादीनां स्वावच्छिन्ननिष्ठाधिकरणतानिरूपकतानवच्छेदकतावद् वा भावत्वावच्छिन्नप्रतियोगिताकभेदान्वयवत्त्वात् पदार्थत्वविशिष्टाभेदसम्बन्धेन पदार्थत्वावच्छिन्नेऽन्वयात्। स्वपदं पदार्थत्वपरम्। अनवच्छेदकान्तं द्रव्यत्व (?) विशेषणमिति भावः।

केचित्तु उद्देश्यविधेयभावस्थले विधेयतानिरूपकसम्बन्धेन विधेयस्योद्देश्यव्यापकत्वं संसर्गमर्यादया लाभाद् व्यापकत्वविशिष्टभेदादेः संसर्गत्वादुद्देश्यस्य च व्याप्यत्वं तादात्म्यसम्बन्धेनेति सर्वसिद्धा व्युत्पत्तिः। तथा च प्रकृतेऽपि द्रव्यस्योद्देश्यत्वात् पृथिव्यादेश्च तादात्म्यसम्बन्धेन विधेयत्वाद् द्रव्यव्यापकत्वं तादात्म्यसम्बन्धेन पृथिव्यादीनां लभ्यते। व्यापकत्वविशिष्टभेदसम्बन्धेन द्रव्यत्वावच्छिन्ने पृथिव्यादीनामन्वयात्। अतो न्यूनसंख्याव्यवच्छेदलाभः। न तु विभागजन्यशाब्दबोधे निरुक्तन्यूनसंख्याव्यवच्छेदादपि संसर्गः, येन पदार्थोऽभावश्च इत्यादावप्रसिद्धिः स्यात्। न चोद्देश्यविधेयभावस्थले विधेयतावच्छेदकरूपेणैव व्यापकत्वं संसर्गमर्यादया प्रतीयते। प्रकृते तु पृथिवीत्वजलत्वादेर्विधेयतावच्छेदकस्य नानात्वात् परस्परव्यभिचारेण तेन रूपेण व्यापकत्वप्रत्ययसम्भव इति वाच्यम्। पृथिव्याद्यन्यतमत्वेन व्यापकत्वप्रतीतेरसम्भवात्। व्यापकत्वस्य संसर्गमर्यादयैव भानाभ्युपगमेनान्यतमत्वोपस्थापकपदविरहे क्षतिविरहात्।

न च विधेयतावच्छेदकरूपेणापि व्यापकत्वभाने वह्निमान् धूमादित्यादावन्यतरत्वद्रव्यत्वादिनापि व्यापकत्वलाभप्रसङ्ग इति वाच्यम्। विधेयतावच्छेदकनानात्व-

स्थले यत्र विधेयतावच्छेदकरूपेण व्यापकत्वं बाधितं तत्र शब्दोपात्ततत्तद्विधेयतावच्छेदकावच्छिन्नान्यतमत्वादिना व्यापकत्वं प्रतीयत इति व्युत्पत्तेरित्याहुः ।

तदसत् । व्यापकत्वप्रतीतावपि साक्षाच्छब्दतो यथोक्ताधिकसंख्याव्यवच्छेदाप्रतीतेरिति ध्येयम् ।

**स्पष्टार्थमिति** । विभागस्य न्यूनसंख्याव्यवच्छेदे तात्पर्यग्रहार्थमित्यर्थः । ननु तथाप्येवकारो व्यर्थः । तदर्थस्याधिकसंख्याव्यवच्छेदस्य विभागादेव लाभादित्यत आह **एवकारश्चेति** । **विप्रतिपत्तिः** । द्रव्यं पृथिव्यादिनवातिरिक्तं न वा, पृथिव्यादिनवातिरिक्तं द्रव्यं न वेति सन्देहः । **तन्निराकरणायेत्यर्थः** ।

न च विभागजन्याधिकसंख्याव्यवच्छेदप्रत्ययादेव तन्निवृत्तिर्भविष्यतीति वाच्यम् । तत्र संसर्गमर्यादयैवाधिकसंख्याव्यवच्छेदलाभात् । प्रकारविधेयाज्ञानेऽपि भिन्नप्रकारतया तस्य यथोक्तसंशयनिवर्तकत्वासम्भवादिति भावः ।

**केचित्तु** एवकारश्चेति एवकारोऽपीत्यर्थः । **विप्रतिपत्तिनिराकरणार्थः** । विप्रतिपत्तिः न्यूनसंख्याव्यवच्छेदे तात्पर्यसन्देहः । तन्निराकरणार्थः । तथा च एवकारोऽपि तात्पर्यग्राहक इति भाव इति व्याचक्रुः ।

तदसत् । एवकारस्य तात्पर्यमात्रग्राहकत्वेऽपि "किं पुनरि'त्यग्रिमशङ्कानुत्थितेः ।

**सामान्यसंज्ञा द्रव्यमिति । विशेषसंज्ञा पृथिवीत्यादिका । तयोक्तानि सूत्रकृतेति शेषः । अवगताप्तभावस्य तस्योक्तेरागमत्वात् । अनवगताप्तभावस्यापि लोकप्रसिद्धार्थानुवादकत्वात् । लोके च तावतामेव सामान्यतो विशेषतश्च व्यवहारात् ।**

"सामान्यविशेषसंज्ञयोक्तानी" ति भाष्यमधृत्वैवोक्तानीत्यस्य कर्तृपदं पूरयित्वा व्याचष्टे **सामान्येति** । **उक्तानीति** । पृथिवी द्रव्यम्, जलं द्रव्यम्, तेजो द्रव्यमित्यादिक्रमेणोक्तानीत्यर्थः । ननु तदुक्तिमात्रान्न वस्तुसिद्धिराप्तवाक्यस्यैव प्रमाणत्वादित्यत आह **अवगतेति** । प्रमाणसिद्धाप्तताकस्येत्यर्थः । आप्तत्वं भ्रमाद्यभाववत्त्वम् । **आगमत्वात्** प्रमाणत्वात् । **अनवगतेति** । प्रमाणसिद्धाप्तताकत्वाभावेऽपीत्यर्थः । **लोकेति** । तस्योक्तेरागमत्वादित्यनुषज्यते ।

**किं पुनरत्र प्रतिषिध्यते नवैवेति । न ह्यनवगतस्य प्रतिषेधः सम्भवति । उच्यते । द्रव्यस्य सतो नवानात्मत्वम्, नवबाह्यस्य सतो द्रव्यत्वं वा । तथा च प्रतिपन्नस्य प्रतिपन्ने प्रतिषेध इति न किञ्चिद् दुष्यति । अतः परं न शङ्का न चोत्तरम् । तथा हि इदं द्रव्यमेभ्योऽधिकं स्यादिति वा, इदमेभ्योऽधिकं द्रव्यं स्यादिति वा शङ्क्येत । प्रथमे आधिक्यं**

**निराकरिष्यामो यथा सुवर्णस्य । द्वितीये द्रव्यत्वं निराकरिष्यामो यथा तमसः । अतः परं न शङ्का न चोत्तरम् । धर्मिण एव बुद्ध्यनारोहात् । यदि कथञ्चिद् बुद्धिमारोक्ष्यते तदास्माभिरुक्तेष्वेवान्तर्भावयिष्यते । अनन्तर्भावे वा द्रव्यत्वं तस्य निराकरिष्यते इत्यभिप्रायवानाहतद्व्यतिरेकेण संज्ञान्तरानभिधानादिति । सूत्रकृतेति शेषः । लोकेनेति वा ।**

**शङ्कते किं पुनरिति ।** नवैवेत्येवकारेण किं व्यवच्छेदप्रतियोगितया बोध्यत इत्यर्थः । ननु द्रव्यत्वावच्छिन्ने पृथिव्यादिनवातिरिक्तद्रव्यस्य तादात्म्यसम्बन्धेन व्यवच्छेदो बोध्यत इत्यत आह **नहीति ।** प्रतिषेधः व्यवच्छेदज्ञानम् । नवातिरिक्तद्रव्यस्याप्रसिद्धेरिति भावः ।

अत्र द्रव्यत्वावच्छिन्ने तादात्म्यसम्बन्धेन पृथिव्यादिनवकं विशेषणम्, पृथिव्यादिनवके तादात्म्यसम्बन्धेन द्रव्यत्वावच्छिन्नं वा । आद्ये विशेषणसङ्गतैवकारतया "शङ्खः पाण्डर एव" इत्यादाविव विशेष्यतावच्छेदकद्रव्यत्वावच्छिन्नावच्छेदेन विशेषणीभूतपृथिव्यादेर्भेदानां व्यवच्छेदो बोध्यते; अन्त्ये विशेष्यसङ्गतैवकारतया "पार्थ एव धनुर्धरः" इत्यादाविव विशेष्यीभूतपृथिव्यादिनवभिन्नत्वावच्छेदेन विशेषणीभूतद्रव्यस्य तादात्म्यसम्बन्धेन व्यवच्छेदो बोध्यते इति, क्रमेण समाधत्ते **द्रव्यस्य सत इति ।** द्रव्यत्वावच्छिन्नस्य प्रसिद्धस्येत्यर्थः । द्रव्यत्वावच्छेदेनेति शेषः । **नवानात्मत्वमिति** पृथिव्यादिनवभिन्नत्वमित्यर्थः । प्रतिषिध्यत इत्यनुषज्यते एव । एवमग्रेऽपि ।

ननु द्रव्यत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदस्य बोधनात् नवत्वावच्छिन्नप्रतियोगिताकत्वस्य संसर्गविधयैव प्रवेशेन नवत्वोपस्थापकपदविरहेऽपि क्षतिविरहात् । 'प्रतियोगिविशेषणीभूतधर्म एवावच्छेदकत्वमवगाहते' इति नियमस्य एवकारादिजन्यशाब्दबोधातिरिक्ताभावप्रत्यये, अभावलौकिकप्रत्यक्ष एव वाभ्युपगमात् ।

न च विशेषणतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकव्यवच्छेद एवावधारणार्थः । अन्यथा 'घटः पाण्डर एव, इत्याद्यपि प्रयोगापत्तेः । घटत्वाद्यवच्छेदेनापि पाण्डरभेदस्य व्यासज्याव्यवृत्तिधर्माद्यवच्छिन्नव्यवच्छेदसत्त्वादिति वाच्यम् । विशेषणतावच्छेदकनानात्वस्थले तत्तद्विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकभेदकूटत्वावच्छिन्नप्रतियोगिताकव्यवच्छेदस्यैवावधारणार्थत्वात् । प्रतीतिबलेन तथैव व्युत्पत्तेरिति भावः ।

**नवबाह्यस्य सत** इति । पृथिव्यादिनवातिरिक्तस्य प्रसिद्धस्येत्यर्थः । **द्रव्यत्वं वेति ।** द्रव्यं वेत्यर्थः । तादात्म्यसम्बन्धेनेति शेषः । यथाश्रुतन्तु न सङ्गच्छते । द्रव्यत्वस्येतरविशेषणत्वेनोपस्थितत्वादेवकारव्यवच्छेद्ये तदन्वयासम्भवादिति ध्येयम् । **प्रतिपन्नस्य** प्रसिद्धस्य । **प्रतिपन्ने** प्रसिद्धे । **प्रतिषेधः** प्रतिषेधज्ञानम् । 'तद्व्यतिरेकेन

संज्ञान्तरानभिधानादि'ति भाष्याभिप्रायं प्रकटयति **अतः परमिति**। पृथिव्यादिनवातिरिक्तत्वं धर्मतावच्छेदकीकृत्य द्रव्यभेदस्य, द्रव्यत्वं धर्मितावच्छेदकीकृत्य पृथिव्यादिनवातिरिक्तत्वस्य वा निश्चयानन्तरमित्यर्थः। **न शङ्केति**। पृथिव्यादिनवातिरिक्तत्वं धर्मितावच्छेदकीकृत्य द्रव्यत्वस्य, द्रव्यत्वं धर्मितावच्छेदकीकृत्य पृथिव्यादिनवातिरिक्तत्वस्य वा न शङ्केत्यर्थः। **न चोत्तरम्**। न वा तादृशशङ्काया निवर्त्तकः पृथिव्यादिनवातिरिक्तत्वं धर्मितावच्छेदकीकृत्य द्रव्यस्य, द्रव्यत्वं धर्मितावच्छेदकीकृत्य पृथिव्यादिनवातिरिक्तत्वस्य वा निश्चय इति यावत्।

ननु तादृशनिश्चयानन्तरं केवलं पृथिव्यादिनवातिरिक्तत्वादिकं धर्मितावच्छेदकीकृत्य द्रव्यत्वादेः संशयो माऽस्तु, पृथिव्यादिनवातिरिक्तमिदं द्रव्यं स्यादिति तयोर्विशेष्यशङ्कायाम्, द्रव्यमिदं पृथिव्यादिनवातिरिक्तं स्यादिति सुवर्णविशेष्यकशङ्कायाञ्च न किमपि बाधकमित्यत आह **तथा हीति**। तादृशनिश्चये हीत्यर्थः। **इदं द्रव्यमिति**। एभ्योऽधिकमिदं द्रव्यं स्यादिति योजना। **इदमेभ्य इति**। द्रव्यमिदमेभ्योऽधिकं स्यादिति योजना। यथाश्रुते 'प्रथमे' इत्याद्यग्रिमग्रन्थासङ्गतेः। **शङ्केत**। शङ्का सम्भाव्येति। केवलसामान्यधर्मधर्मितावच्छेदककनिर्णयो न सामान्यघटितविशेषधर्मधर्मितावच्छेदककसंशयप्रतिबन्धक इत्यभिमानः। यत्र 'प्रथम' इति पाठस्तत्र तादृशशङ्कयोर्मध्ये। **प्रथमे** प्रथमसन्देहविशेष्यतावच्छेदकावच्छिन्ने तु इत्यर्थः। **आधिक्यं निराकरिष्यामः**। पृथिव्यादिनवातिरिक्तत्वाभावं साधयिष्यामः। **यथा सुवर्णस्येति**। येन हेतुना सुवर्णत्वावच्छिन्नस्येत्यर्थः। पृथिव्याद्यतिरिक्तत्वाभावः साधनीय इति शेषः। **अतः परमिति**। द्रव्ये इदन्त्वधर्मितावच्छेदककसुवर्णविशेष्यकपृथिव्याद्यतिरिक्तत्वाभावप्रकारकनिश्चयात् परमित्यर्थः। **न शङ्केति**। न द्रव्ये इदन्त्वधर्मितावच्छेदककपृथिव्याद्यतिरिक्तत्वप्रकारकशङ्केत्यर्थः। **न चोत्तरम्**। न वा तादृशशङ्काया निवर्त्तकोऽभावकोटिनिश्चय इति यावत्।

ननु तादृशनिश्चयानन्तरं द्रव्ये इदन्त्वधर्मितावच्छेदककसुवर्णविशेष्यकशङ्कादि माऽस्तु, द्रव्ये इदन्त्वधर्मितावच्छेदककधर्म्यन्तरविशेष्यकशङ्कादौ तु न किमपि बाधकमित्यत आह **धर्मिण एवेति**। धर्म्यन्तरस्येदन्त्वरूपेण द्रव्यत्वप्रकारकबुद्धेरेवाविषयत्वादित्यर्थः। तथा च धर्मितावच्छेदककप्रकारकधर्मिज्ञानस्य भ्रमहेतुतया तदभावान्न धर्म्यन्तरेऽपि तादृशशङ्कादिसम्भव इति भावः। **बुद्धिमारोक्ष्यते**। इदन्त्वप्रकारेण द्रव्यत्वं प्राक् बुद्धिविषयो भवेत्। **उक्तेष्वेव**। पृथिव्यादिष्वेव। **अनन्तर्भावे वा**। पृथिव्यादिषु अन्तर्भावासम्भवे वा। **निराकरिष्यत इति**। इदन्त्वरूपेण निरस्यत इत्यर्थः। इदन्त्वरूपेण द्रव्यत्वाभावज्ञाने च न तत्र द्रव्येदन्त्वधर्मितावच्छेदककज्ञानसम्भव इति भावः।

"तद्व्यतिरेकेण संज्ञान्तरानभिधानादि" ति भाष्यम्। **तद्व्यतिरेकेण**। तद्व्यतिरिक्तस्य पृथिव्यादिनवव्यतिरिक्तस्येति यावत्। **संज्ञान्तरानभिधानात्**। संज्ञान्तरेण द्रव्यत्वप्रकारेण अनभिधानात्। पृथिवी द्रव्यम्, जलं द्रव्यमित्यादिवत् पृथिव्यादिभिन्ने अमुकमिदं द्रव्यमित्यनभिधानादिति यावत्।

**स्यादेतद् अन्धकारस्तावदनुभवसिद्धतया दुरपह्नवः । न च सामान्यविशेषसमवायेष्वन्यतमं तमः । तेषां व्यञ्जकवैचित्र्येऽपि व्यक्त्याश्रयसम्बन्धिनामुपलम्भमन्तरेणानुपलम्भनियमात् । उपलम्भे वा तद्व्याघातात् ।**

नन्वन्धकारोऽपि द्रव्यान्तरम् । तथा च विभागाप्रामाण्यम् । न्यूनसंख्याव्यवच्छेदस्य विभागार्थत्वादित्याशङ्कते मूले **स्यादेतदिति** । अन्धकारोऽन्धकारपदवाच्यः, तमः पदवाच्यो वा । तमो द्रव्यमित्यभिधानादिति यावत् । तमसो द्रव्यत्वं परिशेषयितुमाह **न चेति । तमः** । तमः पदवाच्यम् । न च तमसः सामान्यरूपत्वे आलोकासत्त्वेऽपि तदुपलम्भापत्तिरिति वाच्यम् । तस्यालोकव्यङ्ग्यत्वादिति भावः । **तेषामिति** । व्यञ्जकवैचित्र्येऽपि तेषां व्यक्त्याश्रयसम्बन्धिनामुपलम्भमन्तरेणानुपलम्भनियमादिति योजना । **व्यञ्जकवैचित्र्येऽपि** । अन्धकारस्यालोकाभावरूपविलक्षणव्यञ्जकव्यङ्ग्यत्वेऽपि । **तेषाम्** सामान्यादीनाम् । व्यक्त्याश्रयसम्बन्ध्यविषयकलौकिकसाक्षात्कारविषयाभिन्नत्वनियमादित्यर्थः । व्यक्त्याश्रयसम्बन्धी व्यक्तिभेदप्रतियोगितावच्छेदकसाक्षात्कारस्तस्याश्रयो विषयस्तत्सम्बन्धीति यावत् । स्वसम्बन्ध्यविषयकलौकिकसाक्षात्कारभिन्नत्वनियमादिति फलितार्थः । स्वपदं भेदप्रतियोगिपरम् । यथाश्रुते व्यक्त्याश्रयसम्बन्धिनां पर्यायतया भेदेनोपन्यासासङ्गतेः ।

विशेषसमवाययोरतीन्द्रियत्वेऽपि विशेष्यभेदकृतो विशिष्टभेदस्तत्रास्ति । तथा च सम्बन्ध्यविषयकलौकिकसाक्षात्कारविषयभिन्नत्वस्य सामान्याद्यन्यतमत्वव्यापकतया तदभावेन तादृशलौकिकसाक्षात्कारविषयत्वेन तमसि सामान्याद्यन्यतमत्वाभावो व्यतिरेकिना साधनीय इति भावः । तमसि निरुक्तसाक्षात्कारविषयत्वेन हेतुना सामान्याद्यन्यतमत्वाभावसाधने व्यतिरेकव्याप्तिमभिधायान्वयव्याप्तिमप्याह **उपलम्भे वेति** । वाशब्दो यद्वेत्यर्थे । तथा च यद्वा उपलम्भे तत्त्वव्याघातादिति योजना । उपलम्भे विषयतासम्बन्धेन स्वसम्बन्ध्यविषयकलौकिकसाक्षात्कारविषयत्वस्य सामान्याद्यन्यतमत्वाभावव्याप्यतया तेन हेतुनाऽन्वयिना एकं तमः पक्षीकृत्य सामान्यविषयकसमवायान्यतमत्वाभावः साधनीयः । त्रसरेणुरसगन्धादिकं वा दृष्टान्त इति भावः ।

अत्र सम्बन्धित्वं संयोगसमवायविशेषणान्यतमसम्बन्धेन विवक्षितम् । अन्यथा समवायसम्बन्धमात्रेण स्वसम्बन्धित्वविवक्षणे स्वरूपासिद्ध्यापत्तेः । तमसः समवायिनोऽप्रसिद्धेः । तमसो द्रव्यत्ववादिनापि विशेषणतासम्बन्धेन संयोगसम्बन्धेनैव वा तस्य वृत्तेरभ्युपगमात् । तमसः समवायत्ववादिना स्वरूपसम्बन्धमात्रेणैव तस्य वृत्तेरभ्युपगमाद्धेतोः पक्षेऽन्यतमासिद्धिप्रसङ्गाच्च । विशेषणताविशेषमात्रेण स्वसम्बन्धित्वविवक्षणे तमसः सामान्यत्वविशेषत्ववादिनामसिद्धिप्रसङ्गात् । संयोगाप्रवेशे तमसो द्रव्यत्ववादिना यदि संयोगेनैव तस्य वृत्तिरुपेयते सामान्यविशेषयोरिव द्रव्यस्यापि विशेषणताविशेषेण वृत्तेरभ्युपगमेऽपसिद्धान्तात् तदा स्वतो(?)ऽसिद्ध्यापत्तेः ।

न च तथापि स्वत्वाननुगमाद्धेतोरननुगम इति वाच्यम्। स्वसम्बन्ध्यविषयक-लौकिकसाक्षात्कारवद्भिन्नभेदत्वेन तादृशलौकिकसाक्षात्काराणामनुगमादिति निगर्वः।

**केचित्तु, व्यक्त्याश्रयसम्बन्धिनाम्,** व्यक्तिः चाक्षुषसाक्षात्कारः। तस्याश्रयो जनकः। तत्सम्बन्धिनाम् आलोकानामिति यावत्। उपलम्भपदद्वयञ्च चाक्षुषोपलम्भपरम्। तथा च सामान्यादीनामालोकाविषयकचाक्षुषविषयान्यत्वनियमादित्यर्थः। न च पेचकादिचाक्षुषमादाय व्यभिचार इति वाच्यम्। मानुषत्वेन चाक्षुषविशेषणात्। मानुषत्वञ्च आलोकसंयोगादिजन्यतावच्छेदकतया सिद्धत्वेनास्मदीयचाक्षुषनिष्ठो जाति-विशेषः। न च तथापि अञ्जनविशेषादन्धकारे चौरादिना ग्राह्ये व्यभिचारः। तादृशाञ्जने प्रमाणाभावादिति भावः। तमसि आलोकविषयकचाक्षुषविषयत्वेन हेतुना सामान्याद्यन्यतमत्वाभावसाधने व्यतिरेकव्याप्तिमभिधायान्वयव्याप्तिमप्याह **उपल-म्भे वेति।** पूर्ववद् योजना। उपलम्भे लौकिकविषयतासम्बन्धेनालोकविषयकमानुष-चाक्षुषसत्त्वे। तद्व्याघातात्, अवश्यं सामान्याद्यन्यतमत्वाभावात्। तथा च लौकिकचाक्षुषविषयत्वस्य सामान्याद्यन्यतमत्वाभावव्याप्यतया तेन हेतुनाऽन्वयिनैव तमः पक्षीकृत्य सामान्यविशेषसमवायान्यतमत्वाभावः साधनीयः। लौकिकत्वप्रवेशादु-पनीतभानादिमादाय सामान्यादिषु न व्यभिचारः। आलोकाभावश्च दृष्टान्तः।

न चालोकाभावचाक्षुषे आलोकस्यापि विषयत्वाद् हेतोरसिद्धिरिति वाच्यम्। इदन्त्वादिना भाने आलोकस्याभावात्। आलोकविषयतया लौकिक्या विवक्षितत्वाच्च।

अथ तथापि भट्टैरभावस्यानुपलब्धिप्रमाणमात्रगम्यत्वाभ्युपगमात् चाक्षुषलौकि-कविषयत्वं तत्र नास्तीत्यसिद्धिर्दुर्वारैव। न चैवं घटत्वादिकमेव व्यतिरेकेन दृष्टान्त इति वाच्यम्। तथापि तन्मते तमसस्तामसेन्द्रियवेद्यतया चाक्षुषाविषयत्वात् स्वरूपा-सिद्धेर्दुर्वारत्वादिति चेन्न। भट्टसम्मतपूर्वपक्षित्वादित्याहुः।

**न कर्म संयोगविभागयोरकारणत्वात्। नह्यन्धकारेण किञ्चित् कुतश्चिद् विभज्य केनचित् संयोज्यते। अतथाभूतस्य तल्लक्षणानुप-पत्तेरतत्त्वात्।**

**संयोगविभागयोरिति** संयोगाकारणत्वाद् विभागाकारणत्वाच्चेति प्रत्येकं हेतुद्वयम्, न तु मिलितं व्यर्थत्वप्रसङ्गात्। कारणत्वञ्चासमवायिकारणत्वं बोध्यम्। अतस्तमसो द्रव्यत्ववादिनो मते न स्वरूपासिद्धिः। न चासमवायिकारणत्वाभावादित्येवास्त्विति वाच्यम्। अखण्डाभावेऽवैयर्थ्यात्। तन्मते स्वरूपासिद्धिवारकस्यापि सार्थकत्वाच्च।

नन्वत्र द्रव्यस्य विनश्यदवस्थतादशायमुत्पन्ने कर्मणि व्यभिचारः। तस्यापि संयोगाद्यनुपधायकत्वात्। अथ **आचार्यमते**ऽवयविनि कर्मोत्पादस्य साक्षात्परम्परासा-धारणविद्यमानयावदवयवकर्मोत्पादनियततया द्रव्यस्य विनश्यदवस्थतादशायां न तत्र कर्मोत्पत्तिसम्भवः। आरम्भकसंयोगनाशप्रयोजककर्मणोऽवयववृत्तित्वेन कर्मवति कर्मान्त-

रानुत्पादेन च आरम्भकसंयोगनाशकाले साक्षात्परम्परासाधारणयावदवयवकर्मोत्पत्त्यसम्भवात्। आरम्भकसंयोगनाशोत्पत्तिकालस्यैव च विनश्यदवस्थताकालत्वात्।

न च यत्र अंश्ववयवावयवक्रियाधीनोंऽश्ववयवावयवतन्त्वन्तरविभागः, ततोंऽश्ववयवतन्त्वन्तरविभागः, ततोंऽश्ववयवपूर्वसंयोगनाशः, ततोंऽश्वन्तरविभागः, ततोंऽश्ववयवावयवोत्तरसंयोगः, ततस्तन्तुद्वयविभागः, ततोंऽश्ववयवावयवकर्मनाशः, ततस्तन्तुद्वयसंयोगनाशः (पटकर्म यावदवयवकर्माणि, ततः पटनाशः, ततोऽजनितसंयोगविभागस्यापि पटकर्मणो विनाशः), तत्रैव विनश्यदवस्थत्वादशायां पटस्य कर्मोत्पत्तिसम्भव इति वाच्यम्। आरम्भकसंयोगाप्रतिद्वन्द्विविभागजनककर्मण एवारम्भकसंयोगप्रतिद्वन्द्विविभागस्यापि जनकत्वात्। विकसत्कमलकुड्मलविभागे तथा दर्शनात्। एतस्य च **गुणोपाये** विभागग्रन्थे सुव्यक्तत्वात् इति चेत् तथापि विभागाजनकत्वे हेतौ व्यभिचारविरहेऽपि—

यत्रावयविकर्म-यावदवयवकर्मोत्पत्तिश्चेत्येकः कालः, ततोऽवयविपूर्वदेशविभागः अवयवानामारम्भकसंयोगप्रतिद्वन्द्विविभागश्च, तत आरम्भकसंयोगनाशावयवपूर्वसंयोगनाशौ, ततोऽवयविनाशः, इदानीञ्च अवयविकर्मणा न अवयवदेशसंयोगः, समवायिकारणस्य कार्यसहभावेन हेतुत्वात्। ततः पञ्चमक्षणेऽवयविकर्मनाशः। तत्रावयविकर्मणि संयोगाजनकत्वे हेतोर्व्यभिचारस्य दुर्वारत्वात्। एतेन विनश्यदवस्थताकालोत्पन्नकर्मणि व्यभिचारवारणाय क्षणचतुष्टयस्थायित्वेन साध्यकर्म विशेषणीयमिति **प्रकाशकृ**दुक्तमपि परास्तम्। तथाप्यत्र व्यभिचारस्य दुर्वारत्वात्।

न च संयोगजनकत्वं संयोगस्वरूपयोग्यत्वम्, संयोगासमवायिकारणतावच्छेदकरूपवत्त्वमिति यावत्। तथा च संयोगासमवायिकारणतावच्छेदकस्य कर्मत्वस्य तादृशकर्मण्यपि सत्वान्न व्यभिचार इति वाच्यम्। कर्मत्वस्य संयोगासमवायिकारणतानवच्छेदकत्वात्। तत्तत्कर्माधीनसंयोगत्वावच्छिन्नं प्रति तत्तत्कर्मव्यक्तित्वेनैवासमवायिकारणत्वात्।

न च कर्मत्वेन विलक्षणसंयोगत्वेन सामान्यतः कार्यकारणभावमभ्युपेत्यायं हेतुरिति वाच्यम्। तथा सति अन्धकारस्य कर्मत्ववादिनये तस्यापि संयोगस्वरूपयोग्यत्वेन हेतोरन्यतरासिद्धिप्रसङ्गस्य दुर्वारत्वादिति। स्वोत्तरपञ्चमक्षणवृत्त्याश्रयकभिन्नत्वेन साध्यकर्मविशेषणात्। न तु तादृशाश्रयभिन्नत्वे सतीत्यनेन हेतुर्विशेष्यः 'अतथाभूतस्ये' त्याद्यग्रिमग्रन्थासङ्गतेः।

**अन्ये तु** संयोगजनकत्वे हेतौ एतदस्वरसादेव विभागाजनकत्वादिति हेत्वन्तरकल्पनान्न काप्यसङ्गतिरिति प्राहुः।

स्वरूपासिद्धिं निरस्यति **नहीति**। अप्रयोजकत्वं निरस्यति **अतथाभूतस्येति**। संयोगाद्यनुपधायकस्येत्यर्थः। **तल्लक्षणानुपपत्तेरिति**। संयोगाद्युपधायकत्वस्य विवक्षित-कर्मत्वव्यापकतया विवक्षितकर्मत्वव्यापकत्वेनेत्यर्थः। **अतत्त्वात्**। तत्त्वासम्भवात्। विवक्षितकर्मत्वासम्भवादिति यावत्। तथा च हेतुभूताभावप्रतियोगि-साध्यीभूताभाव-प्रतियोगि व्यापकताग्रह एवानुकूलस्तर्क इति भावः।

तत्र चापाततस्तमसः कर्मत्ववादिना तस्य संयोगादिजनकत्वस्याप्यभ्युपगमेन हेतोः सन्दिग्धासिद्धत्वात। वस्तुतस्तु तमसः कर्मात्मकत्वे तदाश्रयत्वेन प्रतीयमाने गृहादौ चलतीति बुद्धयापत्तेः। अन्यस्यैव तदाश्रयत्वे तदप्रत्यक्षतया तमसोऽप्यप्रत्यक्षता-पत्तेरित्येव मूलबाधकमवसेयम्।

**न गुणः, द्रव्यासमवायात्। द्रव्यासमवेतं ह्यसमवेतमेव स्याद् अद्रव्यसमवेतं वा। उभयथापि गुणत्वव्याघातः। सामान्यवतः स्वतन्त्रस्य द्रव्यत्वापत्तेः। निःसामान्यस्य गुणत्वलक्षणव्याघातात्। गुणकर्मणो-र्निगुणतया गुणस्य तत्र समवायविरोधात्।**

**द्रव्यासमवायादिति**। द्रव्यासमवेतत्वादित्यर्थः। अखण्डाभावघटकतया च न द्रव्यविशेषणवैयर्थ्यम्। अप्रयोजकत्वं निरस्यति **द्रव्यासमवेतं हीति**। तथा च द्रव्या-समवेतं हि द्विविधं सामान्यतोऽसमवेतम्, द्रव्यभिन्नसमवेतं वा। आद्ये द्रव्यत्वनियमः, अन्त्ये च गुणलक्षणायोगः। **उभयथापीति**। सामान्यतोऽसमवेतत्वे, द्रव्यभिन्नसमवेतत्वे वेत्यर्थः। गुणत्वव्याघातः गुणलक्षणायोगः। सामान्यतोऽसमवेतस्यम् गुणत्वव्याघात-मुपपादयति **सामान्यवत इति**। सामान्याश्रयस्य। **स्वतन्त्रस्य** असमवेतद्रव्यत्वापत्तेः। तादृशस्य द्रव्यत्वनियमात्। **निःसामान्यस्य**। सामान्यानधिकरणस्य। **गुणत्वलक्षण-व्याघातात्**। सामान्यवत्त्वे सति निर्गुणत्वस्य गुणलक्षणत्वादिति भावः। द्रव्यभिन्ने समवेतस्य गुणत्वव्याघातमुपपादयति **गुणकर्मणोरिति**। **गुणस्य तत्र समवायविरोधा-दिति**। गुणत्वस्य तत्समवेतत्वविरुद्धत्वादित्यर्थः।

**द्रव्यासमवाय एवास्य कथमिति चेद् ? इत्थम्। न दिक्कालमन-सामयम् तेषां विशेषगुणविरहात्। सामान्यगुणस्य च आश्रयसहोपलम्भ-नियमेन तदप्रत्यक्षतायामप्रत्यक्षत्वप्रसङ्गात्।**

शङ्कते **द्रव्येति**। **अस्य** तमसः। तमोरूपगुणे द्रव्यसमवेतत्वस्यैवास्माभिरभ्युपग-मादिति भावः। 'अयं गुण' इति पाठस्तु प्रामादिकः। दिगादिवृत्तिविशेषगुणस्याप्रसिद्धया साध्याप्रसिद्धयापत्तेः। अन्धकारो हि दिगादीनां गुणो भवन् विशेषगुणो वा स्यात् सामान्यगुणो वा। आद्य आह **तेषामिति**। अन्त्य आह **सामान्येति**। **आश्रयेति**। आश्रयविषयकप्रत्यक्षविषयत्वनियमेनेत्यर्थः। **तदप्रत्यक्षतायामिति**। दिगादीनामप्रत्यक्ष-

तयेत्यर्थ इति **यथाश्रुतग्रन्थान्वयिनः**। तदसत्। तेषां विशेषगुणविरहादित्याद्यहेतो-र्व्यभिचारित्वात्। दिगादिवृत्तिविशेषगुणाभावस्यापि दिगादिवृत्तिगुणेऽपि सत्त्वात्। अधिकरणभेदेनाभावभेदात्। अधिकरणभेदेनाभावभेदाभ्युपगमे च हेतोरपक्षधर्मत्वात्।

**नव्यास्तु** विशेषगुणविरहादित्यविशेषगुणत्वं सामान्यतो गुणान्यगुणत्वम्। तथा च अन्धकारो न दिगादिवृत्तिगुणः सामान्यगुणान्यत्वादित्यनुमेयमिति भावः।

नन्वयं हेतुः स्वरूपासिद्धो दिगादिवृत्तिसामान्यगुणत्वस्यैव तत्राभ्युपगमादित्यत आह **सामान्यगुणस्येति**। अर्थस्तु पूर्ववत्। तथा च अन्धकारो न दिगादिवृत्तिगुणः प्रत्यक्षत्वादित्यनुमेयमिति भावः। न च अन्धकारो न दिगादिगुणः प्रत्यक्षत्वादित्येवास्तु किं मानद्वयेनेति वाच्यम्। तस्यापि प्रकारान्तरत्वादिति प्राहुः।

**नात्मनो बाह्यकरणप्रत्यक्षत्वाद् इदन्तास्पदत्वाच्च।**

**नात्मन** इति। गुण इत्यनुषज्यते। एवमग्रेऽपि। चाक्षुषलौकिकप्रत्यक्षविषय-त्वादित्यर्थः। **इदन्तास्पदत्वाच्चेति**। मानसेतरालौकिकप्रत्यक्षविषयत्वाच्चेत्यर्थः। यथाश्रुते इदन्त्वास्पदत्वमिदन्त्वाश्रयत्वं तच्च सुखादौ व्यभिचारीति बोध्यम्।

**नापि नभोनभस्वतोश्चाक्षुषत्वात्। चाक्षुषता हि गुणानां रूपिद्रव्य-समवायेन व्याप्ता। तच्च रूपित्वं गगनपवनाभ्यां व्यावर्त्तमानं चाक्षुषगुण सम्बन्धमपि व्यावर्त्तयति।**

**नभोनभस्वतोरिति**। नभस्वान् वायुः। प्रयोजकत्वं निरस्यति **चाक्षुषता हीति**।

**न तेजसः। प्रतीतौ तद्विरोधित्वाच्छैत्यवत् गुणिनः स्वगुणप्रतीति-परिपन्थित्वे गुणस्य नित्यमनुपलब्धिप्रसङ्गात्। सति आश्रये तेनैव प्रति-बन्धाद् असति गुणस्यासत्त्वात्। तत्सहचरितगुणान्तरानुपलब्धेश्च।**

**न तावच्छाया तेजसो रूपमेव। तद्रूपस्य शुक्लभास्वरत्वनियमात्। न चेदं नीलप्रभावदाश्रयोपाधेरेवातथाभूतमिदमाभातीति साम्प्रतम्। शैल-भूतल-स्फटिक-पद्मरागाद्याश्रयरूपाननुविधानात्। तस्माद् गुणान्तरमेवेदं तेजस इति वाच्यम्। तथा च तद्ग्रहे तदग्रहणं तद्विरह एव तद्ग्रहणमिति विपरीतमिह महत्यनुपपत्तिः।**

**प्रतीताविति**। तमः प्रतीतावित्यर्थः। **तद्विरोधित्वादिति**। तेजसो लौकिक-विषयत्वाभावादित्यर्थः। तथा च तमो न तेजोगुणः तेजोलौकिकविषयतानाश्रयलौकिक-प्रत्यक्षविषयत्वात् शीतस्पर्शवदिति भावः। नन्वत्र तेजःप्रतिबध्यसाक्षात्कारविषयत्वा-भाव उपाधिरित्यत आह **गुणिन इति**। **स्वगुणप्रतीतिपरिपन्थित्वे**। स्वगुणप्रत्यक्ष-प्रतिबन्धकत्वे। **असत्त्वादिति**। असन्निकृष्टत्वादित्यर्थः। तथा च तेजःप्रतिबध्यसाक्षा-

त्कारविषयत्वमप्रसिद्धम्। जगति हि पदार्थद्वयं तेजोगुणस्तदितरश्च। तत्र तदितरस्मिन् तत्प्रसिद्धौ तदभावस्य व्यापकत्वमेव न सम्भवति। अतस्तेजोगुण एव प्रसिद्धिरूपेया। सा च न सम्भवति, गुणिनः स्वगुणप्रत्यक्षाप्रतिबन्धकत्वादिति भावः।

ननु तेजोलौकिकप्रत्यक्षान्यलौकिकप्रत्यक्षविषयत्वं ग्रीष्मोष्णस्पर्शे, प्रभाया अनुद्भूतस्पर्शत्वेनाप्रत्यक्षत्वमते चानैकान्तिकमित्यस्वरसादाह **तत्सहचरितेति**। सहचरितगुणान्तरपदं रूपवाचकम्। तथा च तेजोवृत्तिरूपादिविषयकत्वाच्चेत्यर्थः। तन्न। प्रतीताविति प्रागुक्तमत्र न सम्बध्यते। तथा च तमो न गुणः, तेजोरूपाविषयकचाक्षुषविषयत्वादिति भावः।

अत्र **भट्टनये** तमःप्रतीतेरपि नीलरूपविषयत्वादप्रसिद्धिवारणाय तेजःपदम्। प्रभारूपेऽनुद्भूतस्पर्शत्वेनाप्रत्यक्षत्वस्य 'तेजसो रूपं प्रभा' इति मते प्रभायाञ्च व्यभिचारवारणाय रूपेति। उष्णस्पर्शे व्यभिचारवारणाय चाक्षुषादिपदम्। सुवर्णादिवृत्तिगुणचाक्षुषेऽपि ग्राहकीभूततेजोरूपविषयकत्वान्न तत्र व्यभिचार इति ध्येयम्।

अत्र स्वरूपासिद्धिमाशङ्कते **न तावदिति**। छाया अन्धकारः। तथा च तमो न तेजोरूपमभास्वरत्वादिति भावः। अत्र स्वरूपासिद्धिमाशङ्कते **न चेति**। **तथाभूतमिदम्**। शुक्लभास्वरमपीदम् आश्रयौपाधिकम् आश्रयरूपवृत्तिनीलत्वप्रकारकमाभातीति योजना। **शैलेति**। शैलादिसम्बन्धिच्छायायाः शैलाद्याश्रयनिष्ठरूपवृत्तिशुक्लत्वरक्तत्वादिप्रकारकप्रतीत्यविषयकत्वादित्यर्थः। तथा च तमसि आश्रयरूपनिष्ठनीलत्वभ्रमे शैलादिसम्बन्धिच्छायाया अपि शुक्लत्वादिभ्रमापत्तेरिति भावः। **तद्ग्रह इति**। तेजोवृत्तिरूपग्रह इत्यर्थः। **तदग्रहणम्**। तच्चाक्षुषाभावः। **तद्विरह एवेति**। तेजोवृत्तिरूपाग्रह एवेत्यर्थः। **तद्ग्रहणम्**। तच्चाक्षुषम्। **महत्यनुपपत्तिरिति**। तेजोगुणस्य तेजोरूपाविषयकचाक्षुषाविषयत्वनियमादिति भावः।

**नापि पाथःपृथिव्योरालोकनिरपेक्षचक्षुर्ग्राह्यत्वात्। पार्थिवमेवेदमारोपितं रूपमित्यपि न समीचीनम्, बाह्यालोकसहकारिविरहे चक्षुषस्तदारोपेऽप्यसामर्थ्यात्। तदेव हि धर्म्यन्तरे समारोप्यते पित्तपीतिमवत्। तत्रैव वा नियतदेशेऽनियतदेशत्वं नेदीयस्यणीयस्यपि महत्त्ववत्। उभयथापि तद्ग्रहणमन्तरेणानुपपत्तिः। एकत्रारोप्यत्वाद् अन्यत्रारोपविषयत्वात् तस्यैव। न चालोकमन्तरेण रूपग्रहणे चक्षुषः सामर्थ्यमित्युक्तम्।**

**न चारोप्यारोपविषयाप्रथने भ्रान्तिसम्भवः। न च तयोरन्यतरस्मिन्नव्यापृतस्यैव चक्षुषो भ्रान्तिजनकत्वम्। न चायमचाक्षुषः प्रत्ययःतदनुविधानस्यान्यथासिद्धत्वात्।**

**पाथःपृथिव्योरिति**। गुण इत्यनुषज्यते। 'गृहीतमस्मिन् गृहे तमः' इत्याद्यारोपविषयीभूतमित्यर्थः। तथा च पृथिवीनीलरूपमेव तमः। नीलरूपाभाववति गृहादौ

'गृहे तमोऽस्ती'त्यादिप्रत्ययो भ्रम इति भावः। यद्यपि बाधकाभावात् कथं भ्रमः कल्पनीयः, किञ्च नीलरूपस्य तमस्त्वे 'तमो नीलम्' इति सह प्रयोगो न स्यात्। विवरणरूपत्वे नीलपदस्य पुंलिङ्गतापत्तेः 'गुणे शुक्लादयः पुंसि' इत्यनुशासनात्। अपि च नीलरूपस्यैव तमस्त्वे 'तमो नीलं न' इति प्रत्ययोऽपि प्रमा स्यात्। तथापि स्फुटत्वादिदमुपेक्ष्य दोषान्तरमाह **बाह्यालोकेति**। उद्भूतानभिभूतरूपवन्महत्तेजो विरह इत्यर्थः। **तदारोपेऽपि**। रूपविषयकारोपेऽपि। **असामर्थ्यात्**। असामर्थ्यमेव। अनुभूयमानारोपाभिप्रायेणोपपादयति **तदेव हीति**। पार्थिवं नीलरूपमेव हीत्यर्थः। **धर्म्यन्तरे**। गृहादौ। **पित्तपीतिमवदिति**। यथा शङ्खादौ पित्तवृत्तिपीतिमा रूपे समारोप्यत इत्यर्थः। **तत्रैवेति**। पार्थिवनीलरूप एवेत्यर्थः। **नियतदेशे**। अञ्जनादिमात्रवृत्तौ। **अनियतदेशत्वम्**। तदनधिकरणगृहादिवृत्तित्वम्। **नेदीयसीति**। यथा गोलकसन्निकृष्टेऽणावल्पदेशवृत्तित्वेऽपि महत्त्वं समारोप्यत इत्यर्थः। **तत्**। प्रथमं पार्थिवनीलरूपस्य साक्षात्कारम्। **एकत्र**। आद्ये पक्षे। **आरोप्यत्वाद्**। आरोपकार्यत्वात्। **अन्यत्र**। अन्त्ये पक्षे। **आरोपविषयत्वात्**। आरोपविशेष्यत्वात्। **तस्यैव**। नीलरूपस्यैव।

ननु तत्साक्षात्कारं विनैव तत्प्रकारकतद्विशेष्यकारोपो भविष्यतीत्यत आह **न चेति। आरोप्यारोपविषयाप्रथन इति**। विशेषणविशेष्ययोरज्ञान इत्यर्थः। विशेषणधर्मिणोरुभयोरेव ज्ञानस्य भ्रमहेतुत्वादिति भावः। ननु स्मरणादिरूपमेव तयोर्ज्ञानं भविष्यतीत्यत आह **न चेति**। न वेत्यर्थः। **तयोः**। आरोपविशेषणविशेष्ययोः। **अव्यापृतस्य**। आलोकसन्निकर्षविशिष्टसन्निकर्षरहितस्य। 'गृहं तमस्वी'त्यादौ विशेष्येण समं चक्षुःसन्निकर्षसत्त्वेऽप्यालोकसन्निकर्षविरहात्।

न च ज्ञानलक्षणप्रत्यासत्त्या अलौकिकप्रत्यक्षरूपमेव तज्ज्ञानमिति वाच्यम्, बहिरिन्द्रियजन्यज्ञानस्य मुख्यविशेष्यांशे लौकिकत्वनियमादिति भावः। **न चेति। अयम्**। 'गृहं तमस्वी'त्याद्यारोपः। किन्तु मानस एवेति भावः। **तदनुविधानस्येति**। चाक्षुषानुभवस्य चाक्षुषत्वं विनाऽनुपपन्नत्वादित्यर्थः।

**स्वप्नविभ्रमवन्मानस एवायम्, न चाक्षुष इत्येतदपि नाशङ्कनीयम्; निमीलितनयनस्य गेहेऽस्त्यन्धकारो न वेति सन्देहानुपपत्तेः। तस्मात् क्रियावत्त्वाद् गुणसम्बन्धाच्च द्रव्यमेव।**

**स्वप्नविभ्रमवदिति**। तथा च स्वप्नविभ्रमस्य यथा चाक्षुषत्वाद्यनुभवो भ्रमः, तथात्रापीति भावः। **निमीलितनयनस्येति**। नीलरूपस्य गृहवृत्तित्वाभावनिश्चयवतो निमीलितनेत्रस्येत्यर्थः। गृहस्थस्यामीलितनेत्रस्य तादृशसन्देहाभावे कदाचिदिष्टापत्तिः सम्भवतीति निमीलितनेत्रत्वेनाभिधानम्। इदमुपलक्षणम्। तादृशनिर्णयवतो विकाशितनेत्रस्य 'गृहेऽन्धकार' इति निश्चयस्याप्यनुपपत्तेः। अनुव्यवसायस्य प्रमात्वकल्पने बहुतरविप्लवापत्तेश्चेत्यपि बोध्यम्।

ननु तथापि आलोकाभाव एवान्धकारोऽस्तु, गृहादौ तमःसमये तस्य सर्वसिद्धत्वादतिरिक्तद्रव्यकल्पने च गौरवादित्याशङ्कामुपहारव्याजेन निराकरोति **तस्मादिति। क्रियावत्त्वादिति।** न च तदसिद्धं तमश्चलतीति प्रतीतेः। न चासौ भ्रान्तिर्बाधकाभावादिति भावः। **द्रव्यमेवेति।** एवकाराद् गुणादिपदार्थव्यवच्छेदः। न च क्रियात्वावच्छिन्नं प्रति मूर्त्तत्वेन समवायिकारणतया क्रियावत्त्वान्मूर्त्तत्वमायातु, द्रव्यत्वे तस्य किं मानमिति वाच्यम्; मूर्त्तत्वस्य द्रव्यत्वव्याप्यत्वात्। अन्यथा द्रव्यत्वमूर्त्तत्वयोः साङ्कर्यापत्तेः। तमसो मूर्त्तत्वद्रव्यत्वव्यभिचारित्वादिति भावः।

**क्रियावत्त्वादेव नाकाशाद्यात्मकम्। रूपवत्त्वादेव न वायुमनसी। स्पर्शरहितत्वान्न पृथिवी जलं तेजो वेति दशमं द्रव्यं प्राप्तम्। तत् कथं नवैवेति।**

नन्वस्तु द्रव्यत्वम्. तथापि तस्य क्लृप्तद्रव्यान्तर्गतत्वमेवास्तु इत्यत आह **क्रियावत्त्वादेवेति।** नाकाशादीत्यादिपदात् कालदिगात्मनां परिग्रहः। न चेदमप्रयोजकम्, तथा सति क्रियात्वावच्छिन्नं प्रति मूर्त्तत्वेन समवायिकारणत्वस्य व्यभिचारेण भङ्गापत्तेरिति भावः। **रूपवत्त्वादेवेति।** तमसो मनस्त्ववायुत्ववत्त्वे मानाभावाच्चेत्यपि बोध्यम्।

एतेन रूपवत्त्वं न मनस्त्ववायुत्वाभावसाधकमप्रयोजकत्वात्। नहि रूपं प्रति पृथिव्यादित्रयाणां विशिष्यकारणत्वमस्ति, येन तदेव विपक्षबाधकं भवेत्। तत्सत्त्वेऽपि तमोवृत्तिरूपस्य नित्यस्य पृथिव्यादिभिन्नवृत्तौ वाधकाभावाच्च।

न चैवमन्धकारभिन्नमनोवायूनामपि रूपवत्त्वापत्तिरिति वाच्यम्, तेषां रूपवत्त्वे मानाभावात्। अन्धकारस्य च रूपवत्त्वे चक्षुष एव प्रमाणत्वात्।

न च तथापि चाक्षुषत्वेन हेतुना मनस्त्ववायुत्वाभावः साधनीय इति वाच्यम्, तस्याप्यप्रयोजकत्वात्। अन्धकारभिन्नमनोवायूनां महत्त्वरूपवत्त्वाभावादेव चाक्षुषत्वासम्भवादित्यपि निरस्तम्। तमसो मनस्त्ववायुत्ववत्त्वे मानाभावादतिरिक्तधर्मिकल्पनस्याविशिष्टत्वादिति ध्येयम्।

**स्पर्शरहितत्वादिति।** न चेदमसिद्धम्। महदुद्भूतस्यैव स्पर्शस्य तत्र सुवचत्वादिति वाच्यम्, तत्कल्पने च गौरवान्मानाभावाच्चेति भावः। एतच्चापाततः। पृथिवीत्वादेः स्पर्शव्याप्यत्वे मानाभावात्। वस्तुतस्तु तमसः पृथिवीत्वादिमत्त्वे मानाभावः।

न च नीलत्वावच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणतया नीलरूपवत्त्वमेव पृथिवीत्वे मानमिति वाच्यम् तादृशकार्यकारणभावे मानाभावात्। विलक्षणतेजःसंयोगावयवनीलात्मकविशेषकारणद्वयविरहादेव जलादौ तदुत्पादवारणसम्भवात्। तेजसि

पाकजनीलाद्युत्पादस्य विद्यमानरूपप्रतिबन्धकत्वादेवासम्भवात् । तद्व्यक्तिसमवेततेजस्त्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यावश्यकतया तत एव तेजसि पाकजनीलोत्पादवारणसम्भवाच्च । तत्तत्पृथिवीव्यक्तिसमवेतातिरिक्तनीलस्यालीकत्वात् ।

न च नीलत्वस्य कार्यमात्रवृत्तिजातितया कार्यत्वावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वमावश्यकम् । द्रव्यत्वादेर्व्यापकधर्मत्वेनान्यथासिद्धत्वादिति वाच्यम् । तमसो नित्यतया तद्वृत्तिनीलस्यापि नित्यत्वाभ्युपगमेन तस्य कार्यमात्रवृत्तित्वासिद्धेः ।

न च तमसो नित्यत्वे 'अन्धकार उत्पन्न' इति प्रतीतिव्याघात इति वाच्यम्, तादृशप्रतीतेर्न्यायमतेऽपि भ्रमत्वात् । यत्र प्रकारान्तरेण तदवच्छिन्नोत्पत्तिनियमो न सम्भवति, तत्रैव कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमाच्च । अस्तु वा तादृशकार्यकारणभावः । तथापि तमोवृत्तिनीलस्य नित्यत्वाभ्युपगमेन तस्य पृथिवीत्वासाधकत्वादित्येव वोध्यम् ।

**तेजो वेति ।** स्पर्शरहितत्वाद् वेत्यत्रापि सम्वध्यते । यद्यप्येतदप्रयोजकं तेजस्त्वस्य स्पर्शव्याप्यत्वे मानाभावात् । न च तेजसः शुक्लभास्वररूपवत्त्वनियमान्नीलरूपवतस्तमसः कथं तेजस्त्वमिति वाच्यम् । तादृशनियमस्याप्यप्रयोजकत्वात् । न वान्धकारस्य तेजस्त्वे तच्चाक्षुषदशायां तत्सम्वद्धभूतलादेरपि चाक्षुषापत्तिरिति वाच्यम्, लाघवात्, प्रभासंयोगस्यैव द्रव्यचाक्षुषहेतुत्वात् । अन्धकारस्य तेजस्त्वाभ्युपगमेऽपि प्रभात्वस्य जातिविशेषस्य तत्रानभ्युपगमात् । तथाप्यत्रापि मानाभाव एव तात्पर्यमवसेयम् ।

**दशमं द्रव्यमिति ।** पृथिव्यादिनवातिरिक्तत्वद्रव्यत्वोभयवदित्यर्थः । अतो नाप्रसिद्धिः, प्रत्येकाधिकरणेषु प्रसिद्धयोर्द्वयोर्द्वित्वरूपेण निरधिकरणकप्रसिद्धिसत्त्वात् । नहि विधेयतावच्छेदकावच्छिन्नस्य साधिकरणप्रसिद्धिरेवाङ्गमिति ध्येयम् ।

अन्धकारवादपूर्वपक्षरहस्यम् ।

**न वस्तुगत्यास्य क्रियावत्त्वे रूपवत्त्वे वाऽचाक्षुषत्वप्रसङ्गात् । आलोकसहकारिणश्चक्षुषस्तत्र सामर्थ्यावधारणादित्युक्तम् ।**

अन्धकारस्य क्रियावत्त्वे एव तेन हेतुना तस्य द्रव्यत्वं साधनीयम् । तदेव च तत्रासिद्धमित्यभिप्रायेण समाधत्ते **वस्तुगत्येति । अस्य** तमसः । **अचाक्षुषत्वप्रसङ्गादिति ।** आलोकनिरपेक्षचाक्षुषविषयत्वप्रसङ्गादित्यर्थः । यथाश्रुते घटादौ व्यभिचारात् । **तत्रेति ।** क्रियावतो रूपवतश्च चाक्षुष इत्यर्थः । द्रव्यत्वविशिष्टलौकिकविषयतासम्बन्धेन चाक्षुषोत्पत्तिं प्रति संयोगसम्बन्धेन (तद्भूतले ?) अनभिभूतरूप-

वन्महत्तेजस्त्वेन वा कारणत्वादन्धकारेतरद्रव्यत्वविशिष्टलौकिकविषयकत्वस्य कार्यता-वच्छेदकसम्बन्धत्वे गौरवात् ।

तथा च तमःपदवाच्यं न रूपवत् क्रियावद् वा अनालोकामानुषलौकिक-चाक्षुषविषयत्वात् तेजोऽभाववदित्यनुमेयम् । विडालादिचाक्षुषविषये घटादौ व्यभि-चारवारणाय मानुषत्वं चाक्षुषविशेषणम् ।

अथ तथापि हेतोरन्यतरासिद्धिः, भट्टमतेऽन्धकारस्याचाक्षुषत्वात् । तन्मते चक्षुर्गोलकवृत्तितामसाख्यातिरिक्तेन्द्रियस्यैवान्धकारग्राहकत्वात् । यथा सर्पाणामेकमेव चक्षुर्गोलकं चक्षुःश्रोत्रयोरुभयोरधिष्ठानम् तथैव भट्टमते एकस्यैव चक्षुर्गोलकस्य तामसेन्द्रियचक्षुरिन्द्रिययोरुभयोरधिष्ठानत्वाभ्युपगमात् । अत एवान्धकारप्रत्यक्षे चक्षुषोरुन्मीलनापेक्षेति चेन्न, अतिरिक्तेन्द्रियकल्पने गौरवात्, मानाभावात्, 'अन्धकारं पश्यामि' इति सर्वजनसिद्धानुभवविरोधाच्च ।

अथ तथापि साधनविकलो दृष्टान्तः, भट्टमतेऽभावस्यानुपलब्धिप्रमाणगम्यतया तेजोऽभावस्य चाक्षुषाविषयत्वात् । न च द्रव्यं व्यतिरेकेण दृष्टान्त इति वाच्यम्, तेजोऽभावस्यानुपलब्धिप्रमाणगम्यत्वे आलोकाजन्यमानुषलौकिकचाक्षुषविषयत्वस्यैवा-प्रसिद्धेः । आलोकप्रत्यक्षेऽप्यालोकस्य हेतुत्वात् ।

न च चाक्षुषपदं चक्षुर्गोलकाधिष्ठितेन्द्रियजन्यज्ञानपरम् । तथा च तन्मते तमोवृत्तिनीलरूपे, अस्मन्मते तेजोऽभावे तत्रानुकूलतर्कासम्भवाच्चाक्षुषत्वस्यैव तत्र कार्यतावच्छेदकत्वादिति चेन्न, अनुपलब्धेः स्वतन्त्रप्रमाणत्वाभावात् । तथा सति 'अभावो दृष्टः' 'अभावं पश्यामि' इत्याद्यनुभवविरोधाच्च ।

अथैवं मास्तु अन्धकारो द्रव्यान्तरम् किन्तु प्रभेतरनीलरूपवत्तेज एवास्तु । तथा चानभिभूतरूपवत्तेजोभिन्नद्रव्यचाक्षुषं प्रत्येव प्रभासंयोगस्य हेतुतया तेन विना चाक्षुषत्वानुपपत्तिः । न च तस्य तेजस्त्वे मानाभाव इति वाच्यम्, अबाधित-चलनप्रतीतेर्भ्रमत्वापत्त्या परिशेषेण तेजस्त्वस्यैव कल्पनात् । आलोकानपेक्ष्य चक्षु-र्ग्राह्यत्वस्यैव विनिगमकत्वात् ।

न चान्धकारस्य तेजस्त्वे चाक्षुषदशायां सम्बद्धभूतलादेरपि चाक्षुषत्वापत्तिरिति वाच्यम्, लाघवात् प्रभासंयोगस्यैव अनभिभूतरूपवत्तेजोभिन्नद्रव्यलौकिकचाक्षुषं प्रति हेतुत्वात् । अन्धकारस्य तेजस्त्वाभ्युपगमेऽपि प्रभात्वस्य जातिविशेषस्य तत्रानभ्युपगमा-दिति चेन्न, 'नीलं तम' इति प्रतीतिवत् 'नीलं तेज' इत्यपि प्रतीत्यापत्तेः । दोष-विशेषस्य तेजस्त्वाभ्युपगमे महद्गौरवापत्तेः ।

किञ्च लाघवाद् द्रव्यलौकिकचाक्षुषसामान्यं प्रत्येव संयोगसम्बन्धेन प्रभा हेतुः । न चैवं प्रभाचाक्षुष एव व्यभिचारः, तत्र प्रभान्तरविरहादिति वाच्यम्, तत्र प्रभान्तर-

संयोगासत्त्वस्य शपथमात्रनिर्णेयत्वात्। प्रभाप्रतियोगिकसंयोगसम्बन्धेन प्रभाया न हेतुत्वम्, अपि तु प्रभावृत्तिसंयोगसम्बन्धेन। तथा च स्वनिष्ठचक्षुःसंयोगसम्बन्धेनैव प्रभायाः स्वात्मकप्रभासम्बन्धितया प्रभान्तरसंयोगासत्त्वेऽपि व्यभिचारविरहाच्चेति भावः।

ननु संयोगसम्बन्धे वा, उद्भूतानभिभूतरूपवन्महत्तेजःप्रभायां वा न द्रव्य चाक्षुषहेतुत्वम् अपि तु लाघवात् चक्षुःसंयोगस्यैवालोकसंयोगसाधारणवैजात्यविशेषेण हेतुत्वम्। तच्च वैजात्यमन्यत्र आलोकसंयोगावच्छिन्नचक्षुःसंयोग एव वर्त्तमानम्। अन्धकारस्थले चक्षुःसंयोगमात्रनिष्ठम् अतोऽन्धकारस्य चलनप्रतीतेश्च भ्रमत्वापत्त्या द्रव्यान्तरत्वेऽपि तेजःसंयोगं विना न तच्चाक्षुषानुपपत्तिः।

अस्तु वा संयोगसम्बन्धेन द्रव्यचाक्षुषं प्रति.........तस्याप्रत्यक्षत्वापत्तिरिति वाच्यम्, प्रभास्पर्शयोरपि चाक्षुषस्यानुभवसिद्धतया बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपस्येव विनिगमनाविरहेण उद्भूतस्पर्शस्यापि हेतुतया निःस्पर्शस्य तस्याप्रत्यक्षत्वापत्तिरिति वाच्यम्। प्रभास्पर्शयोरपि चाक्षुषस्यानुभवसिद्धतया बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षसामान्यं प्रति उद्भूतस्पर्शस्यापि हेतुत्वात्। किन्तु प्रभायाः स्पार्शनप्रत्यक्षत्वापत्तिवारणाय लाघवाद् द्रव्यस्पार्शनत्वावच्छिन्नं प्रत्येव तस्य हेतुत्वात्।

न च वायूष्मणोरपि स्पार्शनप्रत्यक्षस्यानुभवसिद्धतया बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपमपि न हेतुः, किन्तु वायूष्मणोश्चाक्षुषवारणाय द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव तद् हेतुर्लाघवादिति वाच्यम्। यदि वायूष्मणोरपि स्पार्शनप्रत्यक्षमनुभवसिद्धम्, तदा तथैवाभ्युपगमादिति न किञ्चिदेतत्।

वस्तुतस्तु अन्धकाराख्यातिरिक्तद्रव्यतद्वृत्तिक्रियासंयोगाद्यनन्तधर्मस्य च कल्पने गौरवादुभयसिद्धतेजसोऽभाव एवान्धकारो लाघवात्। न चैवं चलनादिप्रतीतेरनुपपत्तिरिति वाच्यम्, अतिरिक्तानन्तपदार्थकल्पनागौरवमपेक्ष्य कतिपयप्रतीतीनां तद्बाधकरणेन भ्रमत्वकल्पनाया एवोचितत्वादित्येवान्धकारस्य द्रव्यत्वनिराकरणे युक्तिरवसेया।

**न चेदमद्रव्यं रूपिद्रव्यम्, रूपवतो मूर्त्तिनान्तरीयकत्वेन निरवयवस्य परमाणुतयातीन्द्रियत्वापत्तेः। नाप्यनेकद्रव्यं द्रव्यं स्पर्शरहितद्रव्यत्वेनानारब्धत्वान्मनोवत्। न च रूपवत्तया स्पर्शोऽनुमास्यते, तद्रहितस्यापि पुरुषार्थहेतुत्वादारब्धत्वं वा स्यात्। तस्य चानुभवसिद्धत्वात्। मनसस्तु अनुपलभ्यमानधर्मस्य स्वयमनुपलभ्यमानस्य च वैयर्थ्यादिवारम्भानुपपत्तिरिति साम्प्रतम्। रूपवत्त्वस्य प्रागेवाप्रत्यक्षत्वप्रसङ्गेनापास्तत्वात्। प्रत्यक्षत्वस्य चानुभवसिद्धत्वादित्येतत् सर्वमनुसन्धाय भगवान् मुनिराह "द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद् भाभावस्तम" इति।**

स्वोक्ते सूत्रकारसम्मतिं सूचयति **एतत् सर्वमिति। आह** उक्तवान्। **निष्पत्तीति।** सामान्यविशेषसमवायेत्यर्थः। निष्पद्यते विशिष्टबुद्धिरनयेति यथाकथञ्चिद् व्युत्पत्तेः। **वैधर्म्यम्** भेदः। **भाभाव** इति। उद्भूतानभिभूतरूपवन्महत्तरतेजःसामान्याभाव इति व्युत्पत्तिः। चक्षुरुष्मादिवारणाय उद्भूतेति। सुवर्णादिवारणायानभिभूतेति सुवर्णादिभिन्नात्मकम्। ............। परमाणुद्व्यणुकत्रसरेणुवारणाय महत्तरेति।

वस्तुतस्तु प्रभासामान्याभाव एवान्धकारः। यथोक्ततेजःसामान्याभावस्यान्धकारत्वे गुरुत्ववद् (घटाभावादिवद् ?) अतीन्द्रियत्वापत्तेः। अन्धकारवति प्रभाभावस्याशङ्कादिसत्त्वे मानाभावात्। न चैतादृशतेजःसामान्याद्यभावस्यान्धकारत्वे आलोककालेऽपि घटवृत्तिरूपादौ अन्धकारप्रत्ययापत्तिः। संयोगसम्बन्धेन तादृशतेजःसामान्याभावस्य तत्र सत्त्वादिति वाच्यम्, द्रव्यवृत्तित्वविशिष्टतत्सामान्याद्यभावस्य, संयोगसमवाय-संयुक्तसमवायान्यतमसम्बन्धेन तादृशतेजःसामान्याद्यभावस्य वा अन्धकारत्वेन विवक्षितत्वात्। आद्येऽन्धकारदशायामपि गुणादिषु तमस्वितावुद्धिर्भ्रमः। द्वितीये सा प्रमैव। किन्तु 'कोणे गृहेऽन्धकारो न मध्ये' इत्यादिधीः परम्परासम्बन्धेन कोणादिवृत्त्यन्धकारवत्तावगाहिनी कोणावच्छेदेन साक्षात्सम्बन्धेन गृहेऽन्धकारवत्तावगाहिनी तु भ्रमः, संयुक्तसमवायसम्बन्धेन मध्यभागवृत्त्यालोकस्य सत्त्वात्।

न चैवमपि अन्धतमसो व्याप्तिः, यत्किञ्चित् तादृशतेजोव्यक्तिसत्त्वेऽप्यन्धतमःप्रत्ययादिति वाच्यम्। तमःपदस्यात्रान्धतमःपरतयान्धतमस एवात्र वक्ष्यमाणत्वात्। अन्धतमसि च तादृशतेजो व्यक्तीनां विशेषतोऽनुपस्थितावपि न क्षतिः। अन्धकारादिशब्दश्च नानार्थः। अवतमसान्धतमसत्वयोरेव तत्प्रवृत्तिनिमित्तत्वात्। अस्तु वा अवतमसान्धतमसान्यतरत्वमेवोभयसाधारणं प्रवृत्तिनिमित्तम्।

न चान्धकारस्याभावरूपत्वे तारतम्यानुपपत्तिरभावे उत्कर्षापकर्षविरहादिति वाच्यम्, अवतमसत्वान्धतमसत्वातिरिक्तस्य तारतम्यस्य तत्रानभ्युपगमादिति भावः।

**सोऽपि कथमालोकमन्तरेण प्रतियोगिस्मरणानधिकरणग्रहणविरहे विधिमुखेन च चाक्षुष इति चेन्न, यद्ग्रहे हि यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्ष्यते। तदाऽलोकाभावेऽप्यालोकापेक्षा स्याद् यद्यालोकेऽपि तदपेक्षा स्यात्। न त्वेतदस्ति, प्रत्युत विरोध एव। तस्मिन् सति तदभाव एव न स्यात्, किं तदपेक्षेण चक्षुषा गृह्यते? एवं हि तदितरसामग्रीसाकल्यं स्यात्।**

शङ्कते **सोऽपीति। प्रतियोगिस्मरणेति** प्रतियोगिज्ञानेत्यर्थः। शङ्काचतुष्टयस्य प्रथमशङ्कायाश्चोत्तरमाह **यद्ग्रहे हीति**। ........। **तदेति** तथा चेत्यर्थः। **आलोकाभावे** तत्साक्षात्कारे। **आलोकेऽपि**। आलोकसाक्षात्कारेऽपि। **प्रत्युतेति** किन्त्वित्यर्थः। **विरोध**

**एवेति** । आलोकाभावप्रत्यक्षे आलोकस्य विरोधित्वमेवेत्यर्थः । विरोधित्वमेवोपपादयति **तस्मिन् सतीति** । **न स्यात्** न तिष्ठति ।

**दिवा च प्रतियोगिनः प्रभामण्डलस्य ग्रहण एव प्रदेशान्तरे तद्ग्रह इति न किञ्चिदनुपपन्नम् । अन्यत्रापि न रात्रिमप्रतिसन्धायान्धकारग्रहः । रात्रिज्ञानञ्च न दिवसमप्रतिसन्धाय । निरस्तैतद्द्वीपवर्तिरविरश्मिजालः कालविशेषो ह्यत्र रात्रिरित्युच्यते । गिरिदरीविवरवर्त्तिनस्तु यदि योगिनः न ते तिमिरावलोकिनः । अवलोकिनश्चेन्नूनं स्मृतालोका इति ।**

द्वितीयशङ्कामुपपादयति **दिवा चेति** । दिवसे चेत्यर्थः । **ग्रहण एव** साक्षात्कार एव । **प्रदेशान्तरे** गृहगह्वरादौ । ननु तथापि रात्रौ कथं तद्ग्रहः स्यादित्यत आह **अन्यत्रापीति** । **रात्रिं** रात्रित्वादिविशिष्टम् । **न दिवसमिति** दिवसत्वविशिष्टमित्यर्थः । दिवसत्वञ्च रविरश्मिजालविशेषविशिष्टत्वम् । अतस्तेजोज्ञानविशेषवतामवश्यं वर्तत इति भावः । यद्यपि रात्रित्वदिवसत्वज्ञानं विनापि रात्रावन्धकारप्रत्ययो भवति, तथापि प्रतियोगिज्ञानस्यावश्यम्भावित्वमात्रे तात्पर्यम् । दिवसत्वमप्रतिसन्धाय कुतो न रात्रित्वग्रहस्तदाह **निरस्तेति** ।

ननु तथापि गिरिगुहाविवरस्थानां योगिनामालोकादर्शिनां कथं दिवा तमोधीरित्यत आह **गिरीति** । **यदि योगिनः** । यदि योगसक्ताः । **न ते तिमिरावलोकिन इति** । योगासक्ततया बाह्यविषयकज्ञानविरहादिति भावः । **अवलोकिनश्चेद्** यदि तिमिरावलोकिनः । **नूनं** निश्चितम् ।

**अधिकरणमपि दृष्टमनुमितं स्मृतं वा । 'इहेदानीमन्धकार' इति प्रत्ययात् ।**

तृतीयशङ्कामुत्तरयति **अधिकरणमपीति** ।

**विधिमुखप्रत्ययस्त्वसिद्धः । न हि नञोऽप्रयोग इत्येव विधिः, प्रलयविनाशावसानादिषु व्यभिचारात् । नञर्थान्तर्भावेन वाक्यार्थे पदप्रयोग इति तु समं समाधानमन्यत्राभिनिवेशात् ।**

चतुर्थशङ्कायामुत्तरयति **विधिमुखप्रत्ययस्त्विति** । अभावत्वाप्रकारस्त्वित्यर्थः । **नहीति** । न हि तमः प्रत्ययानन्तरं कदाचिन्नञः प्रयोगाभावादेवाभावत्वाप्रकारकत्वम् । **प्रलयविनाशावसानादिष्विति** । आदिः कारणम् । तथा च प्रलयादिप्रयोजनकत्वेऽपि नञर्थतावच्छेदकावच्छिन्नघटितवाक्यार्थविषयकपदजनकत्वादेरभावत्वप्रकारकत्वमित्यत आह **नञर्थेति** । तदनन्तरं नञर्थतावच्छेदकावच्छिन्नघटितवाक्यार्थविषयकपदप्रयोग

इति **समाधानन्तु** । **अन्यत्राभिनिवेशात्** । अन्यत्राभिनिवेशे सति सममिति योजना । **अन्यत्र** स्वमतातिरिक्ते मतेऽस्मन्मत इति यावत् । अस्मन्मते तमःपदादेरपि नञर्थताव-च्छेदकावच्छिन्नघटितवाक्यार्थविषयकत्वात् । यदि च स्वमतेऽभिनिवेशः क्रियते, तदा तु न समम् । भवन्मते तमःपदादेर्नञर्थघटितवाक्यार्थाविषयकत्वादिति भावः ।

**केचित्तु** अन्यत्राभिनिवेशाद् नञोऽप्रयोग इत्येव विधिरिति पक्षादन्यस्मिन् पक्षे प्रवेशादित्यर्थ इत्याहुः ।

**गतेः का गतिरिति चेद् भ्रान्तिः । स्वाभाविक्यां गतावावरक-द्रव्यानुविधानानुपपत्तेः । प्रभातुल्यत्वे तेजःप्रभाश्रयेषु रत्नविशेषेषु छाया दिवसे न स्यात् । छाययैव तदभिभवे बहुलतमे तमसि तेषामालोको न स्यात् । आलोकान्तरेण चाभिभवे छायाया अप्युद्भवो न स्यात् ।**

**गतेरिति** । 'तमश्चलती'ति गतिप्रत्ययस्येत्यर्थः । **आवरकद्रव्येति** । तद्गतिप्रत्यय-स्यावरकद्रव्यगत्युत्पादानन्तर्यनियमानुपपत्तेरित्यर्थः । यथा रत्नप्रभा स्वाभाविकगति-शालिनी तेजस्त्वाद् । अथ च स्वाश्रयगत्युत्पत्त्यनन्तरमेव तद्गतिप्रत्ययः । तत्कर्मोत्पाद-स्याश्रयकर्मोत्पादसमनियतत्वात् । तथैव छायागत्युत्पादस्याप्यावरकद्रव्यगत्युत्पादसम-नियतत्वादावरकगत्युत्पादानन्तरमेव तद्गतिप्रत्यय इत्यत आह **प्रभातुल्यत्व** इति । प्रभाया गत्युत्पादो यथा आश्रयगत्युत्पादसमनियतः, तथैव छायागत्युत्पादस्यावरकद्रव्य-गत्युत्पादसमनियतत्वे इत्यर्थः । **तेजःप्रभाश्रयेषु** । तेजोरूपप्रभायुक्तानां रत्नविशेषाणां पद्मरागादीनामिति यावत् । षष्ठ्यर्थे सप्तमीविधानात् । प्रभापदस्यानुभवपरताभ्रम-निराकरणाय प्रभायास्तेजोरूपत्वाभिधानम् । चिरकालमागत्य भूतलादौ संयुक्तानां निश्चलानामिति शेषः । **दिवसे न स्यादिति** । दिवसे भूतलादिवृत्तिर्न स्यादित्यर्थः । आवरकमणीनां गत्यभावेन तच्छायाया अपि भूतलादिसंयोगजनकगत्यसम्भवादिति भावः । दिवस एव पद्मरागादीनां छायायोगसम्भवाद् दिवस इत्युक्तम् ।

ननु यदा आवरकमणीनां क्रियादिक्रमेण भूतलादिसंयोगः तदैव तच्छायाया अपि क्रियादिक्रमेण भूतलादिसंयोग इत्यत आह **छाययैव तदभिभव इति** । छायया सहैव तेषां भूतलादिसंयोग इत्यर्थः । **बहुलतमे तमसि** । आलोकान्तरसामान्याभावदशायाम् । **तेषामिति** । निखिलाना(रत्नानां ?)मिति शेषः । **आलोको न स्यादिति** । तत्पूर्वं भूतलादौ छायाभावो न स्यादित्यर्थः । छायाया नित्यत्वेनोत्पादविनाशविरहादिति भावः ।

नन्ववहतस्यापि(?) भूतलादौ तेषां छायास्त्येव, आलोकसाक्षात्कारस्य प्रतिबन्ध-कतया च न गृह्यत इत्यत आह **आलोकान्तरेण चेति** । आलोकविषयकेण साक्षात्कारेण चेत्यर्थः । **अभिभवे** छायाप्रत्यक्षप्रतिबन्धे । **छायाया अप्युद्भवो न स्यादिति** । छायाया दिवसेऽप्युपलम्भो न स्यादित्यर्थः ।

**तस्मादावरकद्रव्ये गच्छति यत्र यत्र तेजसोऽसन्निधिस्तत्र तत्र छाया-ग्रहणाद् अन्यदेशतानिबन्धनो गतिभ्रम इति । कथं भावधर्माध्यारोपोऽभाव इति चेन्न किञ्चिदेतत् । सारूप्यतत्त्वाग्रहाविह निबन्धनं न त्वन्यत् । दृष्टश्च दुःखाभावे सुखत्वाध्यारोपः । यथा दुःखापगमे सुखिनः संवृत्ताः स्मः । संयोगाभावे विभागत्वाभिमान इति ।**

स्वमतमुपसंहरति **तस्मादिति ।** **असन्निधिः** सम्बन्धाभावः । **अन्यदेशता-निबन्धनः** तद्ग्रहनिबन्धनः । **सारूप्यतत्त्वाग्रहाविति ।** सादृश्यज्ञानव्यावर्त्तकधर्माग्रहा-वित्यर्थः । इह आरोप्यसादृश्यज्ञानस्यातिरिक्तस्यासत्त्वादनुभूयमानारोपे हेतुत्वाभावेऽ-प्यारोप्यस्मृतिद्वारा स्मर्यमाणारोपे हेतुत्वादिति भावः । **न त्वन्यदिति ।** न तु भावधर्मारोपं प्रति अभावभिन्नत्वमपीत्यर्थः । ननु तथाप्यभावे भावधर्मारोपः कुत्रापि न दृष्ट इत्यत आह **दृष्टश्चेति ।** दुःखभावाधिकरणेत्यर्थः । ( सुखत्वाभावानधिकरणेत्यर्थः ? )

**एतेन नीलिमाध्यारोपो व्याख्यातः । शुक्लभास्वरविरोधित्व-सारूप्येण तदारोपोपपत्तेः । न चैवं तदन्यारोपप्रसङ्गोऽपि, आरोपे सति निमित्तानुसरणात् । न तु निमित्तमस्तीत्यारोपः । अदृष्टादिकञ्चात्र नियामकमध्यवसेयम् । स्मर्यमाणञ्चैतद् रूपमारोप्यते रजतत्ववत्, न गृह्यमाणम् । अतो न सहकार्यपेक्षाचोद्यमाशङ्कनीयम्, धर्मिणि निरपेक्षत्वात् ।**

**तदन्येति** रक्तत्वाद्यारोपोऽपि स्यादित्यर्थः । शुक्लभास्वरविरोधित्वस्य-रक्तादेरपि सारूप्यतया तत्कारणस्यापि सत्त्वादिति भावः । **आरोपे सतीति** आरोपे सत्त्वेऽवश्यं निमित्तानुसरणम् । अवश्यम् आरोपकारणत्वमित्यर्थः । **न त्विति** यत्-किञ्चिदारोपनिमित्तसत्त्वेऽवश्यमारोप इत्यर्थः । तथा च यत्किञ्चित्कारणस्य कार्य-व्याप्यतया कथं सारूप्यज्ञानमात्रेणारोपोपपादनमिति भावः ।

ननु सादृश्यज्ञानमात्रेणापादने कथं नीलारोप एव भवति ? न रक्तत्वाद्यारोप इत्यत्र नियामकं पृच्छ्यत इत्यत आह **अदृष्टादिकञ्चेति ।**

ननु तथापि 'नीलं तमः' इति चाक्षुषी भ्रान्तिः कथं स्यादालोकादिसन्निकर्षा-भावेन नीलरूपस्य प्रत्यक्षाभावादित्यत आह **स्मर्यमाणञ्चेति । न गृह्यमाणम्** न तु साक्षात्क्रियमाणम् । **न सहकार्यपेक्षाचोद्यमिति** आलोकसन्निकर्षादिरूपचक्षुः-सहकारिणोऽपेक्षितत्वबोधकं वाक्यं न प्रयोगार्हमित्यर्थः । तथा च 'नीलं तम' इति स्मर्यमाणारोपः, न तु अनुभूयमानारोप इति भावः । इदमुपलक्षणम् । यत्र देशान्तरे आलोकसद्भावे नीलानुभवस्तत्रानुभूयमानारोपोऽपि सम्भवतीति ध्येयम् ।

ननु तथापि बहिरिन्द्रियजन्यज्ञानस्य मुख्यविशेष्यांशे लौकिकत्वनियमाद् विशेष्यांशे आलोकसन्निकर्षविरहे कथं तादृशी चाक्षुषीभ्रान्तिरित्यत आह **धर्मिणीति** धर्म्यंशे इत्यर्थः। **निरपेक्षत्वात्** आलोकसन्निकर्षस्यानपेक्षितत्वात्। आलोकाभावचाक्षुषे आलोकसन्निकर्षस्याहेतुत्वादिति भावः।

**यद्येवमारोपितं रूपं न तमो भाभावस्तु तदिति विनिगमनायां को हेतुरिति चेदुच्यते। एषा तावदनुभवस्थितिः 'तमो नीलं न तु नीलिमा तम' इति। न चारोपितेन वास्तवेन नीलिम्ना तमोबुद्धिव्यपदेशौ समानार्थौ, सहप्रयोगानुपपत्तेः। नीलीद्रव्योपरक्तेषु वस्त्रचर्मादिषु तमोबुद्धिव्यपदेशप्रसङ्गाच्च। अवश्यम्भावी च भाभावानुभवो निरालम्बनस्य भ्रमस्यानुपपत्तेः। न च तमःप्रत्ययो बाध्यते। नीलप्रत्ययस्तु बाध्यते इहेति प्रत्ययवत्। तर्हि यत्र गुणक्रियारोपस्तदन्धकारम्, न तु नीलिमेति सुष्ठूक्तं नवैवेति।**

कन्दलीकारमतमुत्थापयति **यद्येवमिति**। **आरोपितं रूपमिति**। आलोकाभावे (आरोपि) तं नीलरूपमित्यर्थः। **न तमः**। न तमःपदवाच्यम्। पूर्वं गृहादावारोपितं (इदानीं) नीलरूपं तम इत्याशङ्कत इति नाभेदः।

**केचित्तु** पूर्वं निराकृतमपि दूषणान्तरदानाय पुनराशङ्कते यद्येवमितीत्याहुः।

**एषा तावदिति**। तावच्छब्दस्तर्हीत्यर्थे। **अनुभवस्थितिः**। अनुभवस्य भ्रमत्वव्यवस्था। तव मते स्यादिति शेषः। **'तमो नीलं न तु नीलिमा तम'** इति। भ्रम इति शेषः। इतिशब्दश्च तमो नीलमित्यत्रापि सम्बद्ध्यते। तथा च तमो नीलमित्याकारकप्रत्ययो भ्रमस्तदुत्तरं नीलिमा तम इत्याकारकप्रत्ययो भ्रम इत्यर्थः। अस्मन्मते च द्वयमेव भ्रम इति भावः।

दूषणान्तरमाह **न चेति**। न वेत्यर्थः। **आरोपितेनेति**। **तमोबुद्धिव्यपदेशौ** तमोबुद्धिजनकरूपादौ। नीलं तम इत्यत्र नीलपदतमःपदरूपौ। आरोपितेन वास्तवेन वा नीलिम्ना समानार्थाविति योजना। आरोपितेन तदानीं स्मृतेन। वास्तवेन तदानीं साक्षात्कृतेन। **सह प्रयोगेति**। सामानाधिकरण्येनान्वयबुद्धिजनकत्वानुपपत्तेरित्यर्थः। 'घटो घट' इतिवत् पुनरुक्तत्वादिति भावः।

ननु तत्र तमःपदस्य तमःपदवाच्ये लक्षणेत्यस्वरसाद् दूषणान्तरमाह **नीलीद्रव्येति**। **तमोबुद्धिव्यपदेशेति**। 'वस्त्रं तमस्वी'त्यादितमःप्रकारकबुद्धिव्यवहारप्रसङ्गादित्यर्थः। दूषणान्तरमाह **अवश्यम्भावी चेति**। 'नीलं तम' इत्यनुभवोऽभावविशेष्यक आवश्यक इत्यर्थः। **निरालम्बनस्य** निर्विशेष्यकस्य। न च नीलरूपमेव तद्विशेष्यम्, स्वस्मिन्नेव स्वस्य प्रकारत्वादिति वाच्यम्, नीलरूपे नीलरूपाभाववत्तानिश्चयवतोऽपि तादृश-

भ्रमोदयादिति भावः । दूषणान्तरमाह **न चेति** । न वेत्यर्थः । **तमःप्रत्ययः** 'तमस्वि गृहम्' इत्याकारकः प्रत्ययः । **बाध्यते** अप्रमात्वेन कैश्चिदुपेयते । **नीलप्रत्ययस्तु बाध्यत इति** । 'नीलं तम' इति प्रत्यय एव भ्रमत्वेन स्वीक्रियते । 'इह समवेतं तम' इति प्रत्ययवदित्यर्थः । भवन्मते च 'तमस्वि गृहम्' इत्यपि प्रत्ययो भ्रमः स्यादिति भावः । **तर्हीति** । यत्र गुणक्रियारोपस्तस्यान्धकारत्वे चेत्यर्थः ।

**प्राभाकरास्तु** चाक्षुषतेजःसाक्षात्काराभावोऽन्धकारः तमसः काले तस्य सर्वसिद्धत्वादित्याहुः, तदसत्; तमःप्रतीतेश्चाक्षुषत्वानुपपत्तेरिति संक्षेपः ।

इति द्रव्यरहस्ये अन्धकारवादरहस्यम् ।

**गुणान् विभजते गुणा इति । रूपादयः सप्तदश कण्ठोक्ताः सूत्रकारेण । अभ्युपगमसिद्धान्तन्यायेनान्ये सप्त सिद्धगुणभावाः । तत्र तत्र तेषां व्युत्पादनात् । अनभ्युपगमे तेषां व्युत्पादनविरोधात् ।**

**रूपादय इति** । भाष्ये 'कण्ठोक्ता' इत्यस्य पाठाभावात् कण्ठपदं पूरयति **कण्ठोक्ता** इति । कण्ठोक्ताः स्वस्ववाचकशब्देनोक्ताः । यथाश्रुते कण्ठपदवैयर्थ्यापत्तेः । उक्तिमात्रस्यैव कण्ठाधीनत्वादव्यावर्त्तनादिति ध्येयम् । **अभ्युपगमेति** । सूत्रकृतो गुणत्वाभ्युपगमविषयत्वमभ्युपगमसिद्धान्तः । स एव न्यायो हेतुस्तेनेत्यर्थः । **अन्ये** अन्येऽपीत्यर्थः । ननु सूत्रकृतो गुणत्वाभ्युपगमविषयत्वमेवान्येषामसिद्धमित्यत आह **तत्र तत्रेति** । प्रकरण इति शेषः । नन्वेतावता धर्मिणः सूत्रकृदभ्युपगतत्वेऽपि तत्र गुणत्वं तस्य नाभ्युपगतमित्यत आह **अनभ्युपगम इति** । तेषां गुणत्वानभ्युपगमे इत्यर्थः । गुणप्रकरण इति शेषः ।

**तथा च विभागसूत्रं न्यूनम् । रूपरसगन्धस्पर्शाः संख्याः परिमाणानि, पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा इति तत् ।**

**न्यूनमिति** । निखिलविभाज्यतावच्छेदकाश्रयाबोधकमित्यर्थः । तदबोधकत्वे च न्यूनसंख्याव्यवच्छेदांशेऽप्रामाण्यापत्तिरिति भावः । सूत्रमेव दर्शयति **रूपेति** । **तत्** । सूत्रम् ।

**अत आहुः 'च' शब्दसमुच्चिताः सप्तेति । ननु अदृष्टशब्देन धर्माधर्मयोः संक्षेपेणाभिधानम्, न त्वदृष्टत्वं नाम सामान्यमस्ति, कार्यकारणलक्षणानां व्यवस्थापकानामभावात् । तेन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दा इत्युक्तं भवति । एवं कण्ठोक्त्या समुच्चयेन चैकतया चतुर्विंशतिगुणा व्यवहर्तव्याः । तथाविधबुद्धिविषयतया सारूप्येण, न तु संख्यायोगेन । यथा चैतत् तथा वक्ष्यामः ।**

**चशब्दसमुच्चिता इति**। 'च'शब्देनाविद्यमानार्थवाचकपदबोधित इत्यर्थः। 'च'शब्दसमुच्चितानां सप्तत्वमुपपादयितुमाह **अदृष्टशब्देनेति**। **संक्षेपेण** धर्मत्वाधर्मत्वरूप-प्रमेयमात्रवृत्तिधर्मप्रकारेण। **अभिधानम्** बोधः। नन्वेवमदृष्टपदे लक्षणापत्तिः, धर्माधर्मोभयसाधारणादृष्टत्वजातेरेव तत्प्रवृत्तिनिमित्तत्वादित्यत आह **नन्विति**।

**केचित्तु** नन्वेवमदृष्टत्वजातेर्विभाजकतावच्छेदकतावच्छेदकतया गुणत्वसाक्षाद्व्याप्यतया जातेर्गुणविभाजकोपाधित्वनियमभङ्ग इत्यत आह नन्वितीत्याहुः। **कार्यकारणेति**। कार्यत्वप्रकारकत्वप्रत्यक्षाणामित्यर्थः। **व्यवस्थापकानां** साधकानाम्। यत्तु लक्षणपदं व्यञ्जकधर्मपरम्। तथा च कार्यत्वप्रकारकत्वव्यञ्जकधर्माणां साधकानामभावादित्यर्थ इति। तन्न, भावना परिमाण……त्तरात्मगुणवृत्त्यतीन्द्रियजातिमत्त्वस्य व्यञ्जकत्वसम्भवात्।

न च भावकार्यसामान्यजनकतावच्छेदकतयाऽदृष्टत्वजातिसिद्धिरिति वाच्यम्, तादृशसामान्यकार्यकारणभावे मानाभावात्। अथ तथापि अदृष्टापूर्वादिपदशक्यतावच्छेदकतयाऽदृष्टत्वजातिसिद्धिः। धर्मत्वाधर्मत्वयोर्द्वयोस्तच्छक्यतावच्छेदकत्वे गौरवात्। न च पदशक्यतावच्छेदकत्वेनापि जातिसिद्धौ 'रिक्त'पदशक्यतावच्छेदकत्वेनापि गगनादिसाधारणचतुष्टयजाति (सिद्ध्या ?) पत्तिरिति वाच्यम्, भूतपदशक्यतावच्छेदकत्वेन पृथिव्यादिपञ्चकसाधारणसिद्धा....व्यापत्त्या (?) विनिगमनाविरहेण भूतत्वविभुत्वयोरेव जातित्वात्। न च तथापि हर्यादिपदशक्यतावच्छेदकत्वेनानुगतजातिसिद्ध्यापत्तिर्दुर्वारा नेति वाच्यम्, हर्य्यादिपदात् सिंहत्वविष्णुत्वादिप्रकारेणैव स्वारसिकस्य सर्वसिद्धत्वादिति चेन्न, अदृष्टादिपदादपि धर्मत्वाधर्मत्वप्रकारेणैव बोधस्य स्वारसिकतया सिद्धत्वादिति भावः। **इत्युक्तं भवतीति**। इति शाब्दज्ञानं भाष्योक्तिजन्यं भवतीत्यर्थः। इदमापाततः। तत्त्वज्ञानिनां विहितनिषिद्धाचरणेऽपि धर्माधर्मानुत्पादात्। धर्माधर्मोत्पत्तिं प्रति आद्यतत्त्वज्ञानप्रागभावो मिथ्यावासना वा हेतुः। तथा च तत्कार्यतावच्छेदकतयैव लाघवाददृष्टत्वजातिसिद्धिः।

न च विशेष्यतावच्छेदकविशेषणतावच्छेदकभेदेन मिथ्यावासनात्वं नानाविधमिति वाच्यम्, अदृष्टसामान्यजनकतावच्छेदकतया तत्त्वज्ञाननाश्यतावच्छेदकतया च मिथ्यावासनात्वस्य भावनात्वव्याप्यजातिविशेषस्य स्मृतिनाश्यतावच्छेदकजातिविरुद्धस्यासिद्धेः। मिथ्यावासनात्मकसमूहालम्बनस्य वासनापि न स्मृतिनाश्या स्मृतिनाश्यतावच्छेदकवैजात्यस्य तद्व्यावृत्तत्वाद्, अपि तु तत्त्वज्ञानस्यैव।

न चैवं तदवच्छिन्नोत्पत्तिं प्रत्येव किं नियामकमिति वाच्यम्, मिथ्याज्ञानमिथ्यावासनयोः समानविशेष्यकत्वसमानप्रकारकत्वाभ्यां सर्वसिद्धकार्यकारणभावस्यैव तदवच्छिन्नोत्पत्तिनियामकत्वात्। एतेन कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमात् सा जातिः कार्यतावच्छेदिकेति निरस्तम्। मिथ्याज्ञानकार्यतावच्छेदक एव तस्य घटकत्वात्। भावनात्वस्य व्यापकधर्मत्वेन तत्राघटकत्वात्।

यदि च **मुक्तिवादो**क्तरीत्या संस्कारसामान्यं प्रत्येव लाघवात् तत्त्वज्ञानं नाशकम्, तदा तु सामान्यतो वासनात्वेनैवादृष्टत्वावच्छिन्नं प्रति कारणता, न त्वतिरिक्तजात्यभ्युपगमः, तत्त्वज्ञानिनां संस्कारे मानाभावात् ।

**स्वतन्त्रास्तु** मुक्तिवादोक्तरीत्या मुक्ति प्रत्यदृष्टस्य प्रतिबन्धकत्वमावश्यकम् । तथा च मोक्षप्रतिबन्धकतावच्छेदकतयैव वाऽदृष्टत्वजातिसिद्धिरिति प्राहुः ।

न चादृष्टत्वस्य जातित्वे गुणविभाजकोपाधित्वापत्तिः, गुणत्वसाक्षाद्व्याप्यजातेर्गुणविभाजकोपाधित्वनियमादिति वाच्यम्, तन्नियमस्याप्रयोजकत्वात् । 'स्वतन्त्रेच्छस्य' इति न्यायेन ग्रन्थकर्तुरिच्छाया एव विभागनियामकत्वात् ।

न चादृष्टत्वस्य जातित्वे तस्य कार्यमात्रवृत्तितया कार्यतावच्छेदकत्वात् तदवच्छिन्नं प्रति किं कारणमिति वाच्यम्, तादृशनियमस्य सर्वत्र प्रामाणिकत्वे आत्मत्वेनैव तदवच्छिन्नं प्रति कारणत्वात् । तत्तद्विलक्षणादृष्टं प्रति या या विशिष्टहेतुता तदवच्छेदकतया तत एवातिप्रसङ्गभङ्गात् । विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्योपधायकत्वादिति दिक् ।

भाष्यस्यैवं शब्दार्थमाह **एवमिति** । **कण्ठोक्त्या** कण्ठोक्तेन । **समुच्चयेन** 'च'-शब्दसमुच्चितेन । **एकतया** मिलित्वा । 'गुणा' इत्यस्य व्याख्या व्यवहर्त्तव्येति । अन्यथा प्रथमं गुणा इति सत्त्वादेतस्य व्यर्थतापत्तेरिति भावः ।

ननु गुणपु कथं चतुर्विंशतित्वव्यवहारः । चतुर्विंशतित्वस्य संख्याविशेषरूपतया गुणत्वेन गुणेऽसम्भवादित्यत आह **यथा चैतदिति** । एतत् संख्याया गुणावृत्तित्वम् ।

**कर्माणि विभजते उत्क्षेपणेति । तत्रापि पञ्चैवेति स्पष्टार्थम् । विभागवचनादेव पञ्चसिद्धेः । आधिक्यमाशङ्क्याह गमनग्रहणादिति । कर्मपदार्थे चैतद् व्युत्पादनीयम् ।**

**स्पष्टार्थमिति** । न्यूनाधिकसंख्याव्यवच्छेदे तात्पर्यग्राहकमित्यर्थः । **सिद्धेरिति** न्यूनाधिकसंख्याव्यवच्छेदज्ञानादित्यर्थः । **आधिक्यमिति** । विभाज्यतावच्छेदकस्य कर्मत्वस्याधिकदेशवृत्तित्वमित्यर्थः । न च तथात्वे का क्षतिरिति वाच्यम् । तथा सति न्यूनसंख्याव्यवच्छेदांशे विभागस्याप्रामाण्यापत्तेरिति भावः । **गमनग्रहणादितीति** । उत्क्षेपणादिचतुष्टयभिन्नकर्मण एव गमनपदेन सूत्रकृता परिग्रहणादित्यर्थः ।

भाष्ये 'गतिविशेष एव' इति । गमनत्वव्याप्यजात्याक्रान्त एवेत्यर्थः । 'न तु जात्यन्तराणि' इति गमनत्वविरुद्धजात्याक्रान्तानि ।

मूले **कर्मपदार्थे चैतदिति** । कर्मपदार्थे कर्मपदार्थप्रतिपादकभाष्ये । एतद् भ्रमणादीनां गमनत्वं व्युत्पादनीयमिति ।

**सामान्यं विभजते सामान्यमिति। समानानां भावः, स्वाभाविकोऽनागन्तुको धर्मः सामान्यमित्यर्थः। तथा च धर्मिणां बहुत्वे धर्मस्य चानागन्तुकत्वे विवक्षिते नित्यमेकमनेकवृत्तिसामान्यमिति सामान्यलक्षणं सूचितं भवति। तद् द्विविधम्। द्वे विधे दर्शयति परमपरञ्च, समावेशे सति इति चकारार्थः।**

**विभजते इति**। भाष्यकार इति शेषः। सामान्यलक्षणानन्तरमेव विभागस्य युक्तत्वात् 'सामान्य'पदादेवेदं लक्षणं लभ्यम्। तमाह **समानानामिति**। समानानां भाव इति समुदायस्यैव विवरणम्। स्वाभाविकोऽनागन्तुको बहूनां धर्म इति।

**स्वाभाविकः** समवेतः। **अनागन्तुकः** अजन्यः। **अनागन्तुकत्वे** अजन्यत्वे। **विवक्षिते** सामान्यपदतात्पर्यविषयीभूते। **नित्यमेकमिति**। एकपदं स्वरूपकथनम्। नित्यत्वे सति अनेकसमवेतत्वमेव लक्षणम्। (अनेकत्वं संख्याविशेषः)। अनेकपृथक्त्व-संयोगविभागानां कार्यद्रव्यस्य च वारणाय सत्यन्तम्। नित्यगुणयोरन्त्यविशेषस्य च वारणाय विशेष्यदलम्। समवेतत्वसम्बन्धेन व्यक्तिमद् यावत्त्वं तदर्थः। नित्यद्रव्यादेरपि कालिकादिसम्बन्धेनानेकवृत्तित्वात्, अत्यन्ताभावादेरपि विशेषणताविशेषसम्बन्धेनानेकत्र वर्तमानत्वाच्च समवेतत्वपर्यन्तानुधावनम्। समवायस्तु न समवायेन वर्तते किन्तु तदतिरिक्तस्वरूपसम्बन्धेनेति न तत्रातिव्याप्तिः

**केचित्तु** 'एके मुख्यान्यकेवले' त्यनुशासनादेकपदस्यान्यपरत्वादेकं समवायभिन्न-मित्यर्थ इति न तत्रातिव्याप्तिरित्याहुः।

**अन्ये तु** एकमित्यस्य लक्षणान्तरञ्चेत्यर्थः। समवायिभिन्नत्वे सति अनेक-समवेतत्वम्। द्रव्यादिवारणाय सत्यन्तम्। समवायित्वं समवायानुयोगित्वम्। अभाव-वारणाय विशेष्यदलम्। अन्त्यविशेषवारणायानेकपदम्। समवायश्च न समवायेन वर्तत इत्याहुः।

**तच्च द्विविधमिति**। **द्विविधम्** विभाजकोपाधिद्वयवत्। विभाजकोपाधिद्वयं तद्वृत्तीति समुदितार्थः। **द्वे विधे**। विभाजकोपाधिद्वयम्। **परमपरञ्चेति**। परत्वं समवेतसामान्यापेक्षया व्यापकत्वम्। समवेतवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्व-मिति यावत्। प्रतियोगितावच्छेदकता च समवायसम्बन्धावच्छिन्ना ग्राह्या। अन्यथा सत्ताया अपि विषयितादिसम्बन्धेन तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वादसम्भ-वापत्तेः। अपरत्वञ्च समवेतसामान्यापेक्षया व्याप्यत्वम्। समवेतवन्निष्ठान्योन्याभाव-प्रतियोगितावच्छेदकत्वमिति यावत्। प्रतियोगितावच्छेदकता च समवायसम्बन्धा-वच्छिन्ना किञ्चिद्धर्मावच्छिन्ना च ग्राह्या। तेन सत्ताया अपि विषयित्वादिसम्बन्धेन

तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वेऽपि नातिव्याप्तिः। न वा द्रव्यगुणादावतिव्याप्तिः, जात्यखण्डोपाध्यतिरिक्तपदार्थस्य स्वरूपतोऽवच्छेदकत्वविरहादिति भावः।

ननु परत्वमभावत्वादावतिव्याप्तम्। समवेतवन्निष्ठान्योन्याभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगिताया अनाश्रयत्वादित्यत आह **समावेशे सतीति**। समवेतत्वे सतीत्यर्थः। एकव्यक्तिसमावेशे सतीति पाठस्तु प्रामादिकः, एकव्यक्तित्वस्य व्यर्थत्वात्। अत एव **प्रकाशे**ऽपि समावेशे सतीत्येव पाठो धृतः।

इत्थञ्च समवेतत्वे सति परत्वमपरत्वञ्च द्वयं विभाजकतावच्छेदकमिति भावः। अत्र समवेतत्वं समवायसम्बन्धावच्छिन्नकिञ्चिद्धर्मानवच्छिन्नावच्छेदकताश्रयत्वम्। तेन परत्वघटकप्रतियोगितावच्छेदकता किञ्चिद्धर्मानवच्छिन्नैव ग्राह्या। अन्यथा सत्ताया अपि विशिष्टसत्तात्वेन रूपेण तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वादसम्भवापत्तेः। तथा च द्रव्यगुणादावतिव्याप्तिः। जात्यखण्डोपाध्यतिरिक्तपदार्थस्य स्वरूपतोऽवच्छेदकत्वविरहादिति प्रत्युक्तम्।

**नैकव्यक्तिकं सामान्यमस्तीत्याकाशादौ वक्ष्यते। न अन्यूनानतिरिक्तव्यक्तिकमिति। बुद्धिरुपलब्धिर्ज्ञानमिति पर्यायव्यवस्थितौ। न मिथो व्यभिचारीति निष्क्रमणप्रवेशनादौ जातिसङ्करापत्तौ, न सामान्यादिवृत्तिकम् (व्यक्तिकं ?) अनवस्थानात्, लक्षणव्याघातात्, असम्बन्धाच्चेति। तस्मात् सामान्यं परस्परपरिहारस्थितिविरुद्धम्। अविरुद्धं तु परापरभावस्थितीति नियमः। परं व्यापकमपरं व्याप्यमित्यर्थः। प्रमाणं सूचयति अनुवृत्तिप्रत्ययकारणमिति। यदि सामान्यं न स्याद् भिन्नेष्वनुवृत्तिप्रत्ययो न स्यात्। द्रव्यगुणकर्मणामपि सामान्यद्वारैवानुवृत्तिप्रत्ययहेतुत्वात्।**

प्रसङ्गतो शिष्यव्युत्पादनार्थमाह **नैकव्यक्तिकमिति**। व्यक्तिद्वयासमवेतमित्यर्थः। **आकाशादौ**। आकाशादिग्रन्थे। **प्रकाशकृतस्तु** ननु नित्यमित्यादिलक्षणमेकव्यक्तिकजातावव्याप्तमित्यत आह नैकव्यक्तिकमितीत्युपोद्घातसङ्गत्या ग्रन्थमवतारयन्ति, तदसत्; तथा सति तदनन्तरमेवास्याभिधातुमुचितत्वात् (समवेतत्वेन ?) सन्दर्भविरोधापत्तेरिति ध्येयम्।

प्रसङ्गादन्यमप्याह **नान्यूनेति**। तत्तज्जात्यन्यूनानतिरिक्तव्यक्तिसमवेतो धर्मः, न तु तज्जातिभिन्न इत्यर्थः। **बुद्धीति**। बुद्ध्यादिपदत्रयाणां पर्यायव्यवस्थापकबुद्धिग्रन्थे इत्यर्थः। वक्ष्यत इति सर्वत्र सम्बद्ध्यते।

**न मिथो व्यभिचारीति**। एकाधिकरणवृत्तित्वे सति परस्परव्यभिचारिद्वयं न सामान्यमित्यर्थः। **निष्क्रमणेति**। निष्क्रमणत्वप्रवेशनत्वयोः परस्परव्यभिचारिजाति-

द्वयाद् । एकमेव नाडिकायां मनसः प्रवेशनकर्म तदेवापरनाडिकातस्तस्य निष्क्रमण-कर्मेति साङ्कर्यापत्तिरिति यत्र वक्तव्यस्तत्रेत्यर्थः । **न सामान्यादीति** । आदिपदाद् विशेषसमवाययोः परिग्रहः । न सामान्यवृत्तिविशेषवृत्तिसमवायवृत्तिसामान्यमित्यर्थः । यथासंख्येन त्रिषु हेतुत्रयमाह **अनवस्थानादि**त्यादि ।

यद्यपि सकलजातिवृत्तिजातित्वस्यैकत्वेन तत्र जात्यन्तराभावान्नानवस्था, तथापि अनवस्थानादित्यस्य आत्माश्रयापत्त्या जातित्वेऽनवस्थितेरित्यर्थः । **लक्षणव्याघातादिति** । ग्राहकप्रमाणवाधादित्यर्थः । विशेषसाधकप्रमाणेन जातिशून्यतयैव तस्य सिद्धेरिति भावः । **प्रकाशकृतस्तु** सामान्यवत्तद्भिन्नत्वे सति समवेतत्वरूपस्य विशेषाणां लक्षणस्य व्याघातापत्तेरित्यर्थ इत्याहुः । तदप्यसत् । गुणादिभिन्नत्वे सति एकव्यक्तिसमवेतत्वादेरेव लक्षणान्तरस्य सम्भवादिति ध्येयम् । **असम्बन्धादिति** । समवायाभावादित्यर्थः । **परस्परपरीहारस्थिती** तु अप्रथमान्तम् । परस्परपरीहारवति वर्तमानञ्चेद् विरुद्धमित्यर्थः । **परापरभावस्थितीति** । परापरभावविशिष्टमित्यर्थः ।

ननु परापरभावविशिष्टपरत्वापरत्वे च गुणविशेषौ कथं सामान्ये स्त इत्यत आह **परं व्यापकमिति** । यत्तु परमपरञ्चेति भाष्यस्यैवेदं व्याख्यानमिति तन्न; तथा सति परमपरञ्चेति भाष्योद्धरणत्वमेवास्याभिधातुमुचितत्वेन सन्दर्भविरोधापत्तेः । **'अनुवृत्तिप्रत्ययकारणमिति'** भाष्यम् । समवायसम्बन्धेन विभिन्नकालीनद्रव्यादिविशेष्यकप्रमितिविशेषणमित्यर्थः । प्रमाणसूचकत्वमेव विवृणोति मूले **यदीति** । **भिन्नेषु** । परस्पराधिकरणक्षणावृत्तिद्रव्यादिव्यक्तिषु । **अनुवृत्तीति** । समवायसम्बन्धेनैकधर्मप्रकारकप्रमा न स्यादित्यर्थः ।

यद्यप्यत्र वैयधिकरण्यं तथापि अयं गौर्यदि तद्गोसमवेतधर्मसमवायी न स्यात्तदा समवायसम्बन्धेन तद्गोसमवेतधर्मप्रकारकप्रमाविषयो न स्यात् । भवति च समवायसम्बन्धेन तद्गोसमवेतधर्मप्रकारकप्रमाविषयः । अतस्तद्गोसमवेतधर्मसमवायीति साधनीयमिति भावः ।

नन्वेतावता विद्यमानद्रव्यादिव्यक्तौ चिरातीतव्यक्तिसमवेतधर्मसमवायित्वसिद्धावपि न सामान्यसिद्धिरित्यत आह **द्रव्यगुणकर्मणामिति** । परस्पराधिकरणक्षणावृत्तिद्रव्यगुणकर्मव्यक्तीनामित्यर्थः । **सामान्यद्वारेणैवेति** । समवायसम्बन्धेन सामान्यरूपसामान्यधर्मवत्त्वेनैवेत्यर्थः । **अनुवृत्तिप्रत्ययहेतुत्वादिति** । समवायसम्बन्धेन परस्परसमवेतधर्मप्रकारकप्रमाहेतुत्वसम्भवादित्यर्थः । हेतुत्वं विशेष्यत्वम् । धर्मान्तरस्य परस्पराधिकरणक्षणावृत्तिव्यक्तिद्वयसमवेतत्वासम्भवादिति भावः ।

**परमुदाहरति तत्रेति । परं सत्ता । सत्तासामान्यं परमिति व्यवहर्तव्यम् । कुतः ? महाविषयत्वात् । द्रव्यत्वादितोऽधिकविषयत्वात् ।**

**एवमन्यत्रापि । यदल्पविषयापेक्षयाधिकविषयं तत्तदपेक्षया परमिति व्यवहर्तव्यं यथा सत्तेत्यर्थः । सा च सत्ता सामान्यमेव, न तु द्रव्यत्वादिवद् विशेषोऽपि । कुतोऽनुवृत्तेरेवेति ।**

**तत्रेति** । 'तत्र परं सत्ते'ति भाष्यग्रन्थः । **तत्र** सामान्येषु मध्ये । **सत्ता** सामान्यम् । समवेतसामान्यमपेक्ष्य परमित्यर्थः ।

ननु समवेतसामान्यमपेक्ष्य परत्वं समवेतवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वम् । तथा च महाविषयत्वादिति हेतोः साध्यावैशिष्ट्यमित्यतो व्याचष्टे मूले **सत्तासामान्यमिति । परमिति व्यवहर्तव्यम्** । समवेतसामान्यमपेक्ष्य परमित्यर्थः ।

ननु समवेतत्वप्रकारकव्यवहारः प्रमा समवेतवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वप्रकारकप्रमाविषय इति यावत् । द्रव्यत्वादिपदेन द्रव्यत्वेतरसकलसमवेतपरिग्रहः । अधिकविषयत्वं व्यापकत्वम् । द्रव्यत्वादेर्व्याप्यत्वं समवेतत्वेन । तथा च समवेतवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वादिति हेतुः फलितः । अनेन हेतुना समवेतसामान्यमपेक्ष्य परत्वप्रकारकव्यवहारविषयत्वसाधारणोपयुक्तं नियमं दर्शयति **एवमन्यत्रेति । यदल्पविषयापेक्षया** यद्व्याप्यापेक्षया । स्वव्याप्यत्वेनाभिधानं स्वरूपकथनमात्रम्, न तु व्याप्तिघटकम् । **अधिकविषयम्** । व्यापकम् । **परमिति व्यवहर्तव्यम्** । परत्वप्रकारकव्यवहारविषयः । **यथा सत्तेति** । द्रव्यत्वापेक्षया पृथिवीत्वाद्यपेक्षया वा परव्यवहारविषय इति शेषः । **इत्यर्थः** । इति यत्तद्भ्यां सामान्यतो नियम इति भावः ।

**अन्ये तु** परं सत्तेति भाष्यम् । सत्तासामान्यं समवेतमात्रमपेक्ष्य परम् । समवेतवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकमिति यावत् । कुतः ? महाविषयत्वात् । द्रव्यत्वगुणत्वकर्मत्वेभ्योऽधिकविषयत्वात् । द्रव्यभिन्नसमवेतत्वे, गुणभिन्नसमवेतत्वे च सति कर्मभिन्नसमवेतत्वादिति यावत् । अतो न साध्यावैशिष्ट्यं व्यतिरेकेण तु द्रव्यत्वादिक दृष्टान्त इति प्राहुः ।

'स चानुवृत्तेरेव हेतुत्वात् सामान्यमेव'इति भाष्यमधृत्वैव योजयति **सा चेति । सामान्यमेव** । सामान्यपदवाच्यैव । **विशेषोऽपि** । विशेषपदवाच्योऽपि । **अनुवृत्तेरेवेतीति** । स्वाश्रयविशेष्यकसमवायसंसर्गकप्रत्यक्षस्यैवेत्यर्थः । एवकारात् स्वाश्रयव्यावर्तकत्वस्य न व्यवच्छेदः । किन्तु जातिमत्प्रतियोगिकव्यावृत्तिबोधकत्वस्य व्यवच्छेदः ।

**ननु सामान्यादिभ्यो व्यावर्तमानापि सत्ता यदि स्वाश्रयं ततो न व्यावर्तयेत्, द्रव्यत्वादिकमपि न व्यावर्तयेत्, अविशेषात् । न सत्ताया व्यक्तिस्वरूपमात्रव्यङ्ग्यतया व्यञ्जकनियमाभावात् । बाधकात्तु सामान्यादौ**

**तत्त्यागः । सामान्यान्तरस्य हि संस्थान-गुण-कार्य-कारणादिव्यङ्ग्यतया तेषाञ्चानियतत्वाद् न सर्वत्राभिव्यक्तिः ।**

तथा च जातिमत्प्रतियोगिकव्यावृत्तिबोधकतया सत्ता सामान्यमेवेति भाष्यार्थ इत्यभिप्रायेग समाधत्ते **सत्ताया इति । व्यक्तिस्वरूपमात्रव्यङ्ग्यतयेति ।** निखिल-जातिमद्व्यक्तिष्वेत्र साक्षात्कृततयेत्यर्थः । अतीन्द्रियव्यावृत्तबोधकतया अतीन्द्रियेऽपि धर्म्यंशेऽलौकिकस्य सत्तांशे लौकिकस्य साक्षात्कारे च सत्त्वादिति भावः । **व्यञ्जक-नियमाभावादिति ।** सकलजातिमद्वृत्तित्वादित्यर्थः ।

नन्वेवं सामान्यादिव्यञ्जकत्वमपि तत्रास्तु सामान्यादावपि 'सत्सत्' इति साक्षात्कारसत्त्वादित्यत आह **बाधकादिति ।** असमवायित्वरूपबाधकादित्यर्थः । **सामा-न्यान्तरस्य हीति ।** सत्तेतरसामान्यस्य चेत्यर्थः । संस्थानविशेषो गोत्वादेर्व्यञ्जकः, गन्धादिगुणविशेषः पृथिवीत्वादेर्व्यञ्जकः, विलक्षणसंयोगादिरूपं कार्यं समवायिकारण-तादिसम्बन्धेन कर्मत्वादिव्यञ्जकम् । ब्राह्मणब्राह्मण्यादिरूपं कारणञ्च ब्राह्मणत्वादि-व्यञ्जकमिति भावः । **तेषाञ्चेति ।** संस्थानविशेषादीनाञ्चेत्यर्थः । **अनियतत्वात् ।** क्वाचि-त्कत्वात् । **न सर्वत्राभिव्यक्तिरिति ।** न सर्वत्र जातिमति साक्षात्कार इत्यर्थः । नातः सकलजातिमद्वृत्तित्वमिति शेषः । तथा च द्रव्यत्वादेरपरसामान्यजातिमत्प्रतियोगिक-व्यावृत्तिबोधकत्वेऽपि सत्ताया न तथात्वम् । निखिलजातिमत्येव तत्सत्त्वेन व्यभि-चारितया तदबोधकत्वादिति भावः ।

**तर्हि वस्तुस्वरूपमेव सत्तास्तु । न च गोत्वाद्यभावेऽपि यदि गौरि-त्यादिप्रत्ययानुवृत्तिः स्वरूपतः स्यात्, तदा अश्वादावपि स्यादितिवत् सत्तया विनापि सत्सदिति प्रत्ययानुवृत्तिः स्वरूपतः स्यात्, सर्वत्र स्यादित्य-निष्टापत्तिरिति वाच्यम् । तदनुवृत्तेस्तदभावेऽपीष्टत्वादिति, न, प्रत्ययानु-वृत्तेर्निमित्तमन्तरेणानुपपत्तेः । न च विशेषा एव तन्निमित्तं लक्षणमात्रं वा । सामान्यमात्रोच्छेदप्रसङ्गात् । न च विशेषान् लक्षणं वा विहाय क्वचित् सामान्याभिव्यक्तिरस्ति । कथं तर्हि सामान्यादौ तत् सदिति प्रत्ययः ? सत्तैकार्थसमवायात् । गुणादिषु संख्यादिप्रत्ययवत् । अभावेऽपि तर्हि स्यादिति चेन्न । तस्य सद्विरुद्धतयैव प्रतीतेरिति ।**

शङ्कते तर्हीत्यादिना प्रतीतेरितीत्यन्तेन । **तर्हि ।** सत्ता यदि निखिलजातिमद्-वृत्तिस्तदा । **वस्तुस्वरूपमेव । वस्तुत्वमेव । सत्तास्तु ।** सच्छब्दप्रवृत्तिनिमित्तमस्तु । किं जातेस्तथात्वेन । वस्तुत्वञ्च ज्ञानविषयत्वमिति भावः ।

ननु यथा गवादिपदशक्यत्वस्य गोमात्रावृत्तिधर्मावच्छिन्नत्वे गवादिभिन्नवृत्ति-त्वापत्तिस्तथा सच्छब्दशक्यत्वस्यापि जातिमन्मात्रावृत्तिधर्मावच्छिन्नत्वे जातिमद्भिन्न-

वृत्तित्वापत्तिरित्याशङ्कते **न चेति**। गौरित्यादिप्रत्ययानुवृत्तिर्यदि गोत्वाद्यभावेऽपि च स्वरूपतः स्यात्तदाऽश्वादावपि स्यादिति योजना। **गौरित्यादिप्रत्ययानुवृत्तिः**। गवादिपदशक्तिः। गौरित्यादिप्रत्ययानुवृत्तेरुत्पत्तिर्यस्मादिति व्युत्पत्तेः। **गोत्वाद्यभावेऽपि**। स्वरूपतो गोमात्रवृत्त्यादिभिन्नेऽपि धर्मे। अवच्छिन्नत्वं सप्तम्यर्थः। **अश्वादावपि**। गवादिभिन्नवृत्तिरपि। **इतिवत् सत्तया विनापीति**। सत्सदिति प्रत्ययानुवृत्तिर्यदि सत्तया विनापि स्वरूपतः स्यात् सर्वत्र स्यादिति योजना। **सत्सदिति प्रत्ययानुवृत्तिः** सच्छब्दशक्तिः। पूर्ववद् व्युत्पत्तेः। **सत्तया विनापि**। स्वरूपतः सत्ताभिन्नत्वेनापि धर्मेण। सत्तापदं जातिमन्मात्रवृत्तिपरम्। तेन सत्ताया अस्तित्वेऽपि न क्षतिः। अवच्छिन्नत्वं तृतीयार्थः। **सर्वत्र स्यात्**। जातिमद्भिन्नवृत्तिरपि स्यात्। **तदनुवृत्तेरिति**। सदृशोक्तेरित्यर्थः। **तदभावेऽपि**। जातिमद्भिन्नत्वेऽपि। अभावस्यान्योन्याभावपरत्वात्। **इष्टत्वादिति**। द्वयोरपीष्टत्वादित्यर्थः। 'सामान्यं सत्', 'विशेषः सन्', समवायः सन्' इत्यादिव्यवहारस्य सर्वसिद्धत्वादिति भावः। **प्रत्ययानुवृत्तेरिति**। 'द्रव्यं सत्' 'गुणः सन्' 'कर्म सत्' इत्यादिप्रतीतेर्द्रव्यत्वादिविशिष्टे समवायसम्बन्धेन यत्किञ्चिद्धर्मप्रकारितायाः सर्वानुभवसिद्धाया इत्यर्थः। **निमित्तमन्तरेण**। समवायसम्बन्धेन एकविशेषणमन्तरेण। **न च विशेषा एवेति**। पृथिवीत्वादिरूपविशेषजातय एवेत्यर्थः। **विशेषान् लक्षणं वा विहायेति**। जातिलक्षणयोरन्यतरद् विहायेत्यर्थः। **सत्तैकार्थेति**। समवायेऽपि समवायेनैव वर्त्तत इति न तत्राप्ययं सम्बन्धो बाधित इति भावः। भ्रान्तः शङ्कते **अभावेऽपीति**। एकार्थसमवायोऽपि यदि सम्बन्धस्तदाऽभावेऽपि तेन सम्बन्धेन सत्तावत्ताप्रत्ययः स्यादित्यर्थः। भ्रमं निराकृत्य समाधत्ते **तस्येति**। **सद्विरुद्धतयैव प्रतीतेरिति**। एकार्थसमवायसम्बन्धेन सत्ताऽभाववत्तयैव प्रमितेरित्यर्थः। तथा च तेन सम्बन्धेन सत्तायास्तत्र बाधितत्वान्न तथाप्रत्ययः।

न च तथापि स्वसमवायिविशेषणतासम्बन्धेन तत्र सत्तावत्ताप्रतीतिर्दुर्वारैवेति वाच्यम्, तेन सम्बन्धेन सत्ताया बाधितत्वान्न तथा भ्रमः। दोषस्य फलबलकल्प्यतया सम्बन्धान्तरस्य सतोऽप्यदोषत्वादिति प्रघट्टकार्थ इत्याशङ्कचम्। इत्थञ्च 'द्रव्यं सद्', 'गुणः सन्', इत्यादिप्रतीतेः समवायसम्बन्धेनैकधर्मप्रकारकत्वस्यानुभवसिद्धत्वाद् द्रव्यादित्रितयसाधारणैकजातिसिद्धिरित्याचार्यनिगर्वः पुनरस्मत्कृत**सिद्धान्तरहस्ये**ऽनुसन्धेयः।

**द्रव्यत्वाद्यपरं सत्तापेक्षयाल्पविषयत्वात्। तच्चेति चस्त्वर्थः। अपिः समुच्चये। अनुवृत्तेर्हेतुत्वादिति हेतुमननुकर्षति। सत्तायामन्त्येषु च एकैकनिमित्तवशादेकैका संज्ञा। इह तु निमित्तद्वयसमावेशात् संज्ञाद्वयसमावेश इत्यर्थः। एतद्व्युत्पादनप्रयोजनं साधर्म्यादौ भविष्यतीति।**

द्रव्यत्वाद्यपरमल्पविषयत्वादिति भाष्यम्। तत्राल्पविषयत्वं यदि समवेतसामान्याव्यापकत्वमिति, यावत्साध्यावैशिष्ट्यं समवेतसामान्याव्यापकत्वस्यैवापरस्वरूपत्वादतस्तद्भाष्यमधृत्वैव व्याचष्टे **द्रव्यत्वाद्यपरमिति। अल्पविषयत्वात्।** अव्यापकत्वात् सन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति यावत्। सत्ताया विशेषत्वाभावेन चकारस्य समुच्चायकत्वासम्भवादाह **चस्त्वर्थ इति।** व्यवच्छेदार्थः। विशेषसंज्ञकत्वे हेत्वभिधानेऽपि सामान्यसंज्ञकत्वे हेत्वनभिधानादाह **अपिरिति।** अनुवृत्तिहेतुत्वञ्च नानाधर्मिविशेष्यकसमवायसंसर्गकप्रमितिप्रकारत्वम्। एतच्च सामान्यसंज्ञाप्रवृत्तिनिमित्तम्। व्यावृत्तिहेतुत्वञ्च जातिमत्प्रतियोगिकभेदव्याप्यत्वम्। तच्च विशेषसंज्ञाप्रवृत्तिनिमित्तमिति भावः। **एकैकनिमित्तसमावेशादिति।** एकैकसंज्ञाप्रवृत्तिनिमित्ताश्रयत्वादित्यर्थः।

**विशेषानाह नित्येति। बहुवचनेनानन्त्यं विवक्षितम्। के ते? अन्त्याः। अन्ते अवसाने भवन्ति सन्तीति यावत्। येभ्योऽपरे विशेषा न सन्तीत्यर्थः। सामान्यरूपेभ्यो विशेषेभ्योऽपरे गुणादयो विशेषाः सन्ति। एभ्यस्तु नापरे विशेषाः। किन्त्वेष्वेव वैशिष्ट्यं समाप्यते। क्व ते वर्तन्त इत्यत उक्तं नित्येति। अयमर्थः, अनित्यद्रव्येषु तावदाश्रयादिभिरेव विशिष्टबुद्धिरुपपन्नेति ततोऽधिकविशेषे प्रमाणाभावः। नित्येषु तु द्रव्येषु आश्रयरहितेषु समानजातीयेषु समानगुणकर्मसु च भवितव्यं व्यावर्तकधर्मेण व्यावृत्तत्वात्।**

इह तु द्रव्यत्वाद्यपरसामान्येषु विशेषपदस्य सामान्यरूपविशेषपरत्वभ्रमनिरासायाह **विशेषानाहेति।** विशेषमात्रसंज्ञकानाहेत्यर्थः। **आनन्त्यं** बहुत्वम्। **विवक्षितं** बोधितम्। तथा च विशेषमात्रसंज्ञका बहुत्वयोगिनो न तु सामान्यवदेक इति भाष्यार्थ इति भावः। **के ते।** के विशेषमात्रसंज्ञकाः। भवन्तीत्यस्य जायन्त इत्यर्थे विशेषाणां न तत्सम्भवः, तेषां नित्यत्वादित्यतो व्याचष्टे **सन्तीति।** अवसाने सन्तीत्यस्यैवार्थं स्पष्टयति **येभ्य** इति। **विशेषा** न्यूनवृत्तयः। **अपरे** इति स्वरूपकथनम्। एवमग्रेऽपि। एतदेव स्पष्टयति **सामान्यरूपेभ्य** इति। **विशेषेभ्यः** विशेषसंज्ञकेभ्य इत्यर्थः। **विशेषा** न्यूनवृत्तयः। **एभ्यस्तु** विशेषसंज्ञकेभ्यस्तु। **नापरे विशेषाः।** सन्तीत्यनुषज्यते। सिद्ध्यसिद्धिव्याघातभयादाह **किन्त्विति। एष्वेवेति।** द्रव्यवृत्तिनिश्चयसामान्येष्विति (?) शेषः। तेनाद्विष्ठगुणकर्मणोर्जात्यन्तराव्यापकगुणकर्मावृत्तिजातेश्च व्युदासः। **वैशिष्ट्यं** न्यूनवृत्तिधर्मकत्वम्। **समाप्यते** भेदप्रतियोगितावच्छेदकं भवति। तथा च न्यूनवृत्तिधर्मके यद् यदन्यत्वम् अन्त्यत्वम्। न्यूनवृत्तिधर्मकत्वञ्च स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकस्वसमवायिसमवेतधर्मकत्वमिति भावः।

नित्यद्रव्यवृत्तित्वस्य लक्षणघटकत्वे नित्यत्वविशेषणवैयर्थ्यमत आश्रयकथनपरतया व्याचष्टे **क्वेति।** ननु व्यावृत्तिबलान्नित्यद्रव्य इव तद्बलाद् अनित्यद्रव्येष्वपि कुतो

न विशेषा इत्यत आह **आश्रयादिभिरेवेति**। समवेतत्वादिसम्बन्धेनेति शेषः। आदिपदाद् विभिन्नप्रागभावविभिन्नध्वंसपरिग्रहः। **विशिष्टबुद्धिः** व्यावृत्तबुद्धिः। **ततोऽधिकविशेष इति** आश्रयादिभिन्नव्यावर्तकधर्मे प्रमाणाभाव इत्यर्थः। **आश्रयरहितेषु**। **भवितव्यं व्यावर्तकधर्मेणेति**। व्यावर्तकधर्मेणावश्यं स्थातव्यमित्यर्थः। **व्यावृत्तत्वादिति** परस्परविभिन्नत्वादित्यर्थः। भेदस्य वैधर्म्यव्याप्तत्वादिति भावः।

**न चैवं गुणादिष्वपि तत्कल्पनावकाशः। आश्रयविशेषेणैव तद्व्यावृत्त्युपपत्तेरिति प्रमाणसूचनम्। तथा च वक्ष्यते। ननु सामान्यान्येव कानिचित् तथा भविष्यन्ति गुणा वा किं पदार्थान्तरकल्पनयेत्यत आह ते चेति। चस्त्वर्थः। अयमर्थः। ते पुनर्यदि एकैकव्यक्तिवृत्तयः कथं सामान्यरूपाः। अनेकव्यक्तिवृत्तित्वेन कथमत्यन्तव्यावृत्तिबुद्धिहेतवः। गुणा अपि भवन्तो यदि सामान्यवन्तः स्युस्तथाप्यत्यन्तव्यावृत्तिबुद्धिहेतुत्वं व्याहन्येत। ततो निःसामान्यास्तथा च गुणत्वव्याघातः। तस्मादन्त्यव्यपदेशाद् व्यावृत्तिबुद्धेरेव हेतुत्वाद् विशेषा एव विशेषा नान्यत्रान्तर्भूता इति एकद्रव्यवृत्तयः स्वरूपसन्त इति लक्षणं सूचितमिति। एवञ्च सति निःसामान्यत्वेऽपि विशेषोऽयमित्यनुगतव्यवहार उपाधेर्लक्षणञ्चोपाधिरवसेय इति।**

'तथा च वक्ष्यते' इति। प्रमाणञ्च विशेषभाष्य एव वक्ष्यत इत्यर्थः। तच्च-अयं परमाणुः परमाण्वन्तरसमवेतत्वशून्यधर्मसमवायी नित्यद्रव्यत्वे सति तत्परमाणुभिन्नत्वाद् आत्मादिवद् इत्यनुमानमिति भावः। अत्र द्रव्यत्वादिमादाय सिद्धसाधनवारणाय समवेतत्वान्तं साध्यविशेषणम्। एकत्वादिमादाय सिद्धसाधनवारणाय समवेतत्वशून्यत्वं धर्मविशेषणम्। अभावमादाय सिद्धसाधनवारणाय समवायित्वप्रवेशः। तत्परमाणुजन्यद्व्यणुकादौ व्यभिचारवारणाय सत्यन्तं ध्येयम्।

अत्र **स्वतन्त्राः**—विशेषो न भावान्तरं भानाभावात्। न च सिद्ध्यसिद्धिव्याघातः। द्रव्यगुणकर्मसामान्यसमवायभिन्नो न भावः, तत्त्वेनाप्रमितत्वादित्यस्य विवक्षितत्वात्। पक्षतावच्छेदकावच्छेदेन च साध्यसिद्धिरुद्देश्या। अतो नाभावे सिद्धसाधनावकाशः।

न चोक्तानुमानमेव प्रमाणमिति वाच्यम्, अप्रयोजकत्वात्। तद्भेदस्य तदवृत्तिधर्मव्याप्यत्वेऽपि नित्यद्रव्यत्वे सति द्रव्यभेदस्य तद्द्रव्यासमवेतत्वशून्यधर्मसमवायित्वव्याप्यत्वे मानाभावात्। न च योगिनां प्रत्यक्षविषयतया प्रत्यक्षमेव तत्र मानमिति वाच्यम्, योगिनां तद्विषयकप्रत्यक्ष एव मानाभावादिति प्राहुः।

**ते पुनर्यदीति**। सामान्याव्यवच्छेदे। **एकैकव्यक्तिवृत्तयः** एकमात्रव्यक्तिवृत्तयः। **अत्यन्तव्यावृत्तिबुद्धिहेतवः** प्रत्येकेष्वेवायमस्माद्व्यावृत्त इति बुद्धिहेतव इत्यर्थः।

व्यभिचारित्वादिति भावः। **तथापीति**। विशेषजातीयस्य सकलनित्यद्रव्यवृत्तित्वेन व्यभिचारापत्तेरित्यभिमानः। इदमापाततः। विशेषाणां सामान्यवत्त्वेऽपि तत्तद्-व्यक्तिव्यावृत्तिबुद्धिहेतुत्वसम्भवात्। अन्यथा तत्र जातिविरहेऽपि वक्ष्यमाणलक्षणात्म-कोपाधिसत्त्वेन अत्यन्तव्यावृत्तिहेतुत्वासम्भवतादवस्थ्यप्रसङ्गात्। वस्तुतस्तु माना-भावादेव न तस्य सामान्यवत्त्वमित्यवबोध्यम्।

**तथा चेति**। सामान्यवतो निर्गुण-कर्मण्यस्यैव गुणत्वादिति भावः। **अन्त्यव्यपदे-शादिति**। व्यावृत्तबुद्धेरेव हेतुत्वादित्यहेतुः। **विशेषाः**। सामान्यसंज्ञकभिन्ना विशेष-संज्ञकाः। द्रव्यसमवेतत्वे सत्तावद्भिन्नत्वे च सति अन्त्यत्वं विशेषत्वमिति भाष्य-स्वरससिद्धं लक्षणं गौरवादुपेक्ष्याह **इतीति**। अत इत्यर्थः। **एकद्रव्यवृत्तय** इति। द्रव्यद्वयावृत्तित्वे सति द्रव्यवृत्तय इत्यर्थः। वृत्तिः समवायः। **स्वरूपसन्त** इति। सत्तावद्भिन्न इत्यर्थः। तथा च सत्तावद्भिन्नत्वे द्रव्यद्वयासमवेतत्वे च सति द्रव्य-समवेतत्वं लक्षणम्। अत्राद्विष्ठगुण-कर्मणोरतिव्याप्तिवारणाय प्रथमं सप्तम्यन्तम्, द्रव्यत्वादावतिव्याप्तिवारणाय द्वितीयं सप्तम्यन्तम्, गुणकर्ममात्रवृत्तिजातावतिव्याप्ति-वारणार्थं विशेष्यदलमिति ध्येयम्। नन्वाकाशत्वमुपाधिरित्यत आह **लक्षणञ्चेति**। उक्तं लक्षणञ्चेत्यर्थः।

**समवायस्यैकत्वाद् विभागो न सम्भवतीति लक्षणमाह अयुत-सिद्धानामिति। अयुताः प्राप्ताश्च सिद्धा इति अयुतसिद्धाः। प्राप्ता एव सन्ति न वियुक्ता इति यावत्। तेषां सम्बन्धः प्राप्तिलक्षणः समवायः। तेन संयोगसम्बन्धो व्यवच्छिन्नः। तस्याप्राप्तिपूर्वकत्वात्। तथा च नित्यप्राप्तिः समवाय इति लक्षणं सूचितम्। अजसंयोगाभावो वक्ष्यते समवायस्य नित्यत्वञ्च। प्राप्तिपदेनैव वाच्यवाचकादिभावलक्षणः सम्बन्धो न प्रसज्यते। एतदेव स्पष्टयति आधार्याधारभूतानामिति। स्वभावादाधार्याधारणं न त्वागन्तुकेन धर्मेणेत्यर्थः। तत्र प्रमाणमाह इह प्रत्ययहेतुरिति। इह तन्तुषु पट इह पटे शुक्लत्वम्, इह गवि गोत्वमित्यादयः प्रत्ययाः सम्बन्धमन्तरेणानु-पपन्नास्तं व्यवस्थापयन्तीत्यर्थः।**

**समवायस्यैकत्वादिति**। समवायस्य समवायनिष्ठभेदप्रतियोगित्वाभावादित्यर्थः। **न सम्भवति**। सामान्यरूपेणावगतस्य तन्न्यूनवृत्तिधर्मेणाभिधानमेव हि विभाग इति भावः। **लक्षणमाह** लक्षणमेवाह। एवकाराद् विभागव्यवहारव्यवच्छेदः। (स्वधत्ते प्राप्त्ये ?) अत्राप्युभयवाचकत्वेऽपि प्राप्तिरेवार्थ इत्यभिप्रायेण व्याचष्टे **अयुता इति**। अस्यैवार्थं स्पष्टयति **प्राप्ता एवेति**। कालदिङ्निरूपितविशेषणताव्यतिरिक्तसम्बन्धे-नाधाराधेयभावापन्ना इत्यर्थः। **न वियुक्ता इति**। न तु कदापि तदनापन्नास्तीत्यर्थः।

ते च न दिक्त्वतदेकत्वादय इति भावः। **सम्बन्धः** परस्परसम्बन्धः। परम्परासम्बन्धवारणाय आह **प्राप्तिलक्षण इति।** कालदिङ्निरूपितविशेषणत्वानवच्छिन्नः। कालिकसम्बन्धे, दिक्त्वतदेकत्वाद्योर्दैशिकविशेषणत्वे चातिव्याप्तिवारणायानवच्छिन्नान्तमाधाराधेयभावे विशेषणम्। आधाराधेयभावनियामक इत्यर्थः। कालतदेकत्वाद्योरव्याप्यत्वादिसम्बन्धोऽपि नाधाराधेयभावनियामकः। न चैवं घटतद्रूपाद्योः समवायेऽव्याप्तिः। आधाराधेयभावानापन्नयोरपि कदाचिद् विद्यमानत्वादिति वाच्यम्, समवायस्यैकत्वेन घटतद्रूपाद्योः समवायस्यैकत्वात् तदेकत्वाद्योरपि सम्बन्धादिति भावः। अर्थतः सिद्धविशेषणप्रयोजनमाह **तेनेति।** अर्थतः सिद्धविशेषणोपादानेनेत्यर्थः। **अप्राप्तिपूर्वकत्वादिति।** स्वोत्पत्तिपूर्वकाले कालदिङ्निरूपितविशेषणताव्यतिरिक्तसम्बन्धावच्छिन्नाधाराधेयभावशून्ययोरेव वर्तमानत्वादित्यर्थः। युगपदुत्पन्नविनष्टयोर्घटपटयोः संयोगेऽतिव्याप्तिवारणायावच्छिन्नान्ताधाराधेयविशेषणं लाघवादित्याह **तथा च नित्यप्राप्तिरिति।** कालदिङ्निरूपितविशेषणत्वानवच्छिन्नसन्निरूपिताधारतानियामकः सम्बन्धः। सन्निरूपितेत्युपादानाद् अभावीयविशेषणताख्यसम्बन्धे नातिव्याप्तिः। द्रव्यगुणकर्मणामभावीयविशेषणताख्यसम्बन्धेन वृत्तेरनभ्युपगमादिति भावः।

ननु विभुनोर्मिथः संयोगेऽतिव्याप्तिस्तस्याप्यजन्यत्वेन नित्यत्वात्, समवायेऽसम्भवश्च तस्य नित्यत्वाभावादित्यत आह **अजेति। नित्यत्वञ्च** नित्यत्वाक्षतिर्वक्ष्यत इति सम्बध्यते। **प्राप्तिपदेनैव चेति। स्पष्टयति** स्पष्टीकर्तुं वदति। **स्वभावाद् इति।** अजन्येन सम्बन्धेनेत्यर्थः। **आगन्तुकेन धर्मेण।** जन्येन सम्बन्धेन। इह प्रत्ययहेतुत्वस्य लक्षणघटकत्वभ्रमनिरासायाह **प्रमाणमिति।** नन्विह तन्तुषु इत्यादि प्रत्ययहेतुत्वं समवाये बाधितम्। वैशेषिकनये समवायस्यातीन्द्रियतया तादृशविशिष्टप्रत्यक्षं प्रति तस्य हेतुत्वासम्भवात्। न च हेतुपदं विषयपरम्। समवायस्यातीन्द्रियत्वाद् 'इह तन्तुषु पटः' इत्यादिलौकिकप्रत्यक्षे समवायस्य वैशेषिकैर्मानानभ्युपगमात्।

न च प्रत्ययपदं 'इह पटे शुक्लत्वम्' इत्यादिप्रत्ययपरम्। तत्र सम्बन्धविधायकत्वसाधकहेतुरपि विशिष्टज्ञानत्वमेव। नातो लौकिकप्रत्यक्षव्यभिचार इति वाच्यम्। तथापि विशिष्टबुद्धिमात्र एव सम्बन्धभानानङ्गीकर्तृनये बाधव्यभिचारयोर्दुर्वारत्वादित्यतो व्याचष्टे **इहेति। इत्यादय इति।** प्रमा इति शेषः। **सम्बन्धमन्तरेणानुपपन्ना इति।** विशिष्टाभ्रमस्य विशेषणसम्बन्धवद्विशेष्यविषयकत्वनियमादिति भावः। **तं व्यवस्थापयन्तीति।** तं समवायम्। तथा च 'इह तन्तुषु पटः' इत्यादि धीः तन्तुसम्बन्धवद्पटविषयिका तन्तुवद्विशेष्यकज्ञानत्वादित्यनुमानात् समवायेतरसम्बन्धबाधे समवायः सिद्ध्यति। यद् यद् भाववद्विशेष्यकं ज्ञानम्, तत्तद् तादृशभावसम्बन्धवद्विशेष्यकमपि भवति, कुण्डे बदरमिति ज्ञानवदिति सामान्य-

मुखी व्याप्तिः। तेन प्राक् साध्याप्रसिद्धावपि न दोषः। भाष्ये च इह प्रत्यये हेतुर्ज्ञापको यस्येति बहुव्रीहिरिति भावः।

**अथान्येऽपि शक्तिसंख्यासादृश्यादयः पदार्थाः किं नोद्दिष्टा इत्यत आह एवमिति। एवम् उक्तेन क्रमेण। धर्मिणामुद्देशः कृतः। धर्मा एव परं नोद्दिष्टाः। शक्त्यादीनामेष्वेवान्तर्भावात्। तथा च वक्ष्यामः। यद्यपि च सामान्यविशेषसमवायानां लक्षणमप्युक्तम्, तथापि तस्येहाव्युत्पादनादनुक्तकल्पतयोद्देशः कृत इत्याह।**

'धर्मिणामुद्देशः कृतः' इति कृतस्य कीर्तनं व्यर्थमित्याशङ्कामपनेतुमवतरणिकामाह **अथेति**। एवमित्यस्य व्याख्या 'उक्तेन क्रमेणे'ति। धर्मं विना धर्मिणामित्यस्य धर्माभाववतां धर्मिणामित्यर्थकत्वशङ्कानिरासाय व्युत्क्रमेण योजयति **धर्मिणामिति**। सर्वेषामेव धर्मिणामित्यर्थः। तथापि धर्मैर्विनेत्यस्य कृतावन्वयभ्रमो नापगच्छतीत्यतो विशदयति **धर्मा एवेति**। **नोद्दिष्टाः** धर्मपरतया नोद्दिष्टाः। **एष्वेवेति**। द्रव्याद्यन्यतमधर्मिष्वेवेत्यर्थः। **तथा चेति**। यथा तेषामत्रान्तर्भावस्तथा वक्ष्याम इत्यर्थः। **यद्यपीति**। तथा च "उद्देशः कृतः" इत्यसङ्गतं नाममात्रेण सङ्कीर्तनस्यैवोद्देशत्वादिति भावः। **इहाव्युत्पादनादिति**। एषां सत्त्वे प्रमाणाकथनादित्यर्थः। न च तथापि द्रव्यादीनां विभागस्यापि करणादुद्देशः कृत इत्यसङ्गतमेवेति वाच्यम्। विभागस्याप्युद्देश एवान्तर्भावादिति भावः।

**यद्यपि च धर्मा अपि षड्भ्यो नातिरिच्यन्ते, तथापि त एव परस्परसङ्गत्यमापन्नाः परस्परविवेकायोपयोक्ष्यन्त इति पृथगुच्यन्ते षण्णामपीति। अपिरभिव्याप्तौ। अस्तित्वं विधिमुखप्रत्ययत्वम्। प्रतियोग्यनपेक्षनिरूपणमिति यावत्। अभिधेयत्वमभिधानयोग्यत्वम्। शब्देन सङ्गतिलक्षणः सम्बन्धः। ज्ञेयत्वं ज्ञानयोग्यता। ज्ञाप्यज्ञापकभावलक्षणः सम्बन्धः।**

ननु वक्ष्यमाणसाधर्म्याण्यपि द्रव्यादिष्वन्तर्गतान्येव। तथा च कथं पृथगभिधीयन्त इत्यत आह **यद्यपीति**। **परस्परसङ्गत्यमापन्नाः** परस्परं सम्बन्धेन ज्ञायमानाः। **इति पृथगुच्यन्ते षण्णामपीति** पृथग्द्रव्यादीन् परस्परं सम्बद्धत्वेनोच्यन्ते। **क्वचिच्च** 'इति पृथगुच्यन्ते इत्यभिप्रायवानाह षण्णामपीति' पाठः। स च न प्रामाणिकः। तस्यापि प्रामाणिकत्वे 'पृथगुच्यन्ते' इत्यस्य परस्परसम्बद्धत्वेनाभिधातुं युज्यन्त इत्यर्थः। समुच्चयाभावादाह **अपिरिति**।

नन्वस्तित्वं कालसम्बन्धित्वं तच्चाभावेऽतिव्याप्तमत आह **विधिमुखेति**। ननु विधिमुखप्रत्ययविषयत्वं अभावत्वप्रकारकप्रत्ययान्यत्वम्, तदभावेऽतिव्याप्तमित्यत

आह **प्रतियोग्येति**। प्रतियोग्यनपेक्ष्यनिरूपणं किं प्रतियोग्यविषयकज्ञानविषयत्वम्, प्रतियोग्यविषयकलौकिकप्रत्यक्षविषयत्वं वा। आद्ये प्रमेयत्वादिनाऽभावज्ञानस्यापि प्रतियोग्यविषयकत्वादतिव्याप्तितादवस्थ्यम्। अत एव न द्वितीयोऽपि। इदन्त्वादि-नाऽभावलौकिकप्रत्यक्षस्यापि प्रतियोग्यविषयकत्वात्, अतीन्द्रियद्रव्यादावतिव्याप्ति-प्रसङ्गाच्च। तथापि नञ्व्यत्यासेन प्रतियोग्यनपेक्ष्यनिरूपणं प्रतियोग्यपेक्ष्यनिरूपणक-भिन्नभावत्वमिति यावत्। भावत्वञ्च समवायैकार्थसमवाययोरन्यतरसम्बन्धेन सत्तावत्त्वम्। समवायोऽपि स्वात्मकविशेषणतासम्बन्धेनैव वर्तत इति न तत्राव्याप्ति-रिति भावः।

नन्वभिधानं शब्दः, तदनुकूलकण्ठाद्यभिघातो वा। तद्विषयत्वञ्चाभिधेयत्वं तच्चाप्रसिद्धं शब्दादेर्निर्विषयकत्वात्। न चाभिधानं शब्दानुभवस्तद्विषयत्वमिति वाच्यम्। प्राचीनवैशेषिकैः शाब्दत्वजातेरनभ्युपगमात्।

न चाभिधानं शब्दजन्यज्ञानम्, तद्विषयत्वमभिधेयत्वमिति वाच्यम्, 'शब्द जन्य' इत्यस्य वैयर्थ्यात्। तत्त्यागेन द्वितीयेन (ज्ञेयत्वेन) पौनरुक्तत्वाद् व्याचष्टे **अभिधेयत्वेति**। **अभिधानयोग्यता** शब्दयोग्यता। तामेव निर्वक्ति **शब्देनेति**। सङ्गतिः शक्तिः। शक्तिसम्बन्धेन शब्दवत्त्वमित्यर्थः। विषयतासम्बन्धेन ज्ञानवत्त्वमिव जनकतासम्बन्धेन ज्ञानवत्त्वमपि षण्णां साधर्म्यम्। वैशेषिकमते ज्ञायमानलिङ्गस्या-नुमितिकरणतया पदार्थमात्रस्यैवानुमितिकरणत्वादतो ज्ञेयत्वपदमुभयपरतयैव व्याचष्टे **ज्ञेयत्वमिति**। ज्ञानयोग्यतामेव निर्वक्ति **ज्ञाप्येति**। ज्ञानस्य विषयत्वजनकत्व-लक्षणः सम्बन्ध इत्यर्थः। तथा च विषयतासम्बन्धेन ज्ञानवत्त्वं जनकतासम्बन्धेन ज्ञानवत्त्वञ्च साधर्म्यद्वयेऽस्य तात्पर्यमिति भावः।

**प्रकाशकृतस्तु** अत्राभिधानं शाब्दानुभवस्तद्विषयत्वमभिधेयत्वम्। तच्चा-नभिधानदशायामव्याप्तं विषयताया ज्ञानसमानकालीनत्वनियमादित्यतो व्याचष्टे अभिधेयत्वमिति। अर्थस्तु पूर्ववत्। ननु ज्ञेयत्वं ज्ञानविषयत्वं तच्चाज्ञानदशायामव्याप्तं विषयताया ज्ञानसमानकालीनत्वनियमादित्यतो व्याचष्टे ज्ञेयत्वमिति। ज्ञाप्यज्ञापक-भावेति ज्ञानजनकत्वमित्यर्थः। तच्च सर्वदैव वर्तते स्वरूपयोग्यतायाः कदाप्यनपाया-दिति भाव इति व्याचख्युः। तदसत्। यदा कदाचित् सत्त्वादेव साधर्म्यत्वसम्भवात्। भगवज्ज्ञानविषयत्वस्य सर्वदैव सत्त्वाच्चेति ध्येयम्।

**नन्वेतदुभयमभावेऽस्तीति चेदस्तु नेह तदपेक्षया वैधर्म्यमिह विवक्षितम्। अपि तु षडपेक्षया साधर्म्यम्। आश्रितत्वमाधेयता स्वाभाविकी। सा च नित्यद्रव्येषु नास्तीत्यतत आह अन्यत्रेति। नित्यद्रव्याणि विहायेदं साधर्म्यमित्यर्थः। ननु समवायेऽप्येतन्नास्ति। न। समवायस्य समवाया-न्तराभावेऽपि स्वभावत एवाधारसन्निकृष्टत्वात्। तथा च वक्ष्यामः।**

**चकारान्मूर्तत्वं विहाय निष्क्रियत्वम् । अथ समवायाद् वैधर्म्यमितरेषां साधर्म्यमाह द्रव्यादीनामिति । समवायित्वं समवायलक्षणः सम्बन्धः । अनेकत्वं स्वरूपभेदः । चकारात् समवायादन्यत्वम् । द्रव्यं विहाय पञ्चानामाह गुणादीनामिति । निर्गुणत्वं गुणाभावविशिष्टत्वम् । निष्क्रियत्वं क्रियाया असमवायः । द्रव्यादीनां त्रयाणामिति । सत्तासम्बन्धः समवायलक्षणः । सामान्यविशेषा द्रव्यत्वादयस्तद्वत्त्वम् । निरुपपदेनार्थशब्देन द्रव्यादयस्त्रय एवाभिधीयन्ते नापरे । एष एव स्वसमयो वैशेषिकाणां स्वशास्त्रे व्यवहारलाघवाय । यथा च धारणाध्यानसमाधित्रयमेकत्र संयम इति योगानुशासने । द्रव्यादित्रयन्तु प्रत्येकसमुदायाभ्यामिति विशेषः । तदिदमुक्तं स्वसमयेति ।**

**एतदुभयमिति** । अभिधेयत्वपदार्थरूपज्ञेयत्वपदार्थरूपञ्च साधर्म्यद्वयमित्यर्थः । **तदपेक्षया वैधर्म्यमिति** । तत्प्रतियोगिकभेदसाधकत्वमित्यर्थः । **षडपेक्षया साधर्म्यमिति** । षड्भिः सहभावस्य साधर्म्यत्वमित्यर्थः ।

**नव्यास्तु** भाष्ये षण्णामपीत्यपिशब्दादभावस्य समुच्चयः । अस्तित्वञ्च वर्तमानत्वं कालसम्बन्धित्वमिति यावत् । शेषं समानमिति न काप्यनुपपत्तिरिति प्राहुः ।

ननु भाष्ये नित्यद्रव्येभ्योऽन्यत्रेति व्यर्थम् । नित्यद्रव्यस्य संयोगादिसम्बन्धेनाश्रितत्वादित्यत आह **आश्रितत्वमिति** । **स्वाभाविकी** समवायसम्बन्धावच्छिन्ना । **स्वभावत इति** । स्वात्मकविशेषणतासम्बन्धेनेत्यर्थः । **तथा चेति** । यथा हि समवायः स्वात्मकविशेषणतासम्बन्धेनैव वर्तते न त्वतिरिक्तविशेषणतया तथा वक्ष्याम इत्यर्थः ।

**प्रकाशकृतस्तु** समवायस्यातिरिक्तविशेषणतया वृत्तित्वमते भावत्वे सत्यसमवेतरूपसमवायिभिन्नत्वमाश्रितत्वं निर्वाच्यम् । तच्च समवायेऽपि वर्तत इत्याहुः ।

**निष्क्रियत्वमिति** । क्रियासमवायिकारणतावच्छेदकरूपाभाववत्त्वे सति भावत्वम्, क्रियावद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वे सति भावत्वं वा । तेन निष्क्रियविनष्टमूर्त्तौ नातिव्याप्तिः । **समवायाद् वैधर्म्यमिति** । समवायप्रतियोगिकभेदसाधकमित्यर्थः । **इतरेषां साधर्म्यमिति** । समवायेतरवृत्तिसाधर्म्यमित्यर्थः । समवायित्वं यदि समवायिकारणत्वं तदा गुणादावतिव्याप्तिरतो व्याचष्टे **समवायित्वमिति** । **समवायलक्षणः सम्बन्ध इति** । यद्यपि समवायस्य प्रतियोगितासम्बन्धेन लक्षणत्वमनुयोगितासम्बन्धेन वा; नाद्यः, नित्यद्रव्येष्वव्याप्तेः समवायेऽतिव्याप्तेश्च । नान्त्यः, सामान्यविशेषयोरव्याप्तेस्तयोः समवेतधर्माभावात् । तथापि अनुयोगित्वसमवायान्यविशिष्टप्रतियोगित्वान्यतरसम्बन्धेन तस्य लक्षणत्वमवसेयम् ।

**प्रकाशकृतस्तु** समवेतवृत्तिपदार्थविभाजकोपाधिमात्रेऽस्य तात्पर्यमित्याहुः। तत्र समवेतत्वं स्वातिरिक्तसमवायेन वृत्तिमत्त्वम्। अतो न समवायेऽतिव्याप्तिः। पदार्थपदञ्च भावपरम्। तेन पदार्थो हि द्विविधो भावोऽभावश्चेति। द्रव्यत्वादिकं भावविभाजकोपाधिभूतमिति तमादाय समवाये नातिव्याप्तितादवस्थ्यमिति बोध्यम्। अत्रानेकत्वं बहुत्वसंख्या। सा च न गुणादावतो व्याचष्टे **अनेकत्वमिति**। **स्वरूपभेदः** स्ववृत्तिभावविभाजकोपाधिमत्प्रतियोगिकप्रतियोग्यवृत्तिभेदवत्त्वम्। भावविभाजकोपाधित्वञ्च द्रव्यत्वगुणत्वादिषडन्यतमत्वं नातो दुर्वचत्वम्। न चैवं द्रव्यत्वगुणत्वादिपञ्चान्यतमत्वमेव सम्यक् कृतमधिकेनेति वाच्यम्। यथा सन्निवेशे वैयर्थ्याभावादेवमग्रेऽपि सर्वत्र बोध्यम्। **समवायादन्यत्वम्**। समवायभिन्नभावत्वम्। **द्रव्यं विहायेति**। **आह**। साधर्म्यमाह। प्राचीनैर्निरः संसर्गाभावमात्रवाचितया निर्गुणत्वस्य गुणान्योन्याभावभिन्नाभाववत्त्वमिति वर्धमानोक्तमनादेयम्। आचार्यविरुद्धत्वात्। ( अत्रत्यष्टीकाग्रन्थस्त्रुटितः। )

आधुनिकपरिभाषायां लाघवगौरवस्याकिञ्चित्करत्वात्। न च दिवाकरत्वावच्छिन्नदिवाकरविशेष्यकनिशाकरत्वावच्छिन्ननिशाकरविशेष्यकसमूहालम्बनपुष्पवन्तपदशक्तिज्ञानस्यैव दिवाकरत्वादिप्रकारकशाब्दबोधजनकत्वे क्रमिकप्रत्येकमात्र (विषयक)-विशेष्यकशक्तिज्ञानाकालीनापरविशेष्यकशक्तिज्ञानाच्च दिवाकरादिविशेष्यकशाब्दबोधो न स्यात्। स्याच्च समूहालम्बनशक्तिज्ञानसत्त्वे एकस्य योग्यताज्ञानादिविरहेऽपरमात्रविषयकः शाब्दबोध इति वाच्यम्। इष्टत्वात्।

**केचित्तु** समूहालम्बनपुष्पवन्तपदशक्तिज्ञानमेव कारणमिति नियमः। हर्यादिपदवत् प्रत्येकमात्रविषयकतच्छक्तिज्ञानमपि कारणम्। परन्तु दिवाकरत्वावच्छिन्नदिवाकरविशेष्यकनिशाकरत्वावच्छिन्ननिशाकरविशेष्यकसमूहालम्बनशाब्दबुद्धावेव हेतुः। ननु कदापि तज्जन्यः प्रत्येकमात्रविषयकः शाब्दबोध इत्येव हर्यादिनानार्थपदान्तरात् तस्य विशेष इत्याहुः।

**अन्ये तु** समूहालम्बनपुष्पवन्तपदशक्तिज्ञानमेव कारणमिति न नियमः। न च पुष्पवन्तपदज्ञानं समूहालम्बनशाब्दबुद्धावेव हेतुरित्यपि नियमः। एकविषयकशक्तिज्ञानाकालीनापरविषयकशक्तिज्ञानादपरविषयकशाब्दबोधाभ्युपगमात्। किन्तु यत्रोभयविशेष्यकमेकं पुष्पवन्तपदशक्तिज्ञानं समूहालम्बनरूपमस्ति चैकस्य योग्यताज्ञानादिकं तत्र यस्य योग्यताज्ञानादिकमस्ति तस्य ततो बोधः। निशाकरनिष्ठपुष्पवन्तेतरपदवृत्तिज्ञानजन्यदिवाकरत्वावच्छिन्नदिवाकरविषयकनिशाकरत्वावच्छिन्ननिशाकरविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति दिवाकरत्वावच्छिन्नदिवाकरविषयकपुष्पवन्तपदशक्तिज्ञानस्य, दिवाकरनिष्ठपुष्पवन्तेतरपदवृत्तिज्ञानजन्यनिशाकरत्वावच्छिन्ननिशाकरविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति निशाकरत्वावच्छिन्ननिशाकरविषयकपुष्पवन्तपदशक्तिज्ञानस्य प्रतिबन्धकत्वादित्याहुः। एतेन संयमपदमपि व्याख्यातम्।

**धर्माधर्मकर्तृत्वञ्चेति । साधर्म्यद्वयसूचनाय चकारः । धर्मकर्तृत्वमधर्मं विहाय, अधर्मकर्तृत्वञ्च धर्मं विहाय ।**

धर्माधर्मकर्तृत्वञ्चेति भाष्यग्रन्थः । **साधर्म्यद्वयेति** । तथा च धर्मजनकत्वमधर्मजनकत्वञ्च द्वयं साधर्म्यमित्यर्थः । भूमिर्दीयमाना सती धर्मं जनयति । अपह्रियमाणा सत्यधर्मं जनयति । अतो द्रव्यस्य धर्माधर्मजनकत्वमिति भावः । ननु धर्मजनकत्वमधर्मेऽधर्मजनकत्वञ्च धर्मेऽव्याप्तमत आह **धर्मेति** । कर्तृत्वं जनकत्वम् । एतच्चापाततः । धर्माधर्मभिन्नानामपि सर्वेषां द्रव्यगुणकर्मणां न धर्माधर्मजनकत्वमिति यथाश्रुते तथाप्यव्याप्तिर्दुर्वारैव । न वा धर्मान्यत्वे सति धर्मजनकवृत्तिभावविभाजकोपाधिमत्त्वं धर्मजनकत्वम्, अधर्मान्यत्वे सति अधर्मजनकवृत्तिभावविभाजकोपाधिमत्त्वञ्च विवक्षितमिति वाच्यम् । तथा सति सत्यन्तदलरहितस्य यथोक्तद्वयस्यैव धर्माधर्मसाधारणसाधर्म्यत्वसम्भवेन तयोर्बहिर्भावस्यान्याय्यत्वात् प्रक्षालनाद्धीति न्यायादिति ध्येयम् ।

**ननु जात्यादीनां कथं नैतत् । उच्यते ? विहितनिषिद्धभावनाविष्टानां हि तद्धेतुत्वं न स्वरूपतः । न च भावनावेशो जात्यादिषु स्वरूपतो द्रव्यादिकमनन्तर्भाव्य सम्भवति ; नित्यत्वेनाव्यापारत्वात्, अनित्यधर्मायोगेनाव्यापारितत्वात् । न च ज्ञानमात्रेण तेषां तदुपयोगोऽभियोगवदनिषेधात् । तस्माद् आश्रयावच्छेदक(त्व)मात्रेणैवोपयोक्ष्यन्त इति ।**

**विहितेति** । शुभाशुभादृष्टहेतुदृष्टविशेष्याणामित्यर्थः । **स्वरूपतः** तादृशकृतिविशेष्याणाम् । **भावनावेशः** । भावनाविषयत्वम् । **जात्यादिषु स्वरूपतः** । जात्यादिषु भावस्वरूपेषु । **द्रव्यादिकमनन्तर्भाव्येत्यादि** । द्रव्याद्यविशेषणतयेत्यर्थः । कृतिविशेष्यता हि द्वयी असिद्धत्वाख्या सिद्धत्वाख्या च । आद्या यागस्वर्गादिः । द्वितीया कृतिजन्या यागादिजनकहविरादेः । जात्यादिषु च अदृष्टजनककृतेरुक्तविशेष्यत्वमेव न सम्भवतीत्याह **नित्यत्वेनेत्यादिना** । **अव्यापारत्वात्** । अदृष्टजनककृतेरासिद्धाख्यविशेष्यतानाश्रयत्वात् । असिद्धत्वाख्यकृतिविशेष्यताया जन्यत्वव्याप्यत्वादिति भावः । **अनित्यधर्मायोगेनेति** । अदृष्टजनककृतिजन्याजनकत्वेनेत्यर्थः । **अव्यापारितत्वादिति** । अदृष्टजनककृतेश्च सिद्धत्वाख्यविशेष्यतानाश्रयत्वादित्यर्थः । सिद्धत्वाख्यकृतिविशेष्यतायाः स्वजन्यजनकत्वव्याप्यत्वादिति भावः ।

ननु जात्यादिविशिष्टद्रव्यादिज्ञानात् तद्गोचरा द्रव्य( वृत्तिः ? )मतोऽदृष्टोत्पत्तिरिति तस्या अप्यदृष्टजनकत्वमस्त्येवेत्यत आह **न चेति । ज्ञानमात्रेणेति ।** अदृष्टजनकेष्टसाधनत्वादिज्ञानविषयतावच्छेदकत्वमात्रेणेत्यर्थः । **तदुपयोगः** । तज्जनकत्वम् । **अभियोगवदिति** । अदृष्टजनकतासाधकविधेरदृष्टजनकतासाधकतासाधकनिषेधस्याप्यभावादित्यर्थः । तथा च तेषामदृष्टजनकत्वे मानाभाव इति भावः ।

नियोगवदिति क्वचित् पाठः। तत्रापि नियोगोऽदृष्टजनकतासाधकः। **आश्रयावच्छेदकत्वमात्रेणेति**। अदृष्टजनकज्ञानविषयत्वावच्छेदकत्वमात्रेणेत्यर्थः। **उपयोक्ष्यन्ते**। उपयोगिनो भवन्ति।

**कार्यत्वमभूत्वाभावित्वम्। अनित्यत्वं भूत्वा अभावित्वं विवक्षितम्। अन्यथा कारणवतामेवेति नियमो न स्यात्। तदनपेक्षान् विहायेत्येवकारार्थः।**

कार्यत्वानित्यत्वे कारणवतामेवेति भाष्यम्। तत्र यदि कार्यत्वं प्रागभावप्रतियोगित्वमात्रम्, ध्वंसप्रतियोगित्वमात्रञ्चानित्यत्वं तदा ध्वंसप्रागभावयोरतिव्याप्तिरित्यतो व्याचष्टे **कार्यत्वमिति**। अभूत्वा प्रागभावप्रतियोगीभूय भावित्वम्। भावः सत्ता, तदाश्रयत्वम्। तथा च प्रागभावप्रतियोगित्वे सति सत्तावत्त्वं कार्यत्वमित्यर्थः। **अनित्यत्वमिति। भूत्वा।** सत्ताविशिष्टीभूय। **अभावित्वम्।** ध्वंसरूपाभावप्रतियोगित्वमनित्यत्वमित्यर्थः। सत्तावत्त्वविशेषणस्योभयत्र प्रतियोगित्वान्तदलस्य च व्यावृत्तिमाह **अन्यथेति**। यदि सत्तावत्त्वेन न विशिष्यते उभयत्रैव प्रतियोगित्वान्तदलं वा न दीयते तदा प्रागभावे नित्ये च व्याप्तत्वात् कारणवतामेवेति लक्ष्यनियमोऽसङ्गतः स्यादित्यर्थः। इदमुपलक्षणम्। प्रथमे सत्तावत्त्वदलानुपादाने ध्वंसेऽतिव्याप्तिः, न च ध्वंसोऽपि संग्राह्यः। तस्यापि कारणत्वादिति वाच्यम्। द्रव्यादीनां त्रयाणामित्यस्यानुवृत्त्या तस्यालक्ष्यत्वमित्यभिप्रायादिति बोध्यम्। **तदनपेक्षानिति**। कारणानपेक्षानित्यर्थः।

**कारणत्वञ्च ज्ञातृधर्मेतरकार्यापेक्षया। अन्यथा न पारिमाण्डल्यादिव्यवच्छेदः, त्रयग्रहणञ्च नोपपद्यते। पारिमाण्डल्यं परमाणुपरिमाणम्। आदिग्रहणात् परममहत्त्वम्, अन्त्यावयविरूपरसगन्धस्पर्शपरिमाणानि, द्वित्वद्विपृथक्त्वपरत्वापरत्वानि, विनश्यदवस्थद्रव्यनिष्ठसंयोगविभागकर्माणि, अन्त्यः शब्दः, चरमसंस्कारो ज्ञानञ्च गृह्यते।**

कारणत्वञ्चान्यत्र पारिमाण्डल्यादिभ्य इति भाष्यम्। द्रव्यादिषु त्रिष्विति विभक्तिविपरिणामेनानुवर्त्तते। तथा च पारिमाण्डल्यादिभ्यो भिन्नेषु द्रव्यादिषु कारणत्वमित्यर्थ इत्याचार्यसम्मता व्याख्या। अत्र कारणत्वपदस्य सामान्यतः कारणत्वपरत्वे वक्ष्यमाणदोषापत्तिरित्यतो व्याचष्टे मूले **कारणत्वञ्चेति**। द्रव्यादित्रयस्यैव लक्ष्यत्वाभिधानं सामान्यस्यापि स्वविषयकप्रत्यक्षजनकत्वात्। समवायस्यापि सन्निकर्षविषयगुणादिप्रत्यक्षजनकत्वाच्चेति भावः। **ज्ञातृधर्मेतरेति**। ज्ञातृधर्मो ज्ञानं तदितरदित्यर्थः। **कार्यापेक्षया**। भावकार्यापेक्षया। यथाश्रुते लौकिकप्रत्यक्षध्वंसञ्चादाय अन्त्यावयविरूपादिपदपरिगृहीतेऽतिव्याप्तितादवस्थ्यात्। व्याख्याबीजं स्वयमेव स्फुटयति **अन्यथेति। पारिमाण्डल्यादिव्यवच्छेद इति**। अतद्गुणसंविज्ञान-

बहुव्रीहिणा अन्त्यावयविनो रूपादिव्यवच्छेद इत्यर्थः। तेषामपि विषयविधया स्वविषयक-लौकिकप्रत्यक्षजनकत्वादिति भावः। **केचित्तु** पारिमाण्डल्यादिव्यवच्छेद इत्यत्र न अतद्गुणसंविज्ञानबहुव्रीहिः। किन्तु तद्गुणसंविज्ञानबहुव्रीहिरेव। वैशेषिकनये ज्ञायमानलिङ्गस्यानुमितिकरणतयाऽतीन्द्रियस्यापि ज्ञानजनकत्वादित्याहुः। तन्न। पारिमाण्डल्यस्य परमाणुपरिमाणस्य अणीयतया ज्ञानजनकत्वाभावेन तद्गुणसंविज्ञान-बहुव्रीह्यसङ्गतेरतद्गुणसंविज्ञानबहुव्रीहिः।

यत्तु योगजधर्मजन्यप्रत्यक्षस्यापि विषयजन्यत्वेन अतीन्द्रियस्यापि ज्ञानजन-कत्वमस्तीति। तदसत्। अतीतादिगोचरतत्प्रत्यक्षे व्यभिचारेण मानाभावेन तस्य विषयाजन्यत्वादिति ध्येयम्।

**परमाणुपरिमाणमिति**। परमाणुवृत्तिपरिमाणमित्यर्थः। तच्चाणुत्वं परमत्वञ्चेति भावः। **परममहत्त्वमिति**। परममहद्वृत्तिपरिमाणमित्यर्थः। तेन परमदीर्घत्वस्यापि सङ्ग्रहः।

न च महत्त्वविशेषादिकं प्रति महत्तत्त्वादिनैव कारणतया परममहत्त्वादिक-मपि कारणं भवत्येवेति वाच्यम्, फलोपधानलक्षणासाधारणत्वस्यैव साधर्म्यघटक-त्वादिति भावः। अत एवाह **अन्त्यावयविरूपेति**। अन्त्यावयविवृत्तिरूपेत्यर्थः। रसगन्धौ सजातीयस्य बलपुष्ट्यादेश्चाजनकौ ग्राह्यौ। अत्राप्यन्त्यावयविवृत्तित्वस्यान्वये गुणविरोधेनावयविरसगन्धजनकयोरवयववृत्तिरसगन्धयोर्जीवनाद्यजनकयोरसंग्रहापत्तेः। स्पर्शपदं पाकजस्पर्शाभिघाताद्यजनकस्पर्शपरम्। परिमाणपदं परिमाणाजनकावयवि वृत्तिपरिमाणपरम्। परमाणुत्वादेः पृथग्गणनादेव अवयविवृत्तित्वोपादानम्। **द्वित्वपदं** परिमाणाजनकानेकसंख्यापरम्। द्विपृथक्त्वपदं अनेकपृथक्त्वपरम्। अन्त्यावय-व्येकत्वैकपृथक्त्वयोरपि स्वसमानाधिकरणद्वित्वद्विपृथक्त्वादिजनकत्वाद् एकत्वैकपृथ-क्त्वयोः परित्यागः। **विनश्यदवस्थद्रव्येति**। आश्रयस्य विनश्यदवस्थताकालोत्पन्ना-नीत्यर्थः। एतच्च संयोगाद्यजनकस्य संयोगस्य, विभागाजनकविभागस्य कर्माजनक-वेगस्य, विभागाजनककर्मणाञ्चोपलक्षणम्। **अन्त्यः शब्दः**। शब्दाजनकशब्दः। संस्कारपदं वेगातिरिक्तसंस्कारत्वरूपेण स्थितिस्थापकभावनोभयपरम्। चरमत्वञ्च स्थितिस्थापकाजनकत्वम्। तथा च स्थितिस्थापकाजनको वेगातिरिक्तः संस्कार इत्यर्थः। अन्यथा भावनाख्यसंस्कारमात्रपरत्वे विशेषणवैयर्थ्यापत्तेः। सर्वस्या एव भावनाया ज्ञातृधर्मेतरकार्याजनकत्वात्। **ज्ञानञ्चेति**। ज्ञानपदं संख्याजनकज्ञानपरम्। उपलक्षणञ्च सुखदुःखेच्छाद्वेषकर्माभिघाताजनकप्रयत्नकर्माजनकादृष्टानाम्। फलोप-धानात्मकासाधारणकारणत्वस्यैव साधर्म्यघटकत्वात्।

**द्रव्याश्रितत्वञ्च द्रव्यसमवायिकारणकता। एवं द्रव्यत्वादिसामान्य-विशेषपदार्थयोरप्रसङ्गः। तथाप्यव्यापकमत आह अन्यत्रेति। नित्यद्रव्येत्युप-**

**लक्षणं नित्यगुणेष्वपि द्रष्टव्यम् । नित्यद्रव्याणि नित्यगुणांश्च विहायेदं पदार्थत्रितयसाधर्म्यमित्यर्थः । आद्यौ संयोगविभागौ नित्यवर्गञ्च विहाय गुणासमवायिकारणकता चेति चार्थः ।**

**सामान्यादीनामिति । स्वात्मसत्त्वं सत्ताविरहः । बुद्धिलक्षणत्वं बुद्धिमात्रममीषां लक्षणं प्रमाणम् । न तु द्रव्यादिवत् प्रमाणान्तरमस्तीत्यर्थः । अनुवृत्तबुद्धिर्व्यावृत्तबुद्धिरिहेति बुद्धिरित्येव सामान्यादित्रये प्रमाणमिति ।**

**अकार्यत्वमनादित्वम् । कथमिति चेत् ? अन्यथा स्वरूपव्याघातात् । सामान्यस्य हि कार्यत्वे व्यक्तिरेव समानाधिकरणा स्यात् । तथा च तदुत्पत्तिविनाशयोर्जात्युत्पत्तिविनाशे प्रतिव्यक्तिभिन्नं सत् सामान्यरूपतां जह्यात् ।**

'द्रव्याश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्य' इत्यत्र नित्यद्रव्यभिन्नमात्रं न लक्ष्यम् गुणकर्ममात्रवृत्तिसामान्येऽभावे चाव्याप्तेः । तयोर्द्रव्यसमवेतत्वाभावात् । अपि तु द्रव्यादित्रयमेव लक्ष्यम् । द्रव्यादिषु त्रिष्विति विभक्तिविपरिणामेन पूर्वतोऽनुवृत्तेः । तथा च द्रव्यवृत्तिसामान्येऽन्त्यविशेषे चातिव्याप्तिरित्यतो व्याचष्टे **द्रव्यसमवायिकारणकतेति** । अत्र द्रव्यपदं स्वरूपकथनं समवायिकारणत्वमात्रं साधर्म्यं बोध्यम् । व्याख्याबीजं स्वयमेव स्फुटयति **एवमिति** । द्रव्यत्वादीत्यादिपदाद् द्रव्यवृत्तिजातिमात्रपरिग्रहः । **अप्रसङ्गः** । प्रसङ्गाभावः । अतिव्याप्त्यभाव इति यावत् । नित्यद्रव्येभ्योऽन्यत्रेत्यस्य प्रयोजनं स्फुटयति **तथापीति** । **अव्यापकम्** । नित्यद्रव्यादावव्यापकम् । **पदार्थत्रितयेति** । द्रव्यादिपदार्थत्रितयेत्यर्थः । **आद्याविति** । कर्मजावित्यर्थः । **नित्यवर्गञ्चेति** । चकारात् कर्मजवेगध्वंसयोः परिग्रहः ।

ननु स्वात्मसत्त्वं स्वस्मिन् समवेतत्वं, तच्चाप्रसिद्धमित्यतो व्याचष्टे **सत्ताविरह इति** । भावत्वे सतीति पूरणीयम् । अतो नाभावेष्वतिव्याप्तिः । **अनुवृत्तबुद्धिरिति** । स्वाश्रयविशेष्यकसमवायसंसर्गकबुद्धिरित्यर्थः । **व्यावृत्तबुद्धिरिति** । स्वाश्रयेतराभावबुद्धिरित्यर्थः । **इहेति बुद्धिरिति** । इह तन्तुषु पट इत्यादिबुद्धिरित्यर्थः । **सामान्यादित्रय इति** । यथाक्रमं सामान्यादिषु त्रिषु प्रमाणमित्यर्थः । एतच्चापाततः । यदि हि प्रमाणं प्रमा तदा द्रव्यादिष्वतिव्याप्तिः । तेषामपि बुद्धेरेव प्रमात्वात् । अथ प्रमाकरणं तदाऽव्याप्तिः । चक्षुरादेरपि सामान्यादिषु प्रमाकरणत्वात् । विशेषसमवाययोरप्यलौकिकप्रत्यक्षसम्भवात् । वस्तुतस्तु बुद्धिपदं सामान्यं विशेषः समवायश्चेति द्रव्याद्यविशेष्यकसमूहालम्बनबुद्धिविशेषपरम् । लक्षणत्वं विशेष्यत्वम् । तथा च समूहालम्बनबुद्धिविशेष्यत्वं सामान्यादीनां त्रयाणामिति भाष्यार्थः ।

अकार्यत्वमित्यस्य न विद्यते कार्यं यस्येति व्युत्पत्त्या अकारणत्वमित्यर्थे द्वितीयाऽभेद इत्यतो व्याचष्टे **अनादित्वम्** इति। द्रव्यादावतिव्याप्तिः। तथापि प्रागभावाप्रतियोगित्वे तात्पर्यम्। शङ्कते **कथमितीति**। सामान्यादीनां प्रागभावाप्रतियोगित्वं कथमित्यर्थः। **अन्यथा**। सामान्यस्य प्रागभावप्रतियोगित्वे। **स्वरूपव्याघातः**। सामान्यत्वव्याघातः। सामान्यत्वव्याघातमेव विवृणोति **सामान्यस्य हीति**। **व्यक्तिरेवेति**। भावकार्यस्य समवायिकारणजन्यत्वनियमादिति भावः। **तदुत्पत्तिविनाशयोरिति**। अनन्तरमिवि शेषः। **सामान्यरूपतामिति**। सामान्यतामित्यर्थः। क्वचित्तथैव पाठः। अनेकव्यक्तिसमवेतत्वस्य सामान्यलक्षणघटकत्वादिति भावः।

**अभेदे तु व्यक्तेः पूर्वमपि सत्त्वात् न तत्कारणकं स्यात्। एवं पूर्वपूर्वतरपूर्वतमादिव्यक्तिभ्योऽपि प्राक् सत्त्वात् अनादित्वं सामान्यस्य। अन्यथा स्वरूपव्याघात इति। नित्यद्रव्याणाञ्च कदाचिद् विशेषाभावे व्यावृत्तिरपि निवर्त्तताम्। तथा सति द्रव्यसङ्करः स्यात्। न च स्वभावसाङ्कर्यं पुनरसाङ्कर्यम् स्वभावपरावृत्तिप्रसङ्गात्। ततः सर्वदैवासङ्कीर्णत्वात् सर्वदैव विशिष्टानीत्यनादय एव विशेषाः। समवायोऽपि अतो निःसमवायः कथं समवायिकारणं विना भवेत्। भवन् वा कथं न भावकार्यान्तरमर्यादामतिक्रामेत्। कथं वोत्पन्नोऽपि नश्येत्। तथा च कथमुत्पद्येतापि। भावस्याविनाशिनोऽनुत्पत्तेः। समवायान्तराभ्युपगमे च कथमनवस्थां नापादयेत्। कथं वा पश्चादुत्पद्यमानः संयोगलक्षणप्राप्त्यै स्वभावं न जह्यात्। अप्राप्तिपूर्विका प्राप्तिरिति हि तत्। नित्यसम्बन्धिषु तथानभ्युपगमाच्चेति।**

**एवमिति**। स्वाश्रयीभूतव्यक्तिकारणकत्वाभावे इत्यर्थः। **अनादित्वमिति**। प्रागभावाप्रतियोगित्वमित्यर्थः। ननु सर्गाद्यकालीनघटादिव्यक्तिजन्यमेव घटत्वादिसामान्यम्। इदानीन्तनघटादिव्यक्तौ तु तस्य स्थितिरेव नोत्पत्तिरिति न व्यभिचार इत्यत आह **अन्यथेति**। सर्गाद्यकालीनव्यक्तिजन्यत्वेऽपीत्यर्थः। **स्वरूपेति**। सर्गाद्यकालीनघटादिव्यक्तिनाशे तन्नाशस्यावश्यकतया सामान्यत्वघटकनित्यत्वव्याघातादिति भावः।

ननु सामान्यस्य सामान्यत्वव्याघातापत्त्या प्रागभावाप्रतियोगित्वेऽपि विशेषस्य प्रागभावप्रतियोगित्वे किं बाधकमित्यत आह **नित्यद्रव्याणाञ्चेति**। **व्यावृत्तिरपीति**। नित्यद्रव्यनिष्ठस्वेतरप्रतियोगिकभेदोऽपि नित्यद्रव्यात् तदानीं निवर्त्तेतेत्यर्थः। नित्यद्रव्यनिष्ठस्वेतरप्रतियोगिकान्योन्याभावस्य स्वसमानाधिकरणविशेषपदार्थसमानकालीनत्वनियमादिति भावः।

नन्वत्रेष्टापत्तिरित्यत आह **तथा सतीति**। **द्रव्यसङ्करः**। नित्यद्रव्याणां स्वेतर-प्रतियोगिकभेदस्य स्वावृत्तित्वं स्यादित्यर्थः। ननु विशेषोत्पत्तेः पूर्वं नित्यद्रव्याणां स्वेतरप्रतियोगिकभेदस्य तदन्यवृत्तित्वेऽपि विशेषोत्पत्तेः पश्चात् स्ववृत्तित्वं स्यादित्यत आह **नचेति**। **स्वभावसाङ्कर्यं इति**। विशेषोत्पत्तेः पूर्वं स्ववृत्तित्वाभावे। **पुनः साङ्कर्यम्**। पुनः साङ्कर्यसम्भवः। विशेषोत्पत्त्यनन्तरं स्वावृत्तित्वसम्भव इति यावत्। **स्वभावेति**। अन्योन्याभावनिष्ठाधेयताया व्याप्यवृत्तित्वनियमभङ्गादित्यर्थः। **असङ्कीर्ण-त्वादिति**। नित्यद्रव्याणां स्वेतरप्रतियोगिकभेदस्य स्वावृत्तित्वादित्यर्थः। **विशिष्टानीति**। विशेषवन्तीत्यर्थः।

ननु तथापि समवायस्य प्रागभावप्रतियोगित्वे किं बाधकमित्यत आह **सम-वायोऽपीति**। निःसमवाय इति हेतुगर्भं विशेषणम्। **अतो निःसमवायः**। **अतः**। समवायिकारणाभावेनेत्यर्थः। **कथं भवेत्**। कथं भावत्वे सति प्रागभावप्रतियोगी स्यात्। **भवन् वेति**। समवायिकारणकत्वं विनापि यदि प्रागभावप्रतियोगिभावः स्यादित्यर्थः। **कथं नेति**। भावकार्यान्तरक्लृप्तस्य भावकार्यनिष्ठस्य समवायिकारणकत्वनियमस्य भङ्गस्थानं कथं न स्यादित्यर्थः। तथाचात्रैव भावकार्यत्वस्य समवायिकारणकत्व-व्यभिचारः स्यादिति भावः।

ननु भावकार्यत्वस्य समवायिकारणकत्वनियमेन भावत्वं स्वत्वम् अतो न व्यभि-चार इत्यत आह **कथं वेति**। **उत्पन्नोऽपीति**। समवायिकारणं विना उत्पन्नोऽपीत्यर्थः। **नश्येतेति**। समवायिवृत्तिनाशप्रतियोगिनो भावकार्यस्य समवायिनाशनाश्यत्वनियमात्। ननु भवत्येव तस्य नाश इत्यभ्युपगमादित्यत आह **तथा चेति**। ननु समवायस्यापि समवायाभ्युपगमान्न समवायिकारणविरह इत्यत आह **समवायान्तरेति**। ननु समवायस्य स्वात्मकसमवायेनैव वृत्तेर्नानवस्था, न वा समवायिकारणविरह इत्यत आह **कथं वेति**। सम्बन्धिद्वयोत्पत्तेः पश्चादित्यर्थः। सम्बन्धिद्वयमेव रूपादित्रयोविंशतिगुणान्यत्वे सति समवायगुणान्यतरत्वमिति भावः। किञ्च सम्बन्धिनोर्नित्यत्वे समवायस्य प्रागभावाप्रति-योगित्वस्थितौ अनित्यसम्बन्धिनोरपि तस्य तथानुमेयमित्यभिप्रायेणाह **नित्येति**। **तथानभ्युपगमाच्चेति**। प्रागभावप्रतियोगित्वानभ्युपगमाच्चेत्यर्थः।

**तस्मात् सुष्ठूक्तं सामान्यादीनां त्रयाणामकार्यत्वमिति। अकारणत्व-मनात्मधर्मापेक्षया। असामान्यविशेषवत्त्वम् अपरसामान्यविरहः। स च सामान्येष्वनवस्थानात्। विशेषेष्वपि सामान्यसद्भावे गुणत्वापत्तौ पुनः समानगुणेषु विशेषान्तरापेक्षायामनवस्थानादेव। समवायस्यैकत्वाच्च समवायान्तरापेक्षयानवस्थानाच्चेति। नित्यत्वमनन्तत्वम्। तच्चाकार्यत्वात्। अनित्यत्वं हि कार्यतया व्याप्तम्। सा च सामान्यादिभ्यो व्यावर्तमाना स्वव्याप्यमनित्यत्वमुपादाय निवर्त्तते। अकार्यमपि हि यद्याकाशपरमाण्वादि**

**सामान्यादि वा निवृत्तं स्यात् पुनस्तन्न स्यात् कारणाभावात्। ततस्तद-भावे निराश्रयं किमपि न स्यादिति। अर्थशब्दानभिधेयत्वं स्वसमयार्थ-शब्दानभिधेयत्वम्। चकारात् कारणानपेक्षत्वमिति। उपलक्षणञ्चैतत्। अन्यदप्यूह्यम्।**

**तस्मादिति**। एतत् सर्वमभ्युपगममात्रम्। वस्तुतस्तु मानाभावादेव सामान्यादीनां न जन्यत्वम्, नापि विनाशित्वमित्येव तत्त्वम्।

अकारणत्वमिति भाष्यग्रन्थः। सामान्यस्य विषयविधया स्वप्रत्यक्षकारणत्वात्। समवायस्यापि (विशेषस्यापि?) सन्निकर्षविषयविधया स्वप्रत्यक्षकारणत्वात्। समवायस्य सन्निकर्षविधया गुणादिप्रत्यक्षजनकत्वाच्चाह **अनात्मधर्मेति**। यद्यपीदं पारि-माण्डल्यादावप्यस्ति तथापि आत्मधर्मेतरकार्यकारणावृत्तिपदार्थविभाजकोपाधिमत्त्वे तात्पर्यम्।

नन्वसामान्यविशेषवत्त्वमित्यस्य विलक्षणसामान्यवद्भिन्नत्वमर्थः। विलक्षणत्वञ्च विजातीयत्वम्। तच्च सामान्येऽप्रसिद्धमित्यतो व्याचष्टे **अपरेति**। समवेतेतरनिष्ठा-न्योन्याभावप्रतियोगितावच्छेदकसामान्यविरह इत्यर्थः। अखण्डाभावघटकतया च नावच्छेदकान्तवैयर्थ्यम्। भावत्वे सतीति विशेषणाच्च नाभावेऽतिव्याप्तिरिति भावः। **अनवस्थानात्**। अनवस्थाप्रसङ्गात्। **गुणत्वापत्ताविति**। सामान्यवतः कर्मान्यनिर्गुणस्य गुणत्वनियमादिति भावः। **समानगुणेष्विति**। नित्यद्रव्येष्विति शेषः। **विशेषान्तरा-पेक्षायामिति**। विशेषाख्यपदार्थान्तराभ्युपगमस्यापेक्षायामित्यर्थः। **अनवस्थानात्**। असिद्ध्या गुणत्वेन पदार्थान्तरत्वाभावादिति भावः।

यद्वा गुणत्वापत्तौ इत्यस्य तद्वारणायेति शेषः। समानगुणेषु सम्मतगुणकेषू-पगतेषु त्रिष्विति यावत्। सामान्यवतः कर्मान्यनिर्गुणस्यैव गुणत्वनियमादिति भावः। विशेषान्तरापेक्षायामिति। परस्परभेदग्रहार्थं विशेषणान्तरापेक्षायामित्यर्थः। नित्यानां तेषां गुणवत्त्वे नित्यद्रव्यत्वस्यावश्यकत्वाद् नित्यद्रव्याणां परस्परं भेदग्रहस्य च विशेषा-धीनत्वादिति भावः।

समवायस्य निःसामान्यत्वे युक्तिमाह **समवायस्येति**। तथा च समवायवृत्ति-धर्मस्य जातित्वे एकव्यक्तिवृत्तित्वमेव बाधकमिति भावः। सामान्यादिव्यवहारस्य निरुक्तोपाधेरेव सम्भवादित्येव तत्त्वम्।

[ **नित्यत्वमिति**। नित्यत्वमनन्तत्वमित्यस्य ध्वंसाप्रतियोगित्वमात्रपरत्वे ध्वसेऽतिव्याप्तिः ] तथापि ध्वंसप्रतियोग्यवृत्तिभावविभाजकोपाधिमत्त्वे तात्पर्यम्। तेषां नित्यत्वे मानमाह **तच्चेति**। नित्यत्वञ्चेत्यर्थः। **अकार्यत्वात्**। प्रागभावाप्रति-योगिभावत्वात्। **अनित्यत्वं हीति**। ध्वंसप्रतियोगितावत्त्वं हीत्यर्थः। **कार्यतया**।

प्रागभावप्रतियोगितया । **स्वव्याप्यमनित्यत्वमिति** । स्वव्याप्यं ध्वंसप्रतियोगितावत्त्वमित्यर्थः । तत्र भावत्वाभावस्य बाधितत्वात् ध्वंसप्रतियोगित्वाभावः सिद्धयतीति भावः । **निवृत्तं स्यादिति** । विनष्टं स्यादित्यर्थः । **कारणाभावादिति** । अकारणभावादित्यर्थः । **निराश्रयम्** । निष्कारणम् । कारणाभावेनेति यावत् । **किमपीति** । तज्जन्यकार्यं किमपि न स्यादित्यर्थः । सामान्यस्य कार्यं सामान्यप्रत्यक्षम्, समवायस्य कार्यं सन्निकर्षविधया गुणादिप्रत्यक्षम्, कारणतावच्छेदकसम्बन्धविधया घटादिरपि विशेषस्य कार्यम् । ज्ञायमानलिङ्गविधया व्यावृत्तिधीरिति भावः ।

नन्वर्थशब्दाभिधेयत्वम् अर्थशब्दवाच्यत्वम् । तच्च सामान्यादिष्वपि वर्त्तते । अर्थपदयोः पर्यायत्वादित्यतो व्याचष्टे **स्वसमयेति** । वैशेषिकसङ्केतसम्बन्धेन अर्थशब्दवाच्यभिन्नत्वमित्यर्थः । **कारणानपेक्षत्वमिति** । सकारणकभिन्नत्वमित्यर्थः । यद्यपीदं नित्यद्रव्यादावतिव्याप्तम्, तथापि सकारणकावृत्तिभावविभाजकोपाधिमत्त्वमित्यर्थः । तेन नित्यद्रव्यादौ नातिव्याप्तिरिति तात्पर्यम् ।

**तद् यथा अनित्यधर्मत्वमविशेषाणामेव । नित्यत्वमकर्मणामेव । अयोगिप्रत्यक्षत्वं द्रव्यादीनां चतुर्णामेव । असमवायिकारणत्वं गुणकर्मणोरेव । असमवेतत्वं नित्यद्रव्यसमवाययोरेवेति ।**

**अनित्यधर्मत्वमिति** । अनित्यसमवेतत्वमित्यर्थः । यद्यपीदं नित्यद्रव्यमात्रवृत्तिगुणादौ चाव्यापकम् तथापि अनित्यसमवेतवृत्तिभावविभाजकोपाधिमत्त्वे तात्पर्यम् । **नित्यत्वमिति** । नित्यवृत्तिभावविभाजकोपाधिमत्त्वम् । **अयोगिप्रत्यक्षत्वमिति** । लौकिकप्रत्यक्षविषयवृत्तिभावविभाजकोपाधिमत्त्वमित्यर्थः । तेन अयोगिनामुपनीतभानादिकमादाय विशेषसमवाययोर्नातिव्याप्तिः । न वा अतीन्द्रियद्रव्यादावतिव्याप्तिः । **असमवायिकारणत्वमिति** । समवायद्वय(?) घटितसामानाधिकरण्यप्रत्यासत्त्या कारणत्वमित्यर्थः । यद्यपीदं न सकलगुणसाधारणम्, तथापि तादृशकारणवृत्तिभावविभाजकोपाधिमत्त्वे तात्पर्यम् । **असमवेतत्वमिति** । स्वेतरसमवायसम्बन्धेन वृत्तिमद्भिन्नत्वमित्यर्थः, तेन समवायस्य स्वात्मकविशेषणतासम्बन्धेन वृत्तित्वाभ्युपगमेऽपि न क्षतिः ।

**इदानीं द्रव्याणामेव साधर्म्यं वैधर्म्यञ्चाह पृथिव्यादीनामिति । कियतामित्यत आह नवानामपीति । अपरिभिव्याप्तौ । द्रव्यत्वयोगो द्रव्यसमवायः । द्रव्यत्वमित्येतावति वक्तव्ये योगग्रहणमुपलक्षणनियमार्थम् । अपरिच्छिन्नदेशत्वात् सामान्यसमवाययोः कथमत्रैवेदं नान्यत्रेति प्रत्यय इति केचिच्चोदयन्ति । तत्रेदम् अत्रैव द्रव्यत्वं वर्त्तते, नान्यत्र यत इत्युच्यते । अयमेव हि द्रव्यत्वस्य स्वभावः एतच्च द्रव्यत्वं समवाय-**

**मभिव्यञ्जयेदेताभिर्व्यक्तिभिः सह न रूपादिव्यक्तिगुणत्वञ्च रूपादिव्यक्तीरादाय पृथिव्यादिव्यक्तोरित्यादि वक्ष्यते ।**

**इदानीमिति ।** द्रव्यतदितरसाधारणसाधर्म्याभिधानानन्तरमित्यर्थः । अपिशब्दसमुच्चेयान्तरस्याभावादाह **अपिरिति । उपलक्षणनियमार्थम् ।** आश्रयनियमबोधनार्थम् । द्रव्यादीनां नवानामेवेत्यवधारणबोधनार्थमिति यावत् । उपलक्ष्यते वक्ष्यतेऽनेनेति व्युत्पत्त्या उपलक्षणपदस्याश्रयपरत्वात् ।

ननु तद्बोधनस्यैव किं प्रयोजनमित्यत आह **अपरिच्छिन्नेति ।** द्रव्यगुणकर्मसु-त्रिष्वेव सत्त्वादित्यर्थः । **सामान्यसमवाययोरिति ।** द्रव्यत्वरूपसामान्यस्य तत्समवायस्य चेत्यर्थः । समवायस्यैकत्वादिति भावः । **अत्रैव ।** पृथिव्यादि नवस्वेव । **इदम् ।** द्रव्यत्वम् इति नियमप्रत्ययः । **तत्रेदमिति ।** तत्रेदमुच्चत इति योजना । इदमित्येव विवृणोति **अत्रैवेति ।** नन्वत्रैव किं बीजमित्यत आह **अयमिति । द्रव्यत्वस्य स्वभाव इति ।** द्रव्यत्वे गुणत्वाद् विशेष इत्यर्थः । एतच्च द्रव्यत्वं समवायमभिव्यञ्जयेदिति पाठः । समवायसम्बन्धनिरूपिताधेयतां प्राप्तवदित्यर्थः । स्वसमवायमिति पाठस्तु प्रामादिकः । स्वत्वान्तर्भावस्य व्यर्थत्वात् । **एताभिर्व्यक्तिभिरिति ।** पृथिव्यादिनवव्यक्तिनिरूपितमित्यर्थः । एवमग्रेऽपि ।

**केचित्तु** नन्विदमेकार्थसमवायसम्बन्धेन द्रव्यत्वस्य गुणादेरपि वृत्तेरित्यत आह **अयमेवेति ।** द्रव्यत्वस्वभावो द्रव्यत्वेऽभ्युपगमः । यद्वा द्रव्यत्वस्वभावः अत्रैवेदं नान्यत्रेति द्रव्यत्वविशेष्यकप्रतीतेर्विषय इति व्याचख्युः ।

तदसत् । गुणत्वञ्चेति ग्रन्थासङ्गतेः ।

**द्रव्यत्वमेव नास्ति गोत्वादिवदनुपलब्धेरिति केचित् । तन्न । कार्याश्रयतोपलक्षणेन साधर्म्येणाभिव्यक्तस्य सामान्यस्य सास्नादिसंस्थानाभिव्यक्तगोत्ववदेव प्रतीतेः । अन्यथा कार्याश्रयत्वमपि सामान्यानियतं नवस्वेव न स्यात् । कारणत्वं हि सामान्येन नियम्यते, कार्यत्वञ्च । तच्च स्वाभाविकमबाधनात् । बाधने च औपाधिकमिति विशेषः ।**

शङ्कते **द्रव्यत्वमेवेति ।** यद्यपि सिद्ध्यसिद्धिव्याघातः । अनुपलब्धेर्विषयत्वाभावस्य हेतावसिद्धिः । साधनविकलश्च दृष्टान्तः । तथापि द्रव्यपदप्रवृत्तिनिमित्तं तावदुभयवादिसिद्धम् । तज्जातिः गुणवत्त्वलक्षणोपाधिर्वेत्येव विवादः । तथा च **द्रव्यत्वं** द्रव्यपदप्रवृत्तिनिमित्तम् । **नास्ति** आधेयतासम्बन्धेन जातित्वे नास्ति । न जातिरिति यावत् । **अनुपलब्धेः ।** स्वरूपतो लौकिकप्रत्यक्षाप्रकारत्वात् । गोत्ववदिति व्यतिरेके दृष्टान्तः । न च मनस्त्वघ्राणत्वादि अतीन्द्रियमात्रवृत्तिजातौ व्यभिचार, ऐन्द्रियकसमवेतत्वे सतीति विशेषणात् ।

वस्तुतस्तु स्वरूपतः प्रत्यक्षाप्रकारत्वादित्येव हेतुर्न तु लौकिकत्वं निवेशनीयम्। तथाच मनस्त्वादावप्युपनीतभानमादायैव तादृशप्रकारत्वसत्त्वाद् हेत्वभावादेव न व्यभिचार इति तत्त्वम्।

**कार्याश्रयतोपलक्षणेनेति।** जन्यसत्सामान्यसमवायिकारणतानिष्ठेनेत्यर्थः। **साधर्म्येण।** समवायिकारणतात्वरूपधर्मेण। **अभिव्यक्तस्य।** अवच्छेदकतया सिद्धस्य। **सामान्यस्य।** द्रव्यत्वाख्यसामान्यस्य। योग्यव्यक्तिवृत्तितया निर्विकल्पकानन्तरमिति शेषः। **प्रतीतेः।** स्वरूपतः प्रतीतेः। तथा च हेतुः स्वरूपासिद्धः। तस्यैव लाघवेन द्रव्यपदप्रवृत्तिनिमित्तत्वादिति भावः।

ननु जन्यसत्तावच्छिन्नं प्रति समवायिकारणताया अवच्छेदकमवश्यक्लृप्तसत्त्वमेव वक्तव्यम्। किं जात्यन्तरेणेत्यत आह **अन्यथेति।** सत्ताया एव जन्यसत्त्वावच्छिन्नं प्रति समवायिकारणताया अवच्छेदकत्वे इत्यर्थः। **कार्याश्रयत्वमपीति।** जन्यसत्सामान्यसमवायिकारणत्वमपीत्यर्थः। **सामान्यानियतम्।** पृथिव्यादिनवमात्रवृत्तिधर्मानवच्छिन्नम्। न च तथापि गुणवत्त्वमेव तदवच्छेदकमस्तु, किमतिरिक्तजात्येत्यत आह **कारणत्वं हीति।** **सामान्येन।** धर्मेण। **नियम्यते।** अवच्छिद्यते। **स्वाभाविकम्।** जातिरूपम्। **अबाधनात्।** बाधकाभावात्। **बाधने चेति।** जातौ बाधकसत्त्वे चेत्यर्थः। **औपाधिकम्।** उपाधिस्वरूपम्। जातिभिन्नमिति यावत्।

**व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।**
**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥**

**व्यञ्जकधर्माननुपादाय जातिनिराकरणे गोत्वादिकमपि न स्यात्। नहि सास्नासम्बन्धाद्यनवभासेनैकस्य कस्यचिद् गौरित्यादिप्रत्ययः। तस्मादस्ति द्रव्यत्वम्।**

जातौ बाधकमेव किं किं तदाह **व्यक्तेरिति।** **व्यक्तेरभेदः।** एकव्यक्तिमात्रसमवेतत्वं व्यक्तिद्वयासमवेतत्वमिति यावत्। यथा आकाशादिपदप्रवृत्तिनिमित्तमिति भावः। **तुल्यत्वमिति।** तत्तज्जातितुल्यव्यक्तिसमवेतधर्मो न तु तज्जातिभिन्नजातीत्यर्थः। यथा निष्क्रमणपदप्रवृत्तिनिमित्तं न प्रवेशनपदप्रवृत्तिनिमित्तजातिभिन्नजातिः। यथा वा बुद्धिपदप्रवृत्तिनिमित्तं न ज्ञानपदप्रवृत्तिनिमित्तजातिभिन्नजातिरिति भावः। एतच्चासति भेदसाधकप्रमाणे बोध्यम्। तत्सत्त्वे तु तुल्यव्यक्तिद्वयोरपि जातिद्वयत्वमुपेयत एव। अत एव विल्वपरिमाणतत्तुल्यद्रव्यपरिमाणेषु पर्वतपरिमाणावधिकापकर्षसर्वपर्वततुल्यद्रव्यपरिमाणावधिकप्रकर्षरूपजातिद्वयं तुल्यव्यक्तिकमपि विभिन्नं स्वीक्रियते। अत एव तुल्यव्यक्तिकयोर्जातिद्वयत्वानभ्युपगमे मानाभावो मूलमिति **पक्षधरमिश्रभट्टाचार्यप्रभृतयः।** **सङ्करः।** परस्परात्यन्ताभावसमानाधिकरणत्वे सति एकाधिकरणवृत्तित्वम्। तत्तज्जातिपरस्परात्यन्ताभावसमानाधिकरणत्वे

सति तत्तज्जातिमन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमिति यावत्। अत एव पृथिव्यादिपञ्चकसाधारणभूतपदप्रवृत्तिनिमित्तं न जातिः। मूर्त्तत्वजात्या सङ्कीर्णत्वादित्याद्युदाहरणम्। **प्रकाशकृतस्तु** यथा निष्क्रमणत्वप्रवेशनत्वे न जाती, परस्परात्यन्ताभावसमानाधिकरणत्वे सति परस्परसमानाधिकरणत्वादित्युदाहरणमित्याहुः।

तदसत्। निष्क्रमणप्रवेशनयोः परस्परात्यन्ताभावसामानाधिकरण्यविरहात्। न च तत्र निष्क्रमणत्वप्रवेशनत्वपदं वाराणसीनिष्क्रमणत्वप्रयागप्रवेशनत्वपरमिति वाच्यम्, तयोर्विशिष्टयोरेव जातित्वम्। साङ्कर्यलक्षणे वास्तविकजातीनामेव प्रातिस्विकरूपेण घटकत्वादिति ध्येयम्।

**अनवस्थितिः**। स्वाधिकरणे स्वस्यानवस्थितिरभावः। अव्याप्यवृत्तित्वमिति यावत्। यथा ( उपेक्षत्वादि ? )। **प्राञ्चस्तु** अनवस्थितिरनवस्था। अत एव क्लृप्तनिखिलजातिनिष्ठजातित्वं जातित्वोपरिक्लृप्तसकलजातिम..........न्तर्भाव्य च वैजात्यान्तरमित्यादिक्रमेण जातिबाधककल्पनमित्याहुः। तदसत्। अनवस्थापदार्थस्य दुर्वचत्वात्।

**रूपहानिरिति**। नित्यत्वहानिरित्यर्थः। यथा संयोगादिरिति भावः। **असम्बन्धः**। असमवेतत्वम्। अत एव न अभावत्वादिकं जातिरिति भावः। **जातिबाधकसंग्रह इति**। स्वभावनियतत्वेन प्रामाणिकैः कथित इत्यर्थः।

गुणवत्त्वरूपव्यञ्जकधर्मेणान्यथासिद्धौ बाधकान्तरमाह **व्यञ्जकेति**। **गोत्वादिकम्**। गोपदप्रवृत्तिनिमित्तादिकम्। **न स्यात्**। जातिर्न स्यात्। गौरित्यादिप्रत्यक्षस्य सास्नादिवत्त्वेनैवोपपत्तेरिति भावः। ननु सास्नाद्यप्रतिसन्धानेऽपि गौरित्यादिप्रत्यक्षोदयान्न तेन तस्योपपत्तिरित्यत आह **न हीति**। **गौरित्यादिप्रत्यय इति**। गौरित्यादिसाक्षात्कार इत्यर्थः। सास्नादिमत्त्वस्य गोत्वादिव्यञ्जकत्वादिति भावः। **तस्मादिति**। **अस्ति**। भवति। **द्रव्यत्वम्**। द्रव्यपदप्रवृत्तिनिमित्तम्। जातिरिति शेषः।

**स्वात्मन्यारम्भकत्वं स्वसमवेतकार्यत्वं समवायिकारणत्वमित्यर्थः। गुणवत्त्वं गुणसमवायः। तदेतद् द्वयं निमित्तव्यवस्थापकम्। द्रव्यत्वन्तु द्रव्यव्यवहारनिमित्तमित्यवधेयम्।**

ननु स्वात्मन्यारम्भकत्वं स्वजनकत्वं तच्चाप्रसिद्धम्। स्वस्य स्वाजनकत्वादित्यतो व्याचष्टे **स्वसमवेतेति**। गुणवत्त्वमित्यत्र सादृश्ये 'वति' भ्रमनिरासाय **गुणसमवाय इति**। समवायिकारणत्वगुणवत्त्वयोर्द्रव्यत्वसमनियतत्वेऽपि न तयोर्द्रव्यपदप्रवृत्तिनिमित्तत्वमित्याह **तदेतदिति**। निमित्तसमव्यापकमेव। **द्रव्यत्वन्त्विति**। लाघवादिति भावः।

**कार्यकारणाविरोधित्वम्। कार्यकारणयोरन्यतरेणापि द्रव्यजातीयं न निरुध्यत इत्यर्थः।**

ननु कार्यकारणाविरोधित्वं कार्यकारणाधिकरणसमवेतत्वम्। असामानाधिकरण्यस्य विरोधपदार्थत्वात्। तथा च नित्यद्रव्येऽव्याप्तिरित्यतो व्याचष्टे **कार्येति**। **न निरुध्यते**। न नाश्यते। यथा शब्दो गुणः कार्येण शब्देन नाश्यते। कर्म च उत्तरसंयोगेन, तथा अन्त्यः शब्दः कारणेन शब्देन नाश्यते। न तथा द्रव्यजातीयम्, किन्तु समवायिकारणासमवायिकारणान्यतरनाशेन, केवलासमवायिकारणनाशेनैव वा द्रव्यनाश इत्यर्थः। समवायिकारणनाशावयवद्वयविभागान्यतरेण द्रव्यनाश इत्यपि केचित्। तत्त्वं पुनरस्मत्कृते **सिद्धान्तरहस्येऽ**नुसन्धेयम्।

इत्थं यद्यपि द्रव्यमपि कारणनाश्यं घटादिनाशस्य घटादिहेत्वदृष्टजन्यत्वात्। एवं द्रव्यमपि कार्यनाश्यं शरीरनाशस्य तज्जन्यादृष्टादिप्रयत्नखड्गाभिघातादिजन्यत्वात्। तथापि कारणनाश्यत्वपदेन स्वानिमित्तकारणनाश्यत्वं विवक्षितम्। तच्च न क्वापि द्रव्ये। न च घटादिनाशस्याश्रयतया कपालादिजन्यत्वेन द्रव्यमपि निमित्तेतरस्वकारणनाश्यमिति वाच्यम्, आश्रयतातिरिक्तरूपेण निमित्तेतरस्वकारणनाश्यत्वस्य विवक्षितत्वात्। अधिकरणस्य नाशहेतुत्वे मानाभावाच्च। न च तथापि नित्यगुणादावतिव्याप्तिरिति वाच्यम्, निमित्तेतरस्वकारणनाश्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वान्न कोऽपि दोषः।

**केचित्तु** ज्ञातृधर्मेतरगुणनाश्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं समुदायार्थः। अदृष्टप्रयत्नभगवज्ज्ञानादिवारणायात्मधर्मेतरेति गुणविशेषणम्। न च क्वचिद्द्रव्यस्य आरम्भकसंयोगप्रतिद्वन्द्विविभागादपि नाशादसम्भव इति वाच्यम्, असमवायिकारणनाशस्यैव द्रव्यनाशकतयावयवविभागस्य द्रव्यानाशकत्वादित्याहुः।

**अन्त्यविशेषवत्त्वम्। एतद्द्रव्यजातीयस्यैव सम्भवतीत्यर्थः। अथवान्यत्रावयविद्रव्येभ्य इति भविष्यति।**

**अनाश्रितत्वमाधारैकस्वभावता। नित्यत्वं द्रव्यत्वे सतीति बोध्यम्। चकाराद् विपर्ययेण विशेषरहितद्रव्यत्वम्। आश्रितद्रव्यत्वमनित्यद्रव्यत्वञ्चान्यत्र नित्यद्रव्येभ्य इति।**

**पृथिवीत्यादि। अनेकत्वं बहुत्वसंख्या। अपरजातिमत्त्वमपराजातिः पृथिवीत्वादिका। तद्वत्ता तत्समवायः। संस्कारवत्ता चेति द्रष्टव्यम्।**

अन्त्यविशेषवत्त्वमिति भाष्यग्रन्थः। नन्विदमनित्यद्रव्येऽव्याप्तमित्यत आह **एतदिति**। तथा च विशेषवद्वृत्तिसत्तेतरजातिमत्त्वं विवक्षितमिति भावः। **भविष्यति**। अग्रे भविष्यति। तथा च तद्विरहादपि योजनीयमतो नाव्याप्तिरिति भावः।

अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्य इति भाष्यम्। अवयविद्रव्यभिन्ने द्रव्येऽनाश्रितत्वनित्यत्वे स्त इत्यर्थः। नन्वनाश्रितत्वमसमवेतत्वम्। तच्चाभावेऽप्यस्तीत्यतो व्याचष्टे **आधारेति**। समवायसम्बन्धनिरूपिताधेयतानाश्रयत्वे सति समवायसम्बन्धनिरूपिताधारताश्रयत्वमित्यर्थः। परमाण्वादेरपि संयोगादिना वृत्तेरव्याप्तिवारणाय प्रथमं निरूपितान्तम्, अभावस्यापि विशेषणताविशेषादिनिरूपिताधारताश्रयत्वादतिव्याप्तितादवस्थ्यमतो द्वितीयं तदिति भावः। गुणादावतिव्याप्तिमाशङ्क्याह **द्रव्यत्वे सतीति**।

**अनेकत्वमिति!** नन्वनेकत्वमेकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम्। तच्च न पृथिव्यादावतो व्याचष्टे **बहुत्वसंख्येति**। यद्यप्याकाशादिष्वपि पदार्थान्तरमन्तर्भाव्य बहुत्वमस्ति, तथापि स्वानधिकरणावृत्तिबहुत्वसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वे, स्वसमानाधिकरणद्रव्यविभाजकोपाधिमदन्यवृत्तिबहुत्ववत्त्वे वा तात्पर्यम्। **अपरजातिमत्त्वमिति**। नन्वपरजातिमत्त्वं समवेतवन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकजातिमत्त्वम्। तच्चाकाशादावप्यस्ति। तादृशजातेर्द्रव्यत्वस्यैव तत्र सत्त्वादित्यतो व्याचष्टे **पृथिवीत्वादिकेति**। तथा च अपरजातिपदं द्रव्यनिष्ठान्योन्याभावप्रतियोगितावच्छेदकद्रव्यवृत्तिजातिपरमिति भावः। कालिकादिसम्बन्धेन च तद्वत्त्वं कालदिशोरप्यस्तीत्यतो व्याचष्टे **तद्वत्तेति**। **संस्कारवत्ता चेति**। पृथिव्यादिचतुर्णां वेगस्थितिस्थापकवत्त्वादात्मनो भावनावत्त्वान्मनसो वेगवत्त्वादिति भावः। न चेश्वरात्मन्यव्याप्तिः। संस्कारवद्वृत्तिद्रव्यनिष्ठान्योन्याभावप्रतियोगितावच्छेदकजातित्वस्य विवक्षितत्वात्। गुणकर्मातिव्याप्तिवारणाय वृत्त्यन्तं जातिविशेषणम्। आकाशसंयोगवारणाय जातीति।

**क्षितीत्यादि। क्रिया स्पन्दस्तद्वत्ता। मूर्त्तत्वमसर्वगतपरिमाणयोगः। परत्वापरत्वे गुणविशेषौ वक्ष्येते। वेगः संस्कारविशेषस्तद्वत्ता।**

**आकाशेत्यादि। सर्वगतत्वं पूर्वोक्तेषु सर्वेषु गतत्वं सम्बन्धः। परममहत्त्वं प्रकर्षकाष्ठाप्राप्तमहत्परिमाणयोगः। नन्वियत्ता परिमाणमिति चेन्न। संख्यागुरुत्वयोरपि तथाभावप्रसङ्गात्। हस्तवितस्त्यादिपरिकल्पनाभावे परमाणुषु तदभावप्रसङ्गाच्च। तदभावेऽपि परमसूक्ष्मत्वात् परिमित एव परमाणुरिति चेन्न। तदभावेऽपि परममहत्त्वात् परिमितमेवाकाशादीति न कश्चिद्विशेषः। तस्माद् हस्तवितस्त्यादिप्रकर्षवानितरेभ्यो व्यावृत्तः परस्परमनुवृत्तश्च गुणविशेषः प्रत्यक्षसिद्धो दुरपह्नवः। तस्य निकर्षकाष्ठया परमाणुत्वं तथा प्रकर्षकाष्ठया परममहत्त्वमपि समाना इति।**

**सर्वसंयोगिसमानदेशत्वम्। सर्वेषां संयोगिनां मूर्त्तानां संयोगवृत्त्या आकाशादयो देशास्तेषां भावस्तत्त्वम्। पूर्वमाकाश एव सर्वमूर्त्तेषु वर्त्तत**

**इत्युक्तम् । सम्प्रति तु त एवाकाशादिषु वर्त्तन्त इत्यपौनरुक्तम् । अथवा पूर्वं मूर्त्तसंयोगा एव आकाशादिषु वर्त्तन्त इत्युक्तम् । सम्प्रति तु मूर्त्ता एव नभःप्रभृतिषु वर्त्तन्त इत्यपौनरुक्तम् । चकारात् क्रियापरत्वापरत्ववेगविरहः ।**

धात्वर्थः क्रियातिव्यापिकेत्यन्यथा व्याचष्टे **क्रियेति** । न च निष्क्रियविनष्टेऽव्याप्तिः । स्पन्दवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यात् । **मूर्त्तमिति** । ननु मूर्त्तत्वं लौकिकसाक्षात्कारविषयत्वम् । तच्च मनसि अतीन्द्रियक्षित्यादौ चाव्यापकमित्यतो व्याचष्टे **असर्वेति** । परममहत्परिमाणेतरपरिमाणयोग इत्यर्थः । परत्वापरत्वे व्याप्यव्यापकभावावतिव्यापकावित्यन्यथा व्याचष्टे **परत्वेति** । न च बहुतन्तुकपटजनकान्त्यतन्तुसंयोगोत्पाददशायां तन्त्वन्तरे क्रियोत्पादक्रमेण संयोगवशात् पटोत्पत्तितृतीयक्षणे च असमवायिकारणदिक्पिण्डसंयोगस्य पूर्ववर्त्तित्वाभावादीश्वरापेक्षाबुद्ध्यापि परत्वाद्युत्पादासम्भवादव्याप्तिरिति वाच्यम् । परत्वादिमद्वृत्तिद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकजातिमत्त्वे तात्पर्यात् ।

ननु सर्वगतत्वं सर्वमूर्त्तनिष्ठसंयोगजनकक्रियावत्त्वम् । तच्चाकाशादावसम्भवीत्यन्यथा व्याचष्टे **सर्वेति** । **सम्बन्धः** । संयोगाख्यः । तथा च [स्वप्रतियोग्यसंयोगमूर्त्तवृत्त्यत्यन्ताभावप्रतियोगिद्रव्यत्वम्] सर्वगतत्वमिति भावः । ननु परमत्वे सति महत्त्वं कर्मधारयोत्तरभावप्रत्ययात् । परमत्वञ्च प्रकृष्टत्वम् । तच्चाकाशादौ बाधितम् । द्रव्ये प्रकर्षापकर्षानभ्युपगमादित्यतो व्याचष्टे **प्रकर्षकाष्ठाप्राप्तेति** । अपकर्षानाश्रयेत्यर्थः । न च ज्ञानसुखाद्यपेक्षया गगनादिमहत्त्वमप्यपकर्षाश्रय इति वाच्यम्; ज्ञानसुखादिभ्यो महत्त्वमपकृष्टमिति व्यवहाराभावेन तदवधिकापकर्षस्य महत्त्वनिष्ठत्वे मानाभावादिति भावः । [स्वसमानजातीयबाधकत्वेनापकर्षो विशेषणीयः] इति तु **प्रकाशः** ।

आकाशादौ कथं परिमाणयोग इत्यभिप्रायेणाशङ्कते **नन्विति** । **इयत्ता** । इयत्पदप्रवृत्तिनिमित्तम् । **परिमाणम्** । परिमाणपदशक्यम् । इयत्पदप्रवृत्तिनिमित्तञ्च हस्तत्ववितस्तित्वादिकम् । तस्य च गगनादौ बाधितत्वात् कथं तत्प्रवृत्तिनिमित्तमेवेत्यत आह **हस्तेति** । हस्तत्ववितस्तित्वाद्यभावेनेत्यर्थः । **परमाणुष्विति** । परमाणोरपि परिमितत्वस्याभावप्रसङ्गादित्यर्थः । **तदभावेऽपीति** । हस्तत्ववितस्तित्वाद्यभावेऽपीत्यर्थः । एवमग्रेऽपि । **परमसूक्ष्मत्वादिति** । प्रकर्षाश्रयाणुत्वाश्रयत्वादित्यर्थः । **परममहत्त्वादिति** । अपकर्षानाश्रयमहत्त्वादित्यर्थः । हस्तवितस्त्यादिप्रकर्षवानिति पाठः । हस्तत्ववितस्तित्वादिरूपप्रकर्षवानित्यर्थः । **इतरेभ्यः** । रूपादिभ्यः । **परस्परमनुवृत्त इति** । परस्परानुवृत्तपरिमाणत्वरूपजातिविशेषविशिष्ट इत्यर्थः । **तस्य निकर्षकाष्ठयेति** । तदवधिकप्रकर्षशून्यत्वे सति तदवधिकापकर्षवत् परिमाणमित्यर्थः । **प्रकर्षकाष्ठयेति** । तदवधिकापकर्षशून्यत्वे सति तदवधिकप्रकर्षवत्परिमाणमित्यर्थः । **समानेति** । सप्रमाणकेत्यर्थः ।

**सर्वसंयोगिसमानदेशत्वमिति** । ननु सर्वगतत्वमित्यनेन पौनरुक्त्यमित्यत आह **पूर्वमिति** । **वर्त्तते** । संयोगसम्बन्धेन वर्त्तते । एतच्च संयोगसम्बन्धेनाकाशादयोऽपि घटादौ वर्त्तन्ते, अवृत्तित्वव्यवहारश्च समवेतत्वाभावनिबन्धन इति मतेन । **वर्त्तन्त इति** । संयोगसम्बन्धेन वर्त्तन्ते इत्यर्थः । भूतले घट इत्यादिप्रतीतिवद् गगने घट इत्यादेरपि प्रतीतेरिति भावः । समवायवत् संयोगेनापि न विभूनां वृत्तिमत्त्वमिति मतेनाह **अथवेतीति** । सम्प्रदायः । वस्तुतस्तु वर्त्तत इत्यस्य सम्बन्धी भवतीत्यर्थः । वर्त्तन्त इत्यस्यापि सम्बन्धिनो भवन्तीत्यर्थः । प्रकारान्तरेण पौनरुक्त्यं निराकरोति अथवेति । **मूर्त्तसंयोगा इति** । तथा च सर्वगतत्वमित्यस्य सर्वेषां मूर्त्तानां संयोगाश्रयत्वमर्थ इति भावः । **वर्त्तन्ते इति** । संयोगसम्बन्धेन सम्बद्धाः ।

**पृथिव्यादीनामिति । भूतत्वमौपाधिकं सामान्यम् । अथ जातिरेव तत् किं न स्यात् ? न स्यात् । व्यञ्जकनियमाभावेन व्यक्तिनियमानुपपत्तेः । बहिरिन्द्रियग्राह्यगुणवत्ता तदव्यञ्जिकेति केचित् । तदा मूर्त्तत्वमपि जातिरेव स्यात् । अवच्छिन्नपरिमाणस्य व्यञ्जकस्य सद्भावात् । एवमस्तु को दोष इति चेन्न । जातिसङ्करप्रसङ्गात् । तथा हि मनसि मूर्त्तत्वं नभसि च भूतत्वं परस्परपरिहारेण वर्त्तमानं पृथिव्यादौ सङ्कीर्येत । अस्तु तर्हि पृथिवीत्वाद्यनेकनिबन्धनप्रवृत्तिरेव भूतशब्दोऽक्षादिवदिति चेन्न । एकनिमित्तकत्वे सम्भवति अनेकार्थत्वकल्पनाऽनवकाशात् । तस्माद् भोक्तव्यविषयतया भूतानि सिद्धानि प्रसिद्धानीति भूतानीत्युच्यन्ते ।**

**इन्द्रियप्रकृतित्वमिन्द्रियोपादानत्वम् । तच्च नभसोऽवच्छिन्नानवच्छिन्नभेदकल्पनयोपपादनीयम् । अन्यथा भूतेभ्य इति पञ्चमी समानतन्त्रे स्वतन्त्रे च एतन्मनसो वैधर्म्यं न स्यात् । प्रकृतिशब्दश्च स्वभावार्थो वा । तथा च मनोव्यवच्छेदाय सन्निधिसिद्धं बाह्यपदमनुसञ्जनीयम् ।**

**बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वम् । बाह्येनानात्मगुणग्राहिणा एकैकेन प्रतिनियतेनेन्द्रियेण साक्षात्कारिज्ञानसाधनेन ग्राह्या ग्रहणयोग्या ये गुणा गन्धादयः परस्परं विशेषाः व्यवच्छेदहेतवस्तद्वत्त्वम् । अत्र विवक्षाभेदेन बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वम्, बाह्येन्द्रियग्राह्यविशेषगुणवत्वं वेति बोद्धव्यम् ।**

**औपाधिकं सामान्यमिति** । जातिभिन्नो धर्मः । स चात्मभिन्नविशेषगुणवत्त्वमिति भावः । **व्यञ्जकनियमाभावेनेति** । समनियतव्यञ्जकाभावेनेत्यर्थः । **व्यक्तिः** । आश्रयः । **अस्त्विति** । तथा च पञ्चसाधर्म्यं नैकं भूतत्वमिति भावः । **एकनिमित्तकत्व इति** ।

आत्मभिन्नविशेषगुणवत्त्वरूपैकधर्मप्रवृत्तिनिमित्तकत्वे इत्यर्थः। **भोक्तव्यविषयेति**। रूपरसगन्धस्पर्शशब्दात्मकभोक्तव्यविषयाश्रयतयेत्यर्थः। **इन्द्रियोपादानत्वमिति**। इन्द्रियसमवायिकारणत्वमित्यर्थः। नन्विदमाकाशेऽव्याप्तम्, श्रोत्रस्याकाशरूपतया नित्यत्वेन तत्समवायिकारणत्वस्य तत्रासम्भवादित्यत आह **तच्चेति**। **अवच्छिन्नानवच्छिन्नेति**। कर्णशष्कुल्यवच्छिन्नाकाशतदनवच्छिन्नाकाशयोर्भेदाभ्युपगमेनेत्यर्थः। **उपपादनीयमिति**। आकाशे उपपादनीयमित्यर्थः। शुद्धाकाशस्य नित्यत्वेऽपि कर्णशष्कुल्यवच्छिन्नाकाशस्य ततोऽतिरिक्तस्य जन्यतया तत्समवायिकारणत्वस्यैव तत्र सत्त्वादिति भावः। **अन्यथेति**। इन्द्रियप्रकृतित्वमित्यस्येन्द्रियस्वरूपत्वार्थत्वे इत्यर्थः। **भूतेभ्य इतीति**। घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः इति (न्या. सू. १।१।१२) सूत्रे इत्यर्थः। **समानतन्त्रे न स्यादिति**। न्यायशास्त्रे न स्यादित्यर्थः। जन्यत्वस्य पञ्चम्यर्थत्वादिति भावः। **स्वतन्त्रे चेति**। स्वशास्त्रे चेत्यर्थः। **एतत्**। इन्द्रियप्रकृतित्वम्। **मनसो वैधर्म्यं न स्यात्**। पृथिव्यादिषु पञ्चसु मनसो भेदसाधकं न स्यादिति योजना।

ननु विशिष्टं न केवलादन्यदित्यस्वरसादाह **प्रकृतिशब्दश्चेति**। **स्वभावार्थो वेति**। स्वरूपार्थ एव वेत्यर्थः। न्यायसूत्रेऽ(१।१।१२) पि पञ्चम्या अभेद एवार्थ इति भावः। नन्वेवं मनसो भेदसाधकत्वमनुपपन्नमित्यत आह **तथा चेति**। **सन्निधिसिद्धम्**। अव्यवहितोत्तरोक्तम्। तथा च बाह्येन्द्रियस्वरूपत्वमित्यर्थः। न च तथापि घटादावव्याप्तिरिति वाच्यम्। बहिरिन्द्रियवृत्तिद्रव्यविभाजकोपाधिमत्त्वे तात्पर्यादिति भावः।

बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वमिति भाष्यग्रन्थः। बाह्यत्वमात्मभिन्नत्वम्। तथा च मनसोऽपि सत्त्वादात्मन्यतिव्याप्तिरतो व्याचष्टे **अनात्मगुणग्राहिणेति**। आत्मगुणाग्राहकेणेत्यर्थः। रूपादेरपि विभिन्नपुरुषीयचक्षुर्द्वयादिग्राह्यतयाव्याप्तिरतो व्याचष्टे **प्रतिनियतेनेति**। स्वविजातीयबहिरिन्द्रियासहकृतेनेत्यर्थः। संयुक्तत्वे सति साक्षात्प्रतीतिसाधनत्वमिन्द्रियत्वम्। तत्र शरीरसंयुक्तत्वादिप्रवेशस्य प्रकृते व्यर्थत्वाद् व्याचष्टे **साक्षात्कारीति**। अतीन्द्रियरूपादिमति चक्षुरादावव्याप्तिवारणायाह **ग्राह्या इति**। **गन्धादय इति**। आदिपदात् रसरूपस्पर्शशब्दपरिग्रहः। **परस्परेति**। स्वाश्रयसमानाधिकरणविभाजकोपाध्यवच्छिन्नेतरभेदव्याप्यतावच्छेदकगुणत्वव्याप्यजातिमन्त इत्यर्थः। यथाश्रुते चक्षुरादावव्याप्तेः।.......सत्तात्व-गुणत्व-संख्यात्वादिवारणाय ग्राह्यान्तं जातिविशेषणम्। तत्र रूपत्वादिसंग्रहाय त्वचः प्रवेशः। स्पर्शत्वादिसंग्रहाय चक्षुषः प्रवेशः। धर्मत्वाधर्मत्वयोः ज्ञानत्वादेश्च वारणाय ग्राह्यान्तं जातिविशेषणम्। प्रभात्वाश्रयप्रभाव्यक्तिमतां तदवयवानामपि लक्ष्यान्तर्गतत्वात् न तत्रातिव्याप्तिः। बहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वं द्वितीयार्थः। यथाश्रुते चक्षुरादावव्याप्तेः। सत्तागुणत्वमादायात्मन्यतिव्याप्तिवारणाय गुणत्वव्याप्येति। गुणत्वव्याप्यसंख्यात्वादिमादायातिव्याप्तिवारणाय विशेषपदमिति ध्येयम्।

**चतुर्णामिति । पृथिव्यप्तेजोवायूनाम् । द्रव्यारम्भकत्वं द्रव्यसमवायिकारणत्वम् । स्पर्शवत्त्वं स्पर्शसमवायः । उपलक्षणञ्चैतत् । अवान्तराणुत्वमहत्त्वे स्थितिस्थापकसंस्कारयोगः शरीरारम्भकत्वञ्चेति द्रष्टव्यम् ।**

चतुर्णामित्यस्य विवरणं **पृथिव्येति । द्रव्यारम्भकत्वम् ।** द्रव्यजनकत्वम् । तच्चादृष्टादौ संयोगे वास्तीत्यतो व्याचष्टे **द्रव्यसमवायिकारणत्वमिति ।** यद्यप्यन्त्यावयविन्यव्याप्तिस्तथापि द्रव्यसमवायिकारणवृत्तिद्रव्यविभाजकोपाधिमत्त्वे तात्पर्यम् । कालिकादिसम्बन्धेन स्पर्शवत्त्वं कालादावप्यस्तीत्यतो व्याचष्टे **स्पर्शसमवाय इति ।** समवाय इति समवायसम्बन्धेन स्पर्शवत्त्वमित्यर्थः । **अवान्तराणुत्वमहत्वेति ।** जन्याणुत्वजन्यमहत्त्वस्थितिस्थापकाख्यसंस्कारयोग इत्यर्थः । मनसि गगनादौ चातिव्याप्तिवारणाय जन्यत्वद्वयम् । न च तथापि अतिव्याप्तिः । जन्याणुत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे जन्यमहत्त्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे च तात्पर्यात् । **शरीरेति ।** शरीरारम्भकवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । यथाश्रुते घटादावव्याप्तेः । न च शरीरवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्येवास्तु किमारम्भकत्वनिवेशेनेति वाच्यम्, यथासन्निवेशे वैयर्थ्याभावात् ।

**त्रयाणामिति । पृथिव्यप्तेजसाम् । प्रत्यक्षत्वं बाह्येन्द्रियग्राह्यत्वम् । रूपवत्त्वं रूपसमवायः । द्रवत्ववत्त्वं द्रवत्वसमवायः । तत्रैव सम्भाव्यते चैतत् ।**

आत्मव्यावृत्त्यर्थमाह **बाह्येति ।** बाह्येन्द्रियप्रत्यक्षवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । यथाश्रुते परमाण्वादावव्याप्तेः । कालदिक्सम्बन्धेन रूपवत्त्वस्य कालदिगादावपि सत्त्वादाह **रूपसमवाय इति ।** समवायसम्बन्धेन रूपवत्त्वमित्यर्थः । एवमग्रेऽपि । द्रवत्ववत्त्वं घटादावव्याप्तमत आह **तत्रैवेति ।** पृथिव्यादिषु त्रिष्वेवेत्यर्थः । **सम्भाव्यते ।** समवायसम्बन्धेन द्रवत्ववत्त्वयोग्यता वर्त्तते । सा च द्रवत्वसमवायिवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति भावः ।

**द्वयोरिति । पृथिव्युदकयोः । गुरुत्वं तत्कार्यं पतनञ्च । रसवत्त्वम् । रसो माधुर्यादिस्तद्वत्त्वम् । आलोकप्रकाश्यत्वम् अभास्वररूपवत्वञ्चेति चार्थः ।**

.......। स्वयं पूरयति **तत्कार्यमिति ।** यद्यपीदमव्यापकं तथापि पतनसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यम् । पतनत्वञ्च गुरुत्वासमवायिकारणक्रियामात्रवृत्तिजातिविशेषः । **रस इति ।** रसपदस्येच्छापरत्वभ्रमनिरासाय व्याचष्टे **माधुर्यादिरिति । आलोकप्रकाश्यत्वमिति ।** आलोकजन्यप्रत्यक्षविषयवृत्तिद्रव्यत्व-

व्याप्यजातिमत्त्वमित्यर्थः। तेनातीन्द्रिये नाव्याप्तिः। आलोकपदं प्रभापरम्। तेन तैजसशरीरजन्यप्रत्यक्षविषयात्मनि नातिव्याप्तिः। तेजोभिन्नत्वे सतीत्यनेनापि विशेषणीयम्। तेन प्रभाप्रत्यक्षे प्रभाया विषयविधया हेतुत्वे सामान्यतो द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव प्रभाया हेतुत्वेऽपि च नातिव्याप्तिरिति ध्येयम्।

**भूतात्मनामिति। पृथिव्यादीनां पञ्चानामात्मनाञ्च। वैशेषिकगुणवत्त्वम्, आश्रयव्यवच्छेदौपयिकावान्तरसामान्यविशेषवतो वैशेषिका गुणा रूपादयो बुद्धयादयश्च तद्वत्त्वम्। उपलक्षणञ्चैतत्। प्रत्यक्षगुणवत्त्वञ्चेत्यपि द्रष्टव्यम्।**

**आश्रयेति।** आश्रयसमानाधिकरणद्रव्यविभाजकोपाध्यवच्छिन्नेतरभेदव्याप्यतावच्छेदकगुणवृत्तिजातिमन्त इत्यर्थः। न चेदं विशेषगुणलक्षणं निविडसंयोगादौ सामान्यगुणेऽतिव्याप्तमिति वाच्यम्। न ह्यत्र विशेषगुणलक्षणं प्रकृतं किन्तु पृथिव्यादिसाधर्म्यघटकतया यद्विशेषगुणवत्त्वमुक्तं तद्घटकीभूतविशेषगुणत्वमेव निरुक्तम्। तस्य च कारणसंयोगादिसाधारण्येऽपि न क्षतिरिति भावः। **प्रत्यक्षगुणवत्त्वमिति।** प्रत्यक्षगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वमित्यर्थः। तेन परमाण्वादौ नाव्याप्तिः।

**क्षित्युदकात्मनां चतुर्दशगुणवत्त्वमिति। संख्यामात्रेण साधर्म्यमेतत्। न तु गुणा विशेषतो विवक्षिताः। सम्भावितञ्चैतत्साधर्म्यं न तु व्यापकम्। परमेश्वरात्मन्यसम्भवात्। तांस्त्वग्रे गणयिष्यति।**

एकजातीयचतुर्दशगुणानां त्रिष्वभावादाह **संख्यामात्रेणेति।** ननु चतुर्दशगुणवत्त्वं विभिन्नजातीयचतुर्दशगुणवत्त्वम्। स्वाधिकरणवृत्तिचतुर्दशगुणविभाजकोपाधिपर्याप्त्यधिकरणगुणवत्त्वमिति यावत्। स्वपदं चतुर्दशत्वपरम्। यथाश्रुते व्यक्तिभेदेन चतुर्दशगुणस्य द्रव्यमात्र एव सत्त्वादतिव्याप्त्यापत्तेः। तथा च भगवदात्मन्यव्याप्तिः। तत्राष्टानामेव गुणानां सत्त्वादित्यत आह **सम्भावितेति। एतत्साधर्म्यम्।** 'चतुर्दशगुणवत्त्वमे' तत्साधर्म्यप्रतिपादकवाक्यम्। **सम्भावितम्।** सम्भावना। चतुर्दशगुणवत्त्वसम्भावना। चतुर्दशगुणवत्त्वयोग्यतेति यावत्। तस्या उपलक्षणम्। **न तु व्यापकम्।** नत्वेतत्प्रतिपादितचतुर्दशगुणवत्त्वं निखिललक्ष्यव्यापकमित्यर्थः। तद्योग्यता च निरुक्तचतुर्दशत्वपर्याप्त्यधिकरणगुणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति भावः।

केचित्तु उष्णस्पर्शासमानाधिकरणप्रत्यक्षद्रव्यवृत्तिजातिमत्त्वं तद्योग्यता। सत्ताद्रव्यत्वतेजस्त्वादिवारणाय असमानाधिकरणान्तं जातिविशेषणमित्याहुः।

**तांस्तु।** क्षित्यादीनां चतुर्दशगुणांस्तु। **अग्रे।** पृथिव्यादिप्रत्येकग्रन्थे।

**आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वमिति। क्षणिका आशुतरविनाशिनः। एकदेशवत्तयोऽव्याप्यवृत्तयो विशेषा ये स्वाश्रयव्यव-**

**च्छेदाय गुणास्तद्वत्त्वम् । अत्रापि विवक्षाभेदादेकदेशवृत्तिविशेषगुण-वत्त्वम्, क्षणिकविशेषगुणवत्त्वञ्चेत्यपि द्रष्टव्यम् । आकाशे तादृशो गुणः शब्दः । आत्मनि बुद्ध्यादिः ।**

क्षणिकत्वं स्वाधिकरणवृत्तिध्वंसप्रतियोग्यवृत्तित्वम् । तस्य च महाप्रलये, आचार्यनयेऽन्त्यशब्दे च सत्त्वेऽपि ज्ञानादावभावादव्याप्तिरित्यतो व्याचष्टे **आश्विति ।** चतुर्थक्षणवृत्तिध्वंसप्रतियोगिन इत्यर्थः । तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वस्यैतदर्थत्वे क्षणिकत्वघटितलक्षणे विशेषपदवैयर्थ्यापत्तेः । **अव्याप्यवृत्तय इति ।** समवायसम्बन्धेन देशावच्छिन्नवृत्तय इत्यर्थः । समुदितस्य साधर्म्यत्वे एकदेशवृत्तित्वक्षणिकत्वा-न्यतरविशेषणवैयर्थ्यमत आह **अत्रापीति । विवक्षाभेदात् ।** साधर्म्यद्वये तात्पर्यात् । **एकदेशवृत्तीति ।** रूपादिमादाय पृथिव्यादावतिव्याप्तिवारणाय वृत्त्यन्तं गुणविशेषणम् । समवायसम्बन्धेन देशावच्छिन्नवृत्तिकत्वं तदर्थः । नातस्तद्दोषतादवस्थ्यम् । संयोगा-दिमादायातिव्याप्तिवारणाय विशेषत्वं गुणविशेषणम् । न चैवमीश्वरात्मन्यव्याप्तिरिति वाच्यम्; तादृशविशेषगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वस्य विवक्षितत्वात् । **क्षणिकविशेषेति ।** रूपादिमादायातिव्याप्तिवारणाय क्षणिकत्वं गुणविशेषणम् । द्वित्वादेरपि निरुक्तक्षणिकत्वात् तमादायातिव्याप्तिवारणाय विशेषेति ।

यद्यपीदमीश्वरात्मन्यव्याप्तमतिव्याप्तञ्च पृथिव्यादौ, रूपादेरपि पटारम्भक-संयोगोत्पत्तिकाले तन्तौ कर्मोत्पत्तिक्रमेण पटनाशात् तृतीयक्षण एव नाशसम्भवात् । तथापि क्षणिकमात्रवृत्तिजातिमद्विशेगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वस्य त्रिवक्षि-तत्वाददोषः ।

**दिक्कालयोः पञ्चगुणवत्त्वमिति । संख्यापरिमाणपृथक्त्वसंयोग-विभागाः पञ्चैव गुणा दिशि काले च । सर्वोत्पत्तिमतां निमित्तकारण-त्वञ्च । तत्समवेतद्वित्वद्विपृथक्त्वादिसंयोगविभागवर्जं सर्वाण्युत्पत्तिमन्ति गृह्यन्ते । तेषां निमित्तकारणं दिक्कालौ । न हि दिक्कालानपेक्षं किञ्चि-दुत्पद्यते । तथा च व्यपदिश्यन्ते इहेदानीं जात इति । गेहे जातो गोष्ठे जात इत्यनिमित्तमपि गेहादिव्यपदिश्यत इति चेन्न । तस्याप्यधिकरणतया निमित्तत्वात् । न ह्यधिकरणमकारणमिति ।**

**यद्येवं सम्प्रदानत्वेनादृष्टद्वाराधिष्ठातृतया च आत्मनामपि सर्वोत्पत्ति-मन्निमित्तकारणत्वमप्यस्ति । तत्कथमनयोरेवोपन्यास इति चेत् ? सत्यम् । अधिकरणतया तु सर्वोपत्तिनिमित्तत्वं विवक्षितम् । यथा हि दिक्कालोपाध्य-धिकरणा सर्वस्योत्पत्ति नैवमात्मौपाध्यधिकरणेति । परत्वापरत्वानुमेयत्व-ञ्चार्थः ।**

ननु संख्यादिपञ्चगुणवत्त्वं पृथिव्यादावप्यस्तीत्यतो व्याचष्टे **संख्येति**। **पञ्चै-वेत्येवकारात्** तदितरगुणव्यवच्छेदः। तथा च संख्याद्यतिरिक्तगुणवद्भिन्नद्रव्यत्वं तयोः साधर्म्यमिति भावः। सर्वोत्पत्तिमतां निमित्तकारणत्वमिति भाष्यग्रन्थः। ननु दिक्कालयोर्न सर्वोत्पत्तिमन्निमित्तकारणत्वम्। दिक्कालसमवेतानामनेकत्वसंख्यानेक-पृथक्त्वसंयोगविभागानामपि सर्वान्तर्गततया तत्र तयोः समवायिकारणत्वेन निमित्त-कारणत्वाभावादित्यत आह **तत्समवेतेति**। दिक्कालसमवेतेत्यर्थः। एतच्चापाततः। समवायिकारणत्वेऽपि निमित्तकारणत्वे बाधकाभावात्। दिक्कालयोस्तेषां निमित्त-कारणत्वे युक्तिमाह **न हीति**। **तथा चेति**। न चेत्यर्थः (?) **इहेति**। न चेति शेषः। (?) अन्यथा तत्र जन्यत्वस्य सप्तम्यर्थतया तद्वाक्यमयोग्यं स्यादित्यभिमानः। शङ्कते **गेह इति**। **व्यपदिश्यत इति**। सप्तम्यन्तेन व्यपदिश्यते। तथा च तत्र यथा जन्यत्वं न सप्तम्यर्थस्तथेहेदानीं जात इत्यत्रापीति भावः। **न ह्यधिकरणमिति**। एतच्चापाततः। इह गवि गोत्वमित्यादौ व्यभिचारात्। तावता दिक्कालोपाधेः कारणत्वसिद्धावपि महाकालदिशोस्तज्जनकत्वे मानाभावाच्च।

अतिव्याप्तिमाशङ्कते **यद्येवमिति**। यदि यथाकथञ्चित् निमित्तकारणत्वमेव साधर्म्यघटकमित्यर्थः। **सम्प्रदानत्वेनेति**। सम्प्रदानत्वेन क्वचिद् अदृष्टद्वारा क्वचिदधिष्ठा-तृतयेत्यर्थः। ब्राह्मणसम्प्रदानकदानात् पुत्राद्युत्पत्तेः, पुत्रादिकं प्रति ब्राह्मणात्मक-सम्प्रदानत्वेन हेतुत्वात्। अधिष्ठातृत्वञ्च उपादानगोचरापरोक्षज्ञानेच्छादिमत्त्वमिति भावः। **दिक्कालोपाधीति**। उपाधिर्धर्मी। **परत्वेति**। परत्वासमवायिकारणसंयोगा-श्रयविभुत्वम्, अपरत्वासमवायिकारणसंयोगाश्रयविभुत्वञ्चेत्यर्थः। गगनादिनिष्ठसंयोग-स्यापि कालत्वेन परत्वादिकारणत्वादसमवायीति। असमवायिकारणञ्च समवाय-घटितसामानाधिकरण्यप्रत्यासत्त्या। कारणत्वमिति स्वरूपकथनम्। पिण्डेऽतिव्याप्ति-वारणाय विभुत्वप्रवेश इति ध्येयम्।

**क्षितितेजसोर्नैमित्तिकद्रवत्वयोग इति। अग्निसंयोगान् निमित्ता-दुत्पद्यते यद् द्रवत्वं तत्समवायः। सुवर्णादौ तैजसे घृतादौ पार्थिवे।**

नैमित्तिकत्वं यदि सकारणत्वमुच्यते तदा सांसिद्धिकद्रवत्वमपि तथेत्यन्यथा व्याचष्टे **अग्नीति**। **सुवर्णादौ तैजस इति**। सुवर्णाद्यारम्भकेषु तेजःपरमाणुष्वित्यर्थः। **घृतादौ पार्थिव इति**। घृताद्यारम्भकेषु पृथिवीपरमाणुष्वित्यर्थः। आरम्भकत्वस्य सप्तम्यर्थत्वात्। वैशेषिकैरवयविनि पाकानभ्युपगमाद् यथाश्रुतासङ्गतेः। न्यायमताश्रयणे तु यथाश्रुतमेव साधु।

यद्यपीदं घटादावव्याप्तं तत्राप्यग्निसंयोगासमवायिकारणकद्रवत्ववद्वृत्तिद्रव्यत्व-न्यूनवृत्तिजातिमत्त्वं विवक्षितम्। अग्निसंयोगासमवायिकारणकत्वञ्च संयोगेसम्बन्धा-

वच्छिन्नाग्निनिष्ठकारणताकत्वम्। नातोऽग्निपदवैयर्थ्यम्। कालत्वेन कार्यत्वेन कार्यकारणभावमादाय जलीयद्रवत्वस्यापि अग्निजन्यत्वात् संयोगसम्बन्धावच्छिन्नेति कारणविशेषणम्। अग्निसंयोगासमवायिकारणत्वेन तत्प्रयोज्यजातिर्लक्षितेत्यप्यन्ये।

**एवं विपर्ययात् सर्वत्र साधर्म्यं वैधर्म्यञ्च वाच्यमिति। एवमनेन न्यायेन साधर्म्यं यत् तदेव विपर्ययाद् व्यावृत्तेर्वैधर्म्यम्। वैधर्म्यं यत् तदेव विपर्ययादनुवृत्तेः साधर्म्यम्। अथवा साधर्म्यविपर्ययोऽप्यन्यस्मात् साधर्म्यम्। वैधर्म्यविपर्ययोऽप्यन्यस्माद् वैधर्म्यं स्वयमूहित्वा वाच्यमध्यापकेन ग्राह्यं शिष्यैरिति।**

भाष्यमवतारयति **एवमिति**। इत्यन्तं भाष्यग्रन्थः। एवमित्यस्य व्याख्या, अनेन न्यायेनेति, तद्धर्मावच्छिन्नसाधर्म्यत्वसाधकयुक्त्येत्यर्थः। **साधर्म्यं यदिति**। तद्धर्मावच्छिन्नस्य साधर्म्यं यदित्यर्थः। विपर्ययादित्यस्य व्याख्या **व्यावृत्तेरिति**। तद्धर्मावच्छिन्नेतरभेदसमव्याप्यत्वादित्यर्थः। **वैधर्म्यम्**। तद्धर्मावच्छिन्नवैधर्म्यं यदित्यर्थः। **अनुवृत्तेरिति**। तत्तद्धर्मसमव्याप्तत्वादित्यर्थः। **साधर्म्यम्**। तत्तद्धर्मावच्छिन्नसाधर्म्यम्। **साधर्म्यविपर्यय** इति। तद्धर्मावच्छिन्नसाधर्म्याभाव इत्यर्थः। **अन्यस्मात्**। तद्धर्मावच्छिन्नान्यस्मात्। **वैधर्म्यविपर्ययः**। तद्धर्मावच्छिन्नवैधर्म्याभावः।

**तद् यथा गन्धवती वैधर्म्यं वक्ष्यति। तद्विपर्ययान्निर्गन्धत्वमबादीनां साधर्म्यम्। उक्तं जलभूम्योः साधर्म्यं गुरुत्वं रसवत्त्वञ्च। तद् विपर्ययादितरेभ्यो वैधर्म्यम्। विपर्ययस्तु, इतरेषां तेजः प्रभृतीनां साधर्म्यमगुरुत्वं नीरसत्वञ्च। एवमात्मानं विहाय परार्थत्वमचेतनत्वम्। मनो विहायानन्तःकरणत्वमनणुकरणत्वञ्च। अम्भो विहाय निःस्नेहत्वमक्लेदत्वञ्च। तेजो विहायानुष्णत्वमदाहकत्वञ्च। जलज्योतिरनिलानामपाकजस्पर्शवत्त्वम्। जलज्योतिषोरपाकजरूपवत्त्वम्। दिक्कालमनसां वैशेषिकगुणविरहः। वाय्वाकाशदिक्कालमनसामतीन्द्रियत्वम्। आत्ममनसोः शरीरावच्छेदेनैव वृत्तिलाभः। वाय्वादीनां नीरूपत्वम्। आकाशादीनां स्पर्शशून्यत्वम्। कालादीनामभूतत्वमित्यादि।**

अन्यस्माद् वैधर्म्यं यत् तदेवेत्यत्रोदाहरति **गन्धवतीति**। **वैधर्म्यम्**। पृथिवीत्वावच्छिन्नस्य वैधर्म्यम्। तद् गन्धवत्त्वरूपं वैधर्म्यम्। **विपर्ययात्**। अनुवृत्तेः।पृथिवीत्वावच्छिन्नस्येति शेषः। साधर्म्यमित्यनेनान्वयः। साधर्म्यविपर्ययोऽन्यस्मात् साधर्म्यमित्यत्रोदाहरति **निर्गन्धत्वमिति**। पृथिवीत्वावच्छिन्नसाधर्म्यस्य विपर्ययो निर्गन्धत्वमित्यर्थः। साधर्म्यं यत् तदेवेत्यत्रोदाहरति **उक्तमिति**। तद् गुरुत्वरसवत्त्वरूपं

साधर्म्यम् । **विपर्ययादितरेभ्यः** । इतरेभ्यो व्यावृत्तेः । जलभूम्यन्यतरत्वावच्छिन्नभेदसमव्याप्तत्वादिति यावत् । **वैधर्म्यम्** । जलभूम्यन्यतरत्वावच्छिन्नवैधर्म्यम् । वैधर्म्यविपर्ययोऽन्यस्माद् वैधर्म्यमित्यत्रोदाहरति । विपर्यस्तु जलभूम्यन्यतरत्वावच्छिन्नवैधर्म्ययोर्गुरुत्वरसवत्त्वयोर्विपर्ययस्तु अगुरुत्वं नीरसत्वञ्च । **इतरेषां तेजःप्रभृतीनामिति** । वैधर्म्यमिति सम्बध्यते ।

भाष्योक्तानि साधर्म्याणि व्याख्याय स्वयं कियन्ति साधर्म्याण्याह **एवमिति** । **आत्मानमिति** । तेन भगवदात्मनोऽपि लक्ष्यान्तर्भावः । **परार्थत्वमिति** । परो भोगेतरस्तदर्थत्वं तन्मात्रप्रयोजनकत्वम् । भोगसमवायिभिन्नत्वमिति यावत् । भोगः सुखदुःखे । भगवदात्मनोऽपि लक्ष्यान्तर्भूतत्वान्न तत्रातिव्याप्तिः । **अचेतनत्वमिति** । जन्यज्ञानसमवायिभिन्नत्वमित्यर्थः । भगवदात्मन्यव्याप्तिवारणाय जन्यत्वोपादानम् ।

**केचित्तु** आत्मानं विहायेत्यत्रात्मपदम् आत्मसामान्यपरमेव । परार्थत्वञ्च भोगसमवायिवृत्तिद्रव्यविभाजकोपाधिमत्त्वमतो नेश्वरात्मन्यतिव्याप्तिः । अचेतनत्वञ्च ज्ञानसमवायिभिन्नत्वमित्याहुः ।

**अनन्तःकरणत्वमिति** । अन्तःकरणं मनस्तदन्यत्वमित्यर्थः । न चैवं मनोऽन्यस्य साधर्म्यं मनोऽन्यत्वमिति फलितम् । **तच्चायुक्तम्** । इतरभेदानुमाने पक्षतावच्छेदकहेत्वोरभेदापत्तेरिति वाच्यम् । तयोरभेदेऽपि क्षतिविरहात् ।

**केचित्तु** अन्तरात्मसाक्षात्कारस्य करणं यदिन्द्रियं तदन्यद्रव्यत्वमित्यर्थः । आत्मशरीरयोरव्याप्तिवारणाय इन्द्रियत्वप्रवेश इत्याहुः ।

**अनणुकरणत्वञ्चेति** । अण्विन्द्रियभिन्नद्रव्यमित्यर्थः । **निःस्नेहत्वम्** । स्नेहवद्भिन्नद्रव्यत्वम् । **अक्लेदत्वम्** । सांसिद्धिकद्रवत्ववद्भिन्नद्रव्यत्वम् । एवमग्रेऽपि द्रव्यत्वमनुषञ्जनीयम् । **अपाकजस्पर्शवत्त्वमिति** । पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वे सति स्पर्शवत्त्वमित्यर्थः । तेन पार्थिवावयविनि नातिव्याप्तिः । **अपाकजरूपवत्त्वमिति** । पाकजरूपवद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वे सति रूपवत्त्वमित्यर्थः । तेन पार्थिवावयविनि नातिव्याप्तिः । **वैशेषिकेति** । द्रव्यत्वे सतीति पूरणीयम् । **अतीन्द्रियत्वमिति** । प्रत्यक्षवृत्तिद्रव्यविभाजकोपाधिमत्त्वमित्यर्थः । तेन पार्थिवपरमाण्वादौ नातिव्याप्तिः । **शरीरावच्छेदेनेति** । शरीरावच्छिन्नकार्यजनकत्वमित्यर्थः ।

यद्यपीदं शरीरे चक्षुरादौ चातिव्याप्तम्, तथापि तादृशकार्यासमवायिकारणसंयोगाश्रये तात्पर्यम् । कार्यैकार्थप्रत्यासत्तेरविशिष्टत्वेऽपि शरीरात्मसंयोगो ज्ञानाद्यसमवायिकारणमिति न शरीरेऽतिव्याप्तिः । लक्ष्ये चात्मपदं जीवात्मपरम् । तेन भगवदात्मनि नाव्याप्तिः ।

**प्रकाशकृतस्तु** निरवयवत्वे सति ज्ञानहेतुशरीरसंयोगाश्रयत्वं समुदायार्थ इत्याहुः । तत्र शरीरचक्षुरादिवारणाय सत्यन्तम् । श्रोत्रमनःसंयोगमादाय श्रोत्रेऽतिव्याप्ति-

वारणाय शरीरपदम् । श्रोत्रशरीरसंयोगो न ज्ञानजनकः । शरीरसंयोगपदं वा श्रोत्रान्यवृत्तिसंयोगान्यपरमिति ध्येयम् । **नीरूपत्वम्** । नीरूपद्रव्यत्वम् । **स्पर्शशून्यत्वम्** । स्पर्शशून्यद्रव्यत्वम् । आदिपदादाकाशकालदिगात्मनाममूर्त्तद्रव्यत्वपरिग्रहः ।

### द्रव्यरहस्ये साधर्म्यवैधर्म्यरहस्यम्

**तदेवमुक्तैर्द्रव्यत्वादिभिर्द्रव्यमितरेभ्यो विवेचितम् । ननु मध्यवृत्तिभिरन्त्यविशेषवत्त्वादिभिरव्याप्तेः । नापि परस्परतोऽतिव्याप्तिः । किन्तु कियानपि विवेकः सम्भवति । न चैतावता कृतकृत्यत्वम् । अविवेकस्य तदवस्थत्वात् । तत्कुतो विवेक इत्यपेक्षायामाह इहेदानीमिति । इह प्रकरणे । इदानीमवसरप्राप्तौ । एकैकमित्येतावतैव चरितार्थत्वे 'शस्' प्रत्ययोपादानं वीप्साया भूयस्त्वज्ञापनार्थम् । पृथिवीत्वाभिसम्बन्धात् पृथिवीति । पृथिवीत्वं नाम सामान्यविशेषः । तेनाभिमतः सम्बन्धः समवायलक्षणस्तस्मात् । न त्वेकार्थसंयुक्तसमवायादित्यर्थः ।**

**द्रव्यत्वादिभिरिति** । आदिपदाद् गुणवत्त्वादिपरिग्रहः । **द्रव्यमितरेभ्यो विवेचितमिति** । द्रव्यत्वावच्छेदेन द्रव्यत्वावच्छिन्नेतरभेदवत्तया ज्ञातमित्यर्थः । **मध्यवृत्तिभिः** । एकदेशवृत्तिभिः । आदिपदात् मूर्त्तत्वादिपरिग्रहः । **अव्याप्तेरिति** । भागासिद्धतया द्रव्यत्वावच्छेदेन तेषामितरभेदसाधकत्वासम्भवादित्यर्थः । **नापीति** । परमाणव आकाशादिभ्यो भिद्यन्ते अन्त्यविशेषवत्त्वादिति क्रमेण नित्यद्रव्याणां मिथो व्यावर्त्तकत्वं न परेषामित्यर्थः । **अतिव्याप्तेरिति** । व्यभिचारित्वादित्यर्थः ।

नन्वेवं तेषामभिधानं व्यर्थमेवेत्यत आह **किन्त्विति** । **कियानपीति** । नित्यद्रव्याणि इतरेभ्यो भिद्यन्ते विशेषवत्त्वादिनेति भावः । **अविवेकस्येति** । पृथिव्यादीनां परस्परं भेदस्य अप्रमितेरित्यर्थः । **विवेक इति** । पृथिव्यादीनां परस्परं भेदग्रह इत्यर्थः । इदानीमित्यस्य व्याख्या अवसरप्राप्ताविति । प्रतिबन्धकीभूतपृथिव्यादिप्रत्येकमात्रवृत्तिसाधर्म्यगोचरशिष्यजिज्ञासानिवृत्तावित्यर्थः । **चरितार्थत्वे** । समीहितसिद्धौ । **वीप्साया** इति षष्ठी । एकैकमेव यावतां द्रव्याणां वाच्यमिति ज्ञापनार्थम् । **सामान्यविशेष इति** । अपरजातिविशेष इत्यर्थः । **अभिमत** इति । जलादिव्यावृत्तत्वेनाभिमत इत्यर्थः । **एकार्थसंयुक्तेति** । स्वसमवायिसंयोगादित्यर्थः । तस्य जलादिसाध्यबलत्वादिति भावः ।

एवञ्च भाष्ये पृथिवीपदं पृथिवीपदवाच्यपरम् । अवच्छिन्नत्वञ्च पञ्चम्यर्थः । अन्वयश्चास्य वाच्यतायाम् । तथा च पृथिवीत्वाभिसम्बन्धावच्छिन्नपृथिवीपदवाच्या तावती रूपरसादिमतीति समुदितार्थ **इत्याचार्याभिप्रायः** । वस्तुतस्तु वैशिष्ट्यं पञ्चम्यर्थः । तथा च पृथिवीत्वस्य समवायलक्षणसम्बन्धवती पृथिवीत्यर्थ इत्येव ज्यायः ।

ननु पृथिवीत्वस्य जातित्वे मानाभावः। न च 'अनुमिनोमि', 'उपमिनोमि' इत्यनुव्यवसायबलादनुमितित्वोपमितित्वादिजातिसिद्धिवत् पृथिवीत्यनुगतचाक्षुषप्रतीतिबलात् पृथीवीत्वजातिसिद्धिरिति वाच्यम्; अतीन्द्रियपृथिव्यां प्रत्यक्षासम्भवात्। प्रमाणान्तरसिद्धकार्यत्वकारणत्वशक्यत्वावच्छेदकत्वस्य जातित्वव्यापकतया तदभावेन तादृशप्रत्यक्षासिद्धेश्च। अन्यथा परोऽपर इत्यर्थगतप्रत्यक्षबलादपरत्वादिजातेः, शरीरं शरीरमिति प्रत्यक्षबलात् पार्थिवशरीरमात्रवृत्तिशरीरत्वजातेः, पशुरित्यनुगतप्रतीतिबलात् पशुमात्रवृत्तिपशुत्वजातेश्चैत्र इत्यनुगतप्रतीतिबलात् सकलचैत्रादिवृत्तिचैत्रत्वादिजातेश्च सिद्ध्यापत्तेः। अत एव संख्यात्वपरिमाणत्वादिजातेरपि प्रायशोऽधिगतिरेवेति चेत्।

अत्र **केचिद्** गन्धत्वावच्छिन्नं **प्रति** पृथिवीत्वेन समवायिकारणतावच्छेदकतयैव पृथिवीत्वजातिसिद्धिः। न च तादृशकार्यकारणभावे मानाभावः। सामान्यतो जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेनैव समवायिकारणत्वात्। विलक्षणतेजःसंयोगावयवगन्धात्मकासमवायिकारणविरहादेव जलादौ गन्धाद्युत्पत्तेरसम्भवादिति वाच्यम्; विलक्षणतेजःसंयोगस्य द्विष्ठतया तेजसि पाकजगन्धोत्पत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वात्। न च तद्वारणाय विलक्षणसंयोगसम्बन्धेन तेजस्त्वेनैव कारणत्वमुपेयम्। पाकजगन्धस्यासमवायिकारणविरहेऽपि क्षतिविरहात्। स्वीयसंयोगस्य स्वस्मिन् सत्त्वेऽपि संयोगसम्बन्धेन स्वस्य न स्वसम्बन्धित्वमिति वाच्यम्; सुरभ्यसुरभिभेदेनोत्कर्षापकर्षभेदेन च विभिन्नानन्तकार्यकारणभावेषु अनन्तानां संयोगानां कारणतावच्छेदकसम्बन्धकल्पनामपेक्ष्य समवायसम्बन्धेन विलक्षणसंयोगत्वेन कारणत्वं कल्पयित्वा तेजस्यपि गन्धोत्पत्तिवारणाय सामान्यतो गन्धत्वावच्छिन्नं प्रति स्वरूपतः पृथिवीत्वात्मकतादात्म्यसम्बन्धेन पृथिवीत्वेन समवायिकारणतया एककल्पनाया एव लघीयस्त्वाद् इत्याहुः।

तदसत्। तत्तद्व्यक्तिसमवेतसत्त्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन समवायिकारणत्वस्यावश्यकतया तत एव तेजसि पाकजगन्धाद्युत्पत्तिवारणसम्भवात्। तत्तत्पृथिवीसमवेतातिरिक्तस्य गन्धादेरलीकत्वात्।

एतेन जन्यपृथिवीत्वावच्छिन्नं प्रति वा पृथिवीत्वे न समवायिकारणत्वात् तदवच्छेदकतयैव नित्यसाधारणपृथिवीत्वजातिसिद्धिः। एवं जलीयरसतैजसद्रवत्वेतरनैमित्तिकद्रवत्वसमवायिकारणतावच्छेदकतयाऽपि पृथिवीत्वजातिसिद्धिः। अन्यथा विलक्षणतेजःसंयोगस्य द्विष्ठतया पृथिव्यां पाकजरूपरसद्रवत्वोत्पाददशायां तेजस्यपि तदुत्पादापत्तेः। जलीयरसत्वञ्च मधुरत्वव्याप्यो जलरसमात्रवृत्तिजातिविशेषः

तादृशकार्यकारणभावानभ्युपगमे जलाद्यवयवेष्वपि। जलाद्युत्पत्तिदशायां पृथिव्युत्पादापत्तेः। न च घटपटादिलक्षणपृथिवीविशेषान् प्रति द्रव्यसामान्यारम्भकतावच्छेदकसंयोगनिष्ठवैजात्यव्याप्यवैजात्येनासमवायिकारणत्वस्यावश्यकतया यावद्विशेषसामग्रीविरहादेव जलाद्यवयवेषु न पृथिव्युत्पत्तिरिति वाच्यम्; तावतापि मृत्तिकाद्यात्मकपृथिव्यास्तत्रापत्तेर्दुर्वारत्वात्। तत्रावयवसंयोगस्य विशिष्यहेतुत्वे मानाभावात्।

अथ तद्वारणाय लाघवात् समवायघटितसामानाधिकरण्यप्रत्यासत्त्या जन्य-पृथिवीत्वावच्छिन्नं प्रति गन्धत्वेनैव कारणत्वमुपेयम्। न चैवं कार्यतावच्छेदकतयैव पृथिवीत्वजातिसिद्धिरिति वाच्यम्; तत्कार्यतावच्छेदकस्य नित्यपृथिवीसाधारण्ये मानाभावादिति चेन्न। निर्गन्धस्यापि पार्थिवावयवस्याभ्युपगमेन व्यभिचारादिति **कस्यचित्** प्रलपितमप्यपास्तम्। समवायिकारणानां तत्तद्व्यक्तित्वेन कारणतयैव 'तदा' पदेन वारणसम्भवात्; अन्यथा पृथिवीत्वावच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणताभ्युपगमेऽपि तत्स्थादेर्मृत्तिकाद्युत्पादप्रसङ्गस्य दुर्वारत्वात्।

**नव्यास्तु** पाकनिष्ठरूपादिनाशकतावच्छेदकसम्बन्धघटकतया पृथिवीत्वजाति-सिद्धिः। विशेषणताविशेषवद्रूपनाशत्वावच्छिन्नं प्रति तादृशमूर्त्तगुणनाशत्वावच्छिन्नं प्रति वा स्वसमवायिपृथिवीसमवेतत्वस्ववृत्तिरूपत्वोभयसम्बन्धेन, स्वसमवायिपृथिवी-समवेतत्वस्ववृत्तिमूर्त्तविशेषत्वोभयसम्बन्धेन वा प्रतियोगिनिष्ठतया विलक्षणतेजः संयोगस्य कारणत्वात्। अन्यथा तेजःसंयोगस्य द्विष्ठतया तेजोवृत्तिरूपेऽपि प्रतियोगिता-सम्बन्धेन तादृशरूपादिनाशापत्तेः। एतच्च पाकजविचारे स्फुटमिति प्राहुः।

**केचित्तु** पृथिवीपदशक्यतावच्छेदकतया पृथिवीत्वजातिसिद्धिः। स्वारसिक-प्रयोगस्य सन्दिग्धत्वेन विना बाधकं लाघवाज्जातेरेव शक्यतावच्छेदकत्वकल्पनात्। शक्यतावच्छेदकतया न जातिसिद्धिरित्यस्य च मन्त्रपाठमात्रपरत्वात्। अत एव जल-शब्दशक्यतावच्छेदकतया जलत्वजातिसिद्धिरिति जलग्रन्थे **वर्द्धमानोपाध्यायाः**।

न चैवं विभुपदशक्यतावच्छेदकत्वेनापि गगनादिचतुष्टयसाधारणजातिसिद्ध्या-पत्तिरिति वाच्यम्; भूतपदशक्यतावच्छेदकत्वेन पृथिव्यादिपञ्चकसाधारणजात्या साङ्कर्यापत्त्या विनिगमनाविरहेण भूतत्वविभुत्वयोरुभयोरेव जातित्वविरहात्।

न च तथापि हर्यादिपदशक्यतावच्छेदकत्वेनानुगतजातिसिद्ध्यापत्तिरिति वाच्यम्; हर्यादिपदात् सिंहत्वविष्णुत्वादिप्रकारेण बोधस्यैव स्वारसिकत्वस्य सर्वसिद्ध-त्वात्। अदृष्टादिपदादपि धर्मत्वाधर्मत्वप्रकारेणैव बोधस्य स्वारसिकतायाः सर्वसिद्धत्वेन तत्राप्युभयसाधारणजातेः शक्यतानवच्छेदकत्वादित्याहुः।

वस्तुतस्तु गन्धत्वस्य कार्यमात्रवृत्तिजातितया कार्यतावच्छेदकत्वस्यावश्यकत्वेन तदवच्छिन्नं प्रति कारणतावच्छेदकतयैव पृथिवीत्वजातिसिद्धिः। न च सत्ताद्रव्यत्व-मूर्त्तत्वभूतत्वानामेकतरावच्छिन्नस्यैव कार्यतावच्छेदकं (गन्धत्वम्) (?) असमवायिकारणे-नैवातिप्रसङ्गभङ्गसम्भवादिति वाच्यम्; सत्तादेर्जलादिसाधारणत्वात्। नियतजनक-व्यावृत्तधर्मेण (?) (कारण) त्वे सम्भवति तत्साधारणकारणत्वकल्पनानुदयात्। निर्गन्ध-पृथिवीसाधारणस्य च विशिष्टत्वादित्याहुः।

तदसत्। यत्र प्रकारान्तरेण तदवच्छिन्नोत्पत्तिनियमो न सम्भवति, तत्रैव कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमादिति दिक्।

**ननु पृथिवीस्वरूपसिद्धौ किं लक्षणेन? सिद्धे साधनवैयर्थ्यात्। तदसिद्धावाश्रयासिद्धेः। न। स्वरूपासिद्धावपि व्यवच्छेदस्य साध्यत्वात्। तथाहि पृथिवी अबादिभ्यो भिद्यते, पृथिवीत्वात्, यत्पुनरितरेभ्यो न भिद्यते नासौ पृथिवी, यथा अबादि, न चेयं न पृथिवी, तस्माद् इतरेभ्यो भिद्यते। तथाप्यप्रसिद्धविशेषणः पक्षः। इतरव्यवच्छेदस्य क्वचिदप्यसिद्धेः। सिद्धौ वा साधनवैयर्थ्यात्। इतरव्यवच्छेदस्य घटादावेव प्रत्यक्षसिद्धत्वात्। किन्त्वापरमाणोरा च भूगोलकं पृथिवीत्वनिमित्ताक्रान्ते व्याप्त्यावच्छेदकभेदव्यावृत्त्या व्यावृत्तिर्न सिद्धेति साध्यत इति न दोषः।**

अधिकरणस्वरूपाभाववादी शङ्कते **नन्विति। किं लक्षणेनेति।** किं पृथिवीत्वादिहेतुकेतरभेदानुमानेनेत्यर्थः। **सिद्ध इति।** सिद्धस्येत्यर्थः। **तदसिद्धाविति।** पृथिवीस्वरूपासिद्धौ। **व्यवच्छेदस्येति।** पृथिवीतरव्यवच्छेदत्वेन पृथिवीतरव्यवच्छेदस्येत्यर्थः। तेन रूपेणासिद्धत्वात्। स च व्यवच्छेदोऽधिकरणस्वरूपोऽतिरिक्तो वेत्यन्यदेतदिति भावः। **अबादिभ्य इति।** पृथिवीतरेभ्यः। **पृथिवीत्वादिति।** न च पक्षतावच्छेदकहेत्वोरभेद आचार्येण पक्षतावच्छेदकस्य हेतुत्वानभ्युपगमादिति वाच्यम्।

साध्यहेतुसामानाधिकरण्यघटितान्वयव्याप्तिग्रह एव पक्षतावच्छेदकसाध्यसामानाधिकरण्यभानेनानुमानवैफल्यापत्त्याऽन्वयिनि पक्षतावच्छेदकस्य हेतुत्वानभ्युपगमेऽपि व्यतिरेकिणि पक्षतावच्छेदकस्यापि हेतुत्वाभ्युपगमात्। साध्यहेतुसमानाधिकरण्यस्य व्यतिरेकव्याप्त्यघटकत्वात्। व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यत इत्यस्य चैकदेशिमतत्वादिति न काप्यनुपपत्तिः।

**न चेयं न पृथिवीति।** न पृथिवीतरभेदाभावव्यापकपृथिवीत्वाभाववती। यद्यपि पृथिवीतरभेदाभावव्यापकाभावप्रतियोगिपृथिवीत्ववतीयमित्येवोपनयो युक्तः, येन रूपेण हेतुप्रयोगस्तेनैव रूपेण हेतुमत्त्वस्योपनेयत्वात्, अन्यथा पर्वतो वह्निमान् धूमादित्यादावन्वयिन्यपि कदाचिद् वह्निव्याप्यधूमाभावाभाववानयमित्युपनयापत्तेस्तथापि प्राचां नये व्यतिरेकिणि साध्याभावव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावत्वेनैवोपनये हेतुप्रयोग इति नियमः। अन्यथा गन्धवती इतरेभ्यो भिद्यते गन्धादित्यादावुपनयवाक्यस्य निराकाङ्क्षत्वापत्तिः। 'इदमः' गन्धवत्त्वेन परामृष्टे हेतुभूतगन्धवत्त्वान्वयायोगात् तन्मते दण्डवान् रक्तदण्डवान् इत्यस्यापि निराकाङ्क्षत्वादित्यभिप्रायेणाचार्याणामेतादृशः प्रयोगः।

शङ्कते **तथापीति**। **अप्रसिद्धिविशेषणः**। अप्रसिद्धसाधकः पक्षः। **पक्षे** न साध्यप्रसिद्धिरिति यावत्। ननु पक्षे साध्याप्रसिद्धिसत्त्वेऽपि न क्षतिः, अन्यत्रैव तत्सत्त्वात्। नहि पक्ष एव साध्यप्रसिद्धिरनुमानाङ्गमित्यत आह **इतरेति**। **क्वचिदप्य-सिद्धेरिति**। पक्षभिन्ने क्वचिदप्यसत्त्वादित्यर्थः। **सिद्धौ वेति**। पक्ष एव साध्यप्रसिद्धिसत्त्वे इत्यर्थः। **घटादावेवेति** पक्षैकदेशे। घटादावेवेत्यर्थः।

यद्यपि पृथिवीतरत्वस्य पृथिवीतरसामान्यभेदरूपस्य भेदविशेषणतयातीन्द्रिय-पृथिवीघटितत्वात् तदवच्छिन्नान्योन्याभावो घटादौ कथं लौकिकप्रत्यक्षगम्यः? अन्यथा गुरुतरघटान्योन्याभावोऽपि लौकिकप्रत्यक्षगम्यः स्यात्। तथापि स्वावच्छिन्नप्रतियोगि-ताकत्वसम्बन्धेन पृथिवीत्ववद्भेद एव पृथिवीतरत्वम्। तत्र च न पृथिव्याः प्रवेश इति भावः। इदमुपलक्षणम्। पृथिवीतरत्वरूपेण पृथिवीतरस्य भेदत्वरूपेण भेदस्य च खण्डशः प्रसिद्धिसत्त्वेऽपि मनस्यपि 'विशेष्ये विशेषणमि'ति न्यायेन 'पृथिवीतरभेदः' इति निरधिकरणकप्रसिद्धिसम्भव इति बोध्यम्।

नन्वेवं घटादेरपि पक्षत्वात् सिद्धसाधनमित्यत आह **किन्त्विति**। **आ परमाणोरा च भूगोलकमिति**। निखिलपृथिवीविशेष्यकमित्यर्थः। अन्वयश्चास्य साध्यत इत्यनेन। **पृथिवीत्वनिमित्तेति**। पृथिवीत्वरूपपक्षतावच्छेदकाक्रान्त इत्यर्थः। **व्याप्त्या**। पृथिवीत्वरूपपक्षतावच्छेदकावच्छेदेनेति यावत्। **अवच्छेदकभेदव्यावृत्येति**। अवच्छेदक-भेदो घटत्वपटत्वादिः, तद्व्यावृत्त्या, तेन विना। तदप्रकारेणेति यावत्। **व्यावृत्तिः**। पृथिवीतरव्यावृत्तिः। **साध्यत इति**। पृथिवीत्वरूपेण साध्यत इत्यर्थः।

तथापि पृथिवीतरभेदस्य घटादौ पृथिवीत्वरूपेणाग्रहात्, पृथिवीत्वरूपेण ग्रहेऽपि तदवच्छेदेनाग्रहाच्च, न सिद्धसाधनमिति भाव **इति सम्प्रदायः**।

तदसत्। अवच्छेदकभेदव्यावृत्त्येत्यभिधानस्य व्यर्थतापत्तेः। व्याप्त्या व्यावृत्ति-रित्यस्यैव सम्यक्त्वात्।

वस्तुतस्तु **अवच्छेदकभेदव्यावृत्त्या व्यावृत्तिरिति**। स्वावच्छिन्नप्रतियोगिताकत्व-सम्बन्धेन पृथिवीत्वरूपपक्षतावच्छेदकवद्भेदावच्छिन्नव्यावृत्तिरूपा पृथिवीतरव्यावृत्ति-रित्यर्थः। अभेदस्य तृतीयार्थत्वात्। एतेन साध्यार्थो निरुक्तः। पृथिवीतरत्वाव-च्छिन्नप्रतियोगिताकभेदस्य साध्यत्वे प्रागुक्तरीत्या घटादौ तस्य प्रत्यक्षतः सिद्ध्यसम्भ-वादिति भावः।

**केचित्तु** अवच्छेदकभेदो घटत्वादितद्व्यावृत्तिविशिष्टे घटादिभिन्नयावद्-व्यावृत्तिः। तथा च पक्षतावच्छेदकावच्छेदेनैकविशेष्यतावच्छेदकसमानधर्मिकसिद्धेरेव पक्षतावच्छेदेनानुमितौ प्रतिबन्धकतया घटादौ पृथिवीतरभेदस्य प्रत्यक्षसिद्धत्वेऽपि तद्भिन्ने पृथिवीत्वावच्छेदेन तस्य साध्यत्वान्न दोष इति भाव इति व्याचख्युः। **तदसत्**। आ परमाणोरा च भूगोलकमित्यस्य व्यर्थत्वापत्तेः।

**अथ किमेतल्लक्षणमित्युच्यते ? केवलव्यतिरेकिहेतुविशेषो लक्षणम् । तथा चाचार्याः समानासमानजातीयव्यवच्छेदो लक्षणार्थ इति । एवं तर्हि पृथिवीत्वनिमित्ताक्रान्ते व्याप्त्यावच्छेदकभेदव्यावृत्त्या व्यावृत्तिः क्वचिन्न सिद्धेति पुनरप्रसिद्धविशेषणत्वमायातमिति चेन्न । पक्षसम्बन्धिनो विशेषणस्य सर्वत्राप्रमितस्यैव साध्यत्वात् । प्रसिद्धो हि धर्मो धर्मिणमन्वेति । न तु धर्म्यन्विततयैव प्रसिद्धः साध्यते । तथा सति साधनवैयर्थ्यादिति । तथापि घटादौ चेदितरव्यावृत्तिः प्रत्यक्षसिद्धा ततो दृष्टान्तबलेनान्वयादेव परमाण्वादौ साध्यताम्, किं घटादिकमपि पक्षे निक्षिप्य व्यतिरेक्याद्रियत इति चेत् । आस्तां तावदयं सुहृदुपदेशः । केवलव्यतिरेकिलक्षणं निर्व्यूढम् ।**

प्रसङ्गाल्लक्षणपदस्य प्रवृत्तिनिमित्तं निर्वक्तुं शङ्कते **अथेति** । एतल्लक्षणम् । एतस्य प्रवृत्तिनिमित्तमिति यावत् । **केवलेति** । तद्धर्मावच्छिन्नेतरभेदसमव्याप्तो धर्मः, तद्धर्मावच्छिन्नपदवाच्यतासमव्याप्तो धर्मो वा लक्षणमित्यर्थः । **आचार्याः** । पूर्वपूर्वप्रामाणिकपण्डिताः । **समानासमानेति** । समाने तद्धर्मावच्छिन्ने । इतरस्य व्यवच्छेदबोधकः । व्यवच्छिद्यतेऽनेनेति व्युत्पत्तेः ।

अनुमितिसमानाकारिका साध्यप्रसिद्धिरेवानुमानाङ्गमिति भ्रमेणाशङ्कते **एवमिति** । **पृथिवीत्वनिमित्तेति** । पूर्ववद्व्याख्येयम् । **अप्रसिद्धेति** । अनुमानाङ्गसाध्यप्रसिद्ध्यभाव आगत इत्यर्थः । भ्रमं निराकृत्य समाधत्ते **पक्षेति** । पक्षवृत्तितया साधनीयस्येत्यर्थः । अप्रसिद्धस्यैव पक्षतावच्छेदकावच्छिन्नविशेषणत्वेन अज्ञातस्यैव साध्यत्वात् । **धर्मिणमन्वेतीति** । पक्षविशेषणं भवतीत्यर्थः । **धर्म्यन्विततयैवेति** । पक्षतावच्छेदकावच्छिन्नविशेषणतयैवेत्यर्थः ।

ननु तथापि पृथिवी इतरभिन्ना पृथिवीत्वाद् घटवद् इत्यन्वयिनैव इतरभेदः साध्यतां किं व्यतिरेकिणेत्याशङ्कते **तथापीति** । **व्यतिरेक्याद्रियत इति** । व्यतिरेकव्याप्तिज्ञानस्यानुमितिजनकत्वमुपेयत इत्यर्थः । अन्वयव्याप्तेरग्रहदशायामपि केवलव्यतिरेकव्याप्तिज्ञानादनुमितिदर्शनात् तस्याप्यनुमितिजनकत्वमावश्यकमिति गूढाभिसन्ध्या परिहरति **आस्तामिति** । **केवलव्यतिरेकिलक्षणमिति** । व्यतिरेकव्याप्तिज्ञानस्यानुमित्यजनकत्वेऽपि व्यतिरेकधर्मिणि लक्षणमिति निर्व्यूढमेवेत्यर्थः । तावतापि तद्धर्मावच्छिन्नेतरभेदसमव्याप्तत्वरूपस्य केवलव्यतिरेकित्वस्य पृथिवीत्वादावनपायादिति भावः ।

**व्यवहारसिद्धिर्वा लक्षणप्रयोजनम् । तथाहि विवादाध्यासितं द्रव्यं पृथिवीति तथा च व्यवह्रियते लोकेन पृथिवीत्वात् । यत्पुनः पृथिवीति न व्यवह्रियते न सा पृथिवी । यथा वाय्वादि । न चेयं न पृथिवी । तस्मान्न**

**तथा व्यवह्रियते इति। अत्रापि व्यवहारविषयस्य स्वरूपतः सिद्धेर्नाश्रया-सिद्धिः। पृथिवीव्यवहारस्य सम्मुग्धस्य सिद्धेर्नाप्रसिद्धविशेषणत्वम्। व्याप्त्या निमित्तविशेषवतः साध्यत्वान्न साधनवैयर्थ्यम्। सर्वपृथिवीपक्षीकरणे च नान्वयित्वम्। यद् यस्यान्वयव्यतिरेकावनुविधत्ते तत्तद्धेतुकम्। यथा घटादि मृदादिहेतुकम्। अनुविधत्ते च पृथिवीव्यवहारः पृथिवीत्वस्या-न्वयव्यतिरेकाविति चेन्न। पृथिवीत्वनिमित्तकत्वे पृथिवीव्यवहारे साध्येऽ-न्वयाभावात्। केवलञ्च सर्वनामशब्देन व्यवहारमात्रेण वक्रोऽयमन्वय-प्रयोगः स च व्यतिरेकान्न भिद्यते विवक्षाभेदादिति।**

**व्यवहारसिद्धिः**। व्यवहारानुमितिः **लक्षणप्रयोजनमिति**। पृथिवीत्वलक्षणस्य प्रयोजनमित्यर्थः। **विवादाध्यासितमिति**। पृथिव्यात्मकमित्यर्थः। **पृथिवीतीति**। वाच्यतासम्बन्धेन पृथिवीपदवत्। **तथा च व्यवह्रियते**। तथा व्यवहारवती। **स्वरूपतः**। पृथिवीत्वरूपपक्षतावच्छेदकरूपेण। **सम्मुग्धस्येति**। पृथिवीत्वावच्छिन्न-विशेष्यताविनिर्मोकेनैवेत्यर्थः। **नाप्रसिद्धविशेषणत्वमिति**। न साध्याप्रसिद्धिरित्यर्थः। **व्याप्त्येति**। व्याप्तिः शक्तिस्तया। शक्तिसम्बन्धेनेति यावत्। **निमित्तविशेषवत इति**। सप्तम्यर्थे षष्ठी। पृथिवीत्वरूपप्रवृत्तिनिमित्तवत इत्यर्थः। **साध्यत्वात्**। पृथिवी-व्यवहारस्य सिसाधयिषितत्वात्। **सर्वपृथिवीति**। सर्वस्यामेव पृथिव्यां साध्यसन्देहेन चेत्यर्थः।

भ्रान्तः शङ्कते **यद् यस्येति**। पृथिव्यां पृथिवीपदवाच्यत्वं सिद्धमेव, किन्तु पृथिवीव्यवहारस्य पृथिवीत्वप्रवृत्तिनिमित्तकत्वमेव पर्यवसन्नं साध्यते। पृथिवीत्वस्य पक्षतावच्छेदकतया तदवच्छिन्नस्य शक्तौ संसर्गमर्यादया भानात्। तच्च पृथिवीत्वहेतुकः पृथिवीत्वान्वयव्यतिरेकानुविधायित्वादित्यन्वयः। व्यतिरेक्यनुमानेनैव यत्तद्भ्यां सामा-न्यतो व्याप्त्या सेत्स्यति किमुक्तव्यतिरेकानुमानेनेत्याशङ्कार्थः।

यद्यप्यनुमानान्तरस्यानुमानान्तरादूषकत्वात् प्रकृतव्यतिरेक्यनुमाने न किमपि दूषणम्, तथापि अभ्युपेत्य स्फुटतरं समाधानान्तरमाह **पृथिवीत्वेति**। **पृथिवीव्यवहारे**। पृथिवीत्वहेतुकस्य पृथिवीत्वकारणकत्वरूपस्य उक्तसामान्यतो व्याप्त्या बोधाद्यनवतार-दशायां ज्ञानसम्भवेऽपि पृथिवीत्वावच्छिन्नशक्यताकत्वरूपे पृथिवीत्वनिमित्तकत्वे पृथिवीव्यवहारस्य साधनीयत्वे उक्तानुमानस्य प्रयोजकत्वाभावादित्यर्थः।

किञ्च यद् यस्येत्यादिकमपि व्यतिरेक्येव न त्वन्वयीत्याह **केवलञ्चेति**। चकारः किञ्चेत्यर्थः। किञ्च व्यवहारमात्रेण केवलं सर्वनामशब्देनायमन्वयप्रयोगो वक्र इति योजना। **व्यवहारमात्रेण**। वक्तुरिच्छामात्रेण। **केवलम्**। साक्षाद् व्यतिरेकव्याप्तिप्रतिपादकशब्दं विना। **सर्वनामशब्देन**। यच्छब्देन। **अयम्**। यद् यस्येत्याद्युक्तरूपः। **अन्वयप्रयोगः**

अन्वयव्याप्त्यभिप्रायकत्वेन भवदभितः प्राचामुदाहरणप्रयोगः। **वक्रः**। नान्वयव्याप्त्यभिप्रायक इत्यर्थः। नन्वत्र किं मानमित्यत आह **स चेति**। चो हेतौ। **व्यतिरेकात्**। व्यतिरेकव्याप्तिमात्रत्वात्। **विवक्षाभेदात्**। विवक्षा यत्तत्पदशक्तिस्तद् भेदात्। यत्त्वतत्त्वयोरननुगतत्वादिति यावत्।

**यत्पुनराह भूषणो लक्षणं चिह्नं लिङ्गमिति पर्यायाः। तदसत्। व्यावृत्तौ व्यवहारे च साध्येऽन्वयिनोऽनवकाशात्। व्युत्पन्नस्य कुत्रचित् स्वयमेव व्यवहारात् अव्युत्पन्नस्य सपक्षपरिचयाभावात्। कथं तर्हि शास्त्रे क्रियावद् द्रव्यमिति द्रव्यलक्षणेषु पठ्यते? द्रव्यस्यैवायमसाधारणो धर्मः समवायिकारणत्ववत् गुणवत्त्ववच्चेति प्रतिपादनार्थम्। न तु लक्षणत्वेन द्रव्यमात्रं पक्षीकृत्य साधने भागासिद्धत्वात्। मूर्त्तद्रव्यमात्रपक्षीकरणेऽप्यसाधारणत्वात्। तस्माद् वायुमनसोरप्रत्यक्षत्वेन द्रव्यत्वविप्रतिपत्तौ क्रियावत्त्वेन तत्प्रसाध्य भागासिद्धिः परिहरणीयेति तस्य तात्पर्यम्।**

**लक्षणमिति**। चिह्नं लिङ्गमिति। शब्दस्य स्वनिष्ठान्वयव्यतिरेकोभयव्याप्तिज्ञानसहकारेण लक्ष्येतरभेदाद्यनुमित्युपधायकधर्मवाचकतया तादृशधर्म एव लक्षणं न तूक्तो धर्म इति दूषणाभिप्रायः। **अन्वयिनोऽनवकाशादिति**। अन्वयिनोऽन्वय्यनुमितेः। अनवकाशात् सर्वेण लक्षणेनासम्भवात्। व्यवहारस्य सर्वेण लक्षणेनान्वय्यनुमित्यसम्भवं विवृणोति **व्युत्पन्नस्येति**। **कुत्रचिदिति**। न सर्वस्येति शेषः। कुत्रचित् पदार्थे उपमानादिना तत्पदार्थवाचकपदशक्तिग्रहवतः। न सर्वस्यैव पुरुषस्येत्यर्थः। **स्वयमेवेति**। लक्षणहेतुकपदवाच्यतानुमितिं विनेत्यर्थः। **व्यवहारात्**। तत्पदार्थस्य शाब्दबोधात्। तथा च तत्पदार्थलक्षणेऽव्याप्तिरिति भावः।

ननु तत्रापि व्युत्पन्नस्य लक्षणहेतुकपदवाच्यतान्वय्यनुमित्यभावेऽपि अव्युत्पन्नस्यैव तादृशान्वय्यनुमितिसम्भव इत्यत आह **अव्युत्पन्नस्येति**। **सपक्षपरिचयः**। अन्वयसहचारनिश्चय इत्यर्थः। ननु तत्तद्धर्मावच्छिन्नेतरभेदसमव्याप्तधर्मस्यैव तत्तद्धर्मावच्छिन्नलक्षणत्वे द्रव्यलक्षणमध्ये क्रियावत्त्वं कथं पठ्यते? तस्य भागासिद्धतया द्रव्यत्वावच्छिन्नेतरभेदसमव्याप्तत्वाभावादित्याशयेन पृच्छति **कथं तर्हीति**। उत्तरयति **द्रव्यस्यैवेति**। **असाधारणः**। समवेतः। **प्रतिपादनम्**। अनुमितिः। पठ्यत इत्यनेन सम्बध्यते। **न तु लक्षणत्वेनेति**। न तु द्रव्यलक्षणत्वाभिप्रायेणेत्यर्थः। **द्रव्यमात्रं पक्षीकृत्य**। भेदसाधन इत्यपि शेषः। साधनपदं साधनत्वपरम्। साधनत्वञ्च व्याप्यत्वम्। **पक्षीकृत्य**। प्रतियोगिकुक्षिनिःक्षिप्तीकृत्य। तथा च द्रव्यसामान्येतरभेदव्याप्यत्वेऽपीत्यर्थः। **भागासिद्धत्वात्**। सकलद्रव्यावृत्तित्वात्। द्रव्यत्वावच्छिन्नेतरभेदव्यापकत्वाभावादिति यावत्। ननु तथापि मूर्त्तद्रव्यलक्षणत्वे न किमपि बाधकमित्यत आह **मूर्त्त-**

**द्रव्येति**। **पक्षीकरणेऽपि**। प्रतियोगिकुक्षिनिःक्षिप्तीकरणेऽपि। मूर्त्तद्रव्येतरभेदस्यापीति यावत्। **असाधारणत्वात्**। अव्यापकत्वात्। निष्क्रियविनष्टमूर्त्तेः क्रियाविरहादिति भावः।

द्रव्यस्यैवायं धर्म इति प्रतिपादनस्यैव किं फलं तदाह **तस्मादिति**। **भागासिद्धिः**। द्रव्यत्वस्य भागासिद्धिः।

**ये तु प्रमाणमेव सर्वस्य व्यवस्थापकं न तु लक्षणम्। तदपेक्षाया-मनवस्थामाहुस्तेषां निन्दामि च पिबामि चेति न्यायः। यतोऽव्याप्त्यतिव्याप्ति-विरहेण तत्तदर्थव्यवस्थापकं तत्तद्व्यवहारे व्यवहारव्यवस्थापकं प्रमाण-मुपाददते तदेव लक्षणम्। अनुवादः स इति चेदस्माकमयमप्यनुवाद एव। न ह्यलौकिकमिह किञ्चिदुच्यते। न चानवस्था, वैद्यकादौ रोगादिलक्षणवद् व्याकरणादौ शब्दादिलक्षणवच्चेति व्यवस्थोपपत्तेः। तत्रापि सम्बन्ध-व्यवहारमाश्रित्य लक्षणेनैव व्युत्पत्तिरिति।**

**न तु लक्षणमिति**। तथा च पृथिवीत्वं कथं पृथिवीतरभेदव्यवस्थापकमित्यर्थः। **तदपेक्षायामिति**। लक्षणस्यापि साधने लक्ष्यान्तरापेक्षायामित्यर्थः। तैरपि लक्षणस्य वस्तुव्यवस्थापकत्वं स्वीक्रियत एवेत्याशयेन दूषयति। **तेषामिति**। **निन्दामि चेति**।

हतः किञ्चित्कया पिता।

तथाप्येनां स्वगोत्रघ्नीं

निन्दामि च पिबामि च॥ इत्यस्यैकदेशोत्कीर्त्तनमिदम्।

**यत इति**। **अव्याप्तिः**। भागासिद्धिः। **अतिव्याप्तिः**। व्यभिचारः। **तत्तदर्थव्यव-स्थापकम्**। तत्तद्धर्मावच्छिन्नेतरभेदव्यवस्थापकम्। **प्रमाणम्**। यं हेतुम्। **उपाददते**। स्वीकुरुते। **तदेवेति**। तथा च लक्षणं वस्तुव्यवस्थापकं नेति चोच्यते। लक्षणस्य वस्तुव्यवस्थापकत्वमपि स्वीक्रियते। अतो निन्दामि चेत्यस्य तुल्यतेति भावः।

ननु लक्षणस्य वस्तुनिश्चायकत्वं स्वीक्रियत एव, न तु वस्तुप्रमापकत्वम्। **तज्जन्य-ज्ञानस्य** गृहीतपक्षसाध्यग्राहित्वेनाप्रमात्वादित्यभिप्रायेणाशङ्कते **अनुवादः सेति**। अनुवादकतया हि निश्चयजनक इति यावत्। **सः**। अव्याप्त्यादिविरहविशिष्टस्तत्तद्धर्मा-वच्छिन्नेतरभेदसाधको हेतुः। **अस्माकमपि**। अस्मन्मतेऽपि। **अयम्**। पृथिव्यादेर्लक्षणं पृथिवीत्वादिः। **अनुवादः**। अनुवादकः। **अलौकिकमिति**। अप्रमितमित्यर्थः। **इह**। पृथिवीत्वादिना। **उच्यते**। साध्यते। **वैद्यकेति**। वैद्यकाद्युक्तरोगलक्षणवदित्यर्थः। **व्याकरणेति**। शब्दपदं प्रातिपदिकपरम्। व्याकरणाद्युक्तप्रातिपदिकादिलक्षणवच्चेत्यर्थः।

**व्यवस्थेति** । तस्य यथा लक्षणं विनैव तच्छास्त्रोक्तव्याप्यधर्मान्तरेण निश्चयस्तथात्रापीत्यर्थः । ननु तत्तद्ज्वरादिलक्षणानिश्चये का क्षतिरित्यत आह **तत्रापीति । सम्बन्धेति ।** प्रकृतधर्मविशेष्यकज्वरादिव्यवहारज्ञानसहकारेणेत्यर्थः । **व्युत्पत्तिः** । ज्वरादिव्यवहारशक्तिग्रहः ।

**क्षित्युदकात्मनां चतुर्दशगुणवत्त्वमिति साधर्म्यमुक्तम् । तत्र के ते चतुर्दशगुणाः पृथिव्यामत आह रूपेत्यादि । न तु गन्धसाहचर्याद् रूपादयोऽप्यसाधारणतामापन्ना इति युक्तम् । केवलस्यैव गन्धस्यासाधारणत्वे विशेषणसामर्थ्यात् । एतच्चानुपदमेव स्फुटयिष्यति ।**

ननु रूपादिमत्त्वं पृथिव्याः कथं लक्षणमतिव्याप्तत्वादित्यत आह **क्षित्युदकेति । अत आहेति ।** जिज्ञासायामाह । तथा च शिष्यजिज्ञासानुरोधादेतदुक्तं न तल्लक्षणत्वेनेति भावः ।

**केचित्तु** केवलरूपादिमत्त्वस्य केवलपृथिवीलक्षणत्वासम्भवेऽपि गन्धसामानाधिकरण्यविशिष्टरूपादिमत्त्वं लक्षणमेवेत्याहुः । तन्मतं निराकरोति **न त्विति । गन्धसाहचर्यादिति ।** गन्धसामानाधिकरण्यविशिष्ट इत्यर्थः । **असाधारणताम्** । लक्षणताम् । **असाधारणत्वे ।** व्याप्यत्वे । **विशेषणसामर्थ्यादिति ।** विशेष्यतेऽत्रेति विशेषणं विशेष्यम् । तस्य सामर्थ्यात् । अनतिप्रयोजनकत्वादित्यर्थः । **एतच्चेति** । गन्धस्यासाधारणत्वञ्चेत्यर्थः । **स्फुटयिष्यतीति** । पृथिव्यामेव गन्ध इत्यनेनेत्यर्थः ।

**एषु सूत्रकारसम्मतिमाह एते चेति । गुणानां विनिवेशो द्रव्येषु समवायः । स प्रतिपाद्यत्वेनाधिक्रियतेऽस्मिन्निति गुणविनिवेशाधिकारो द्वितीयोऽध्यायः । तथा च सूत्रम् अत्र "रूपरसगन्धस्पर्शवती पृथिवी" इति (वै० सू० २।१।१) सूत्रकारवचने रूपादयः सिद्धाः । संख्यादौ सूत्रकारसम्मतिमाह चाक्षुषवचनात् सप्तसंख्यादय इति । "संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि" इति (वै० सू० ४।१।११) सूत्रे संख्यादीनां चाक्षुषत्वे हेतुत्वेन रूपिद्रव्यसमवाय उक्तः । न चासिद्धस्य हेतुत्वमतस्तेऽपि रूपवत्यां पृथिव्यां सप्त सिद्धाः । पतनोपदेशाद् गुरुत्वमिति । "संयोगाभावे गुरुत्वात् पतनमिति (वै० सू० ५।१।७) पतने गुरुत्वस्य हेतोरुपदेशात् पतनवत्यां पृथिव्यां गुरुत्वमपि सिद्धम् । न ह्यसिद्धस्य हेतुत्वं नापि व्यधिकरणस्य कर्मासमवायिकारणत्वम्, नोदनादिषु विपर्यासदर्शनादिति । अद्भिः सामान्यवचनाद् द्रव्यत्वमिति । "सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्-**

**द्रवत्वमद्भिः सामान्यमिति" (वै० सू० २।१।६) सूत्रे सर्पिरादीनां द्रवत्वमद्भिः समानो धर्म इत्युक्तम् । अतो द्रवत्वं सिद्धम् ।**

**एते चेतीति** । एते च रूपादयो विशेषगुणा गुणविनिवेशाधिकारे सिद्धा इति भाष्ययोजना । एते स्पर्शान्ताश्चत्वारः । मूले **प्रतिपाद्यत्वेनेति** । प्रतिपाद्यतासम्बन्धेनेत्यर्थः । **अधिक्रियते** । प्रतीयते । **अत्रेति** । घटकत्वं सप्तम्यर्थः । अन्वयश्चास्य सूत्रकारवचने । **रूपिद्रव्यसमवाय** इति । सामान्यतोऽपि द्रव्यसमवाय उक्त इत्यर्थः । **रूपवत्यां पृथिव्याम्** । रूपिद्रव्यान्तर्गतायां पृथिव्याम् । विनिगमनाविरहादिति शेषः । **संयोगाभाव इति** । प्रतिबन्धकीभूतस्य पूर्वसंयोगस्याभाव इत्यर्थः । ननु पतनपूर्वसंयोगयोः केन रूपेण प्रतिबध्यप्रतिबन्धकभावः । न च पूर्वसंयोगस्य प्रतिबन्धकत्वे मानाभाव इति वाच्यम्; पूर्वसंयोगस्याप्रतिबन्धकत्वे गुरुत्वस्याविशिष्टतया सर्वदैव पतनापत्तेरिति भावः ।

**असिद्धस्येति** । अलीकस्येत्यर्थः । **विपर्यासदर्शनादिति** । विपर्यासो व्यधिकरणत्वविपर्यासः । सामानाधिकरण्यमिति यावत् । तेन चरमकारणत्वदर्शनादित्यर्थः । ननु गुरुत्वस्य पतनहेतुत्व एव मानाभावः । क्रियासामान्यं प्रति मूर्त्तत्वेन समवायिकारणतया मूर्त्तत्वाभावादेवाकाशादेः पतनाभावोपपत्तेः । वायुमनसोरतीन्द्रियतया तत्कर्मणोऽप्यतीन्द्रियत्वे तयोः पतनाभ्युपगमेऽपि क्षतिविरहात् । न च तथापि तेजसि पतनापत्तिर्दुर्वारैवेति वाच्यम् । अङ्गारादिसम्बन्धिवह्न्यादेः सुवर्णरजतादेश्च पतनस्यानुभवसिद्धतया तेजसः पतनाभ्युपगमात् । सुवर्णरजतादौ पतनानुभवस्य परम्परासम्बन्धेन पार्थिवभागवृत्तिपतनविषयत्वे मानाभावादिति चेन्न ।

सौराद्यालोकादेरङ्गाराद्यसम्बद्धवह्न्यादेः पतनवारणाय गुरुत्वस्य पतनकारणत्वावश्यकत्वात् । न च तद्वारणाय पतनं प्रति पृथिवीजलोभयमात्रवृत्तिजातिविशेषेण समवायिकारणतैवोपेयतामिति वाच्यम् । अतिरिक्तजातिकल्पने गौरवात् । समवायिकारणतायां तादात्म्यस्यावच्छेदकसम्बन्धतया कारणतावच्छेदकसम्बन्धगौरवात् । तेन रूपेण समवायिकारणत्वाभ्युपगमेऽपि भावकार्याणां समवायिकारणकत्वनियमानुरोधेन कस्यचिदसमवायिकारणस्यावश्यकत्वाच्चेति भावः । **समानो धर्म इति** । अत्रत्य **दीधितौ** समानो धर्म इति जलधर्मसजातीयो धर्म इत्यर्थः ।

**उत्तरकर्मवचनात् संस्कार इति । "नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च" इति (वै० सू० ५।१।१७) सूत्रे इषुकर्मोपदेशात् पार्थिवस्य उत्तरस्मिन् कर्मणि संस्कारः कारणतयोक्तः । अतः सोऽपि सिद्धः । उपलक्षणञ्चैतत् । आद्यकर्मकार्यतयाप्युक्तेस्तत्रैव सिद्ध इत्यपि द्रष्टव्यम् ।**

**तदनेन सूत्रकारसम्मतिप्रदर्शनव्याजेन सर्वत्र प्रमाणं दर्शितम्। तथाहि रूपादिष्वेकादशसु प्रत्यक्षम् । पतनलिङ्गकमनुमानं गुरुत्वे। अग्निसंयोगान्वयव्यतिरेकानुविधायितया नेदमिह क्षीरादिवत् । संयुक्तसमवायेनान्यस्येति प्रत्यक्षमेव सोपपत्तिकं द्रवत्वे। निरन्तरगतिसन्तान एव वेगव्यवहारहेतुरिति दुर्दुरूढविप्रतिपत्तिव्युदासाय कार्यलिङ्गकमनुमानं संस्कारे इति ।**

**संस्कारादिति**। वेगादित्यर्थः। **उत्तरमिति**। कर्मेति शेषः। **इषुकर्मोपदेशादिति**। इषौ संस्कारजन्यकर्मबोधनादित्यर्थः। **पार्थिवस्य**। पृथिव्याः। **उत्तरस्मिन् कर्मणि**। अभिघाताद्यजनककर्मणि। **आद्येति**। तत्रैव सूत्रे आद्यकर्मकार्यतया इषौ संस्कारस्योक्तेरिति योजना। **पतनलिङ्गकमिति**। क्षितिः गुरुत्ववती पतनवत्त्वात्। जलवदित्यनुमानमित्यर्थः।

अत्र **स्वतन्त्राः**। गुरुत्वस्य रसवन्मात्रवृत्तितया तस्य रसातिरिक्तगुणत्वे मानाभावः। एकतोलकत्वद्वितोलकत्वादिरपि मधुरत्वादिव्याप्यरसवृत्तिवैलक्षण्यमेव। पतनासमवायिकारणतापि रसत्वेनैव। न च रसस्यासमवायिकारणत्वं विजातीयनानारसवदवयवारब्धस्यावयविनो नीरसतया तत्र पतनानुपपत्तिरिति वाच्यम्। तत्राप्यवयविन्यव्याप्यवृत्तेर्वा विजातीयनानारसस्याभ्युपगमात्। अवयविवृत्तिगुरुत्वावयवपरम्परावृत्तिनानागुरुत्वव्यक्तीनामपेक्ष्यावयविवृत्तिसावयववृत्तिरसजातीयनानारसव्यक्तिकल्पनाया एव लघुत्वात्। न च तथापि अनुद्भूतरसे मानाभावान्नीरसस्य मणिवज्रादेः पतनं न स्यादिति वाच्यम्। प्रत्यक्षसिद्धरसद्रव्ये व्यक्तिकल्पनागौरवभिया पतनत्वावच्छिन्नं प्रति रसत्वेनासमवायित्वकल्पने पतनान्यथानुपपत्तौ तत्रापि गुरुत्वस्थानीयानुद्भूतमधुररसस्य कल्पनात्। रसनिष्ठानुद्भूतत्वञ्च मधुरत्वव्याप्यजातिविशेषः। सर्वस्मिन्नेवानुद्भूतरसे मधुरतिक्तत्वादिव्याप्यत्वे जलीयानुद्भूतरसे तदभावापत्तेः।

वस्तुतस्तु भास्वरेतररूपवत्त्वमेव गुरुत्वम्, अनुद्भूतरूपे मानाभावात्, नीरूपे पिशाचादौ गुरुव्यवहारेऽपि मानाभावात्, शक्यतावच्छेदकत्वेनापि लाघवात्। पदार्थसिद्ध्यभ्युपगमे तु जलपृथिव्युभयमात्रवृत्तिजातिविशेष एव गुरुत्वम्। रसस्य तथात्वे विजातीयनानारसवदवयवारब्धेऽवयविनि विजातीयानन्तनानारसव्यक्तीनां मणिवज्रादावनुद्भूतानन्तरसव्यक्तीनाञ्च कल्पने गौरवापत्तेः। रसनिष्ठानुद्भूतत्वस्य रासनत्वावच्छिन्नं प्रति अनुद्भूतेतररसत्वेन कारणत्वस्य च कल्पनायां गौरवापत्तेश्च। एकतोलकत्वादिकमपि (गुरुत्वविरुद्ध ?) शुक्लत्वनीलत्वादिव्याप्यपृथिवीजलीयरूपमात्रवृत्तिवैलक्षण्यमेव। पतनं प्रति कारणतापि भास्वरेतररूपित्वेन। नीरूपस्य पिशाचादेः पतने मानाभावात्।

अस्तु वा रूपत्वेनैव पतनासमवायिकारणता। न चैवं सौराद्यालोकादेरपि पतनापत्तिरिति वाच्यम्, तत्तद्व्यक्तिसमवेतसत्त्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन

समवायिकारणत्वस्यावश्यकतया तत एव तद्वारणसम्भवात्। पृथिवीजलसमवेतातिरिक्तस्य पतनस्यालीकत्वात्। न चैवं रूपत्वेनाप्यसमवायिकारणत्वे मानाभाव इति वाच्यम्। भावकार्याणामसमवायिकारणकत्वस्यावश्यकतया तदभ्युपगमात्। न च स्पर्शत्वसंख्यात्वादिमादाय विनिगमनाविरहः। समवायिकारणानां तत्तद्व्यक्तित्वेन कारणतयैवातिप्रसङ्गभङ्गसम्भवादिति वाच्यम्। तस्य रसत्वरूपत्वमपेक्ष्य बहुतराजननसाधनत्वात्। नियताजनकव्यावृत्तधर्मेण कारणत्वसम्भवात् तत्साधारणधर्मेण तत्कल्पनानुदयात्।

न च रसस्य रूपस्य वा पतनासमवायिकारणत्वे तदुत्कर्षेण पतनोत्कर्षापत्तिः। अत्युत्कटमधुररसतोऽपि द्राक्षादेरत्युत्कटनीलरूपवतोऽप्यञ्जनादेरपकृष्टपतनदर्शनेन इष्टापत्तेरसम्भवादिति वाच्यम्। कारणनिष्ठोत्कर्षापकर्षमात्रस्य कार्यनिष्ठोत्कर्षापकर्षप्रयोजकत्वात्। नन्वेवं पतननिष्ठोत्कर्षं प्रति किं प्रयोजकम्? गुरुत्वस्यासमवायिकारणत्वे तन्निष्ठोत्कर्षस्यैव तत्र प्रयोजकत्वसम्भवात्। न च मधुरतरत्वाद्यतिरिक्तरसनिष्ठोत्कर्षो नीलतरत्वाद्यतिरिक्तरूपनिष्ठोत्कर्षो वा तत्र प्रयोजक इति वाच्यम्। मधुरत्वमधुरतरत्वनीलत्वनीलतरत्वादिमादाय साङ्कर्यापत्तेः।

न च तदुत्कर्षो मधुरत्वादिव्याप्यो न वेति वाच्यम्, तथा सति उत्कृष्टपतनं प्रति परस्परव्यभिचारापत्तेः। न च पतननिष्ठोत्कर्षस्यापि नानात्वाभ्युपगमान्न व्यभिचार इति वाच्यम्। तथासति तिक्तमधुरादिविजातीयनानारसादिमत्यवयविनि वर्त्तमाने उत्कृष्टपतने मधुररसनिष्ठोत्कर्षादिजन्यतावच्छेदकतिक्तरसनिष्ठोत्कर्षादिजन्यतावच्छेदकपतननिष्ठोत्कर्षयोः साङ्कर्यापत्तेः। न च तत्र युगपत् परस्परविजातीयनानापतनानभ्युपगमान्न साङ्कर्यमिति वाच्यम्, तथासति एकत्रैव तादृशावयविव्यक्तिषु प्रत्येकं कालभेदेन अनन्तपतनव्यक्तिकल्पनासाम्यात्। उत्कृष्टपतनं प्रति मधुरतरत्वमधुरतमत्वतिक्ततरत्वतिक्ततमत्वादिव्याप्त्या उत्कर्षभेदेनानन्तकार्यकारणभावकल्पनायास्तादृशोत्कर्षावच्छिन्नरसादिकं प्रति मधुरतिक्तादिभेदेन तादृशोत्कर्षावच्छिन्नरसादेरसमवायिकारणत्वकल्पनायाश्चाधिकत्वात्। उत्कृष्टापकृष्टपतनातिरिक्तपतनस्य अलीकतया सामान्यतः पतनत्वावच्छिन्नं प्रति रसत्वादिना असमवायिकारणत्वे मानाभात्। पतननिष्ठोत्कर्षादिप्रयोजकोत्कर्षादिकं रसरूपनिष्ठं वा कल्प्यते पृथिवीजलनिष्ठस्पर्शादिनिष्ठं वेत्यत्र विनिगमनाविरहप्रसङ्गाच्च। गुरुत्वनिष्ठतत्कल्पनायाञ्च न विनिगमनाविरहः। क्लृप्तकल्प्ययोर्विनिगमनाविरहानभ्युपगमादिति।

मैवम्। गुरुत्वस्यासमवायिकारणत्वेऽपि तन्निष्ठजातेरुत्कर्षापकर्षयोर्न पतननिष्ठोत्कर्षापकर्षप्रयोजकत्वम्। किन्तु प्रचुरगुरुत्वसमवहितगुरुत्वञ्चोत्कृष्टपतनजनकमित्येव सिद्धान्तः। गुरुत्वसमवहितत्वञ्च समवायिसमवेतत्वसमवायिसमवेतसमवेतत्वसमवायिसंयुक्तसमवेतत्वादिलक्षणपरम्परासम्बन्धघटितसामानाधिकरण्यसम्बन्धेन गुरुत्वविशिष्टत्वम्।

न च लाघवाद् गुरुत्वनिष्ठजातेरुत्कर्षापकर्षयोरेव पतनोत्कर्षापकर्षप्रयोजकत्वमुचितमिति वाच्यम्। तथासति अपकृष्टगुरुत्ववतां बहूनामवयविनां सम्बलनदशायामुत्कृष्टपतनानुपपत्तेः। असम्बलनदशायां प्रत्येकगुरुत्वात् तादृशोत्कृष्टपतनाभावेन अपकृष्टपतनोत्पादेन च तत्र प्रत्येकगुरुत्वनिष्ठोत्कर्षस्य वक्तुमशक्यत्वात्। न च समाहारगुरुत्वस्थले पतनस्य नोत्कृष्टत्वमपि तु अपकृष्टत्वमेव। यथोक्तपरम्परासबन्धेन प्रचुरतरगुरुत्वसमवहितत्वनिबन्धनमेव चोत्कृष्टत्वव्यवहार इति वाच्यम्। तथासति सर्वत्रैव पतननिष्ठोत्कृष्टापकृष्टव्यवहारस्य प्रचुराप्रचुरगुरुत्वसमवधानेनैव सम्भवात् पतननिष्ठोत्कर्षापकर्षयोरेवासिद्ध्यापत्तेः।

इत्थञ्च रसरूपयोरसमवायिकारणत्वेऽपि तन्निष्ठजातिरूपोत्कर्षापकर्षयोर्न पतनोत्कर्षापकर्षप्रयोजकत्वम्; किन्तु प्रचुरतरसमवहितरसः प्रचुरतरसमवहितरूपं वा उत्कृष्टपतनहेतुः। अल्पतरासमवहितरसोऽल्पतरासमवहितरूपं वापकृष्टपतनहेतुरिति न काप्यनुपपत्तिः। अन्यथा पतनासमवायिकारणतया गुरुत्वस्येव वह्न्यादिनिष्ठोर्ध्वज्वलनाद्यसमवायिकारणतया लघुत्वस्यापि कस्यचिद् गुणस्य सिद्ध्यापत्तेरित्याहुः।

तदसत्। एवं सति स्नेहसांसिद्धिकद्रवत्वयोरपि भेदविलोपापत्तेः। यदि च तयोरभेदे 'स्नेहः सांसिद्धिकद्रवत्वाद् भिन्न' इति प्रतीतिर्न स्यादिति तयोर्भेदसिद्धिस्तदा गुरुत्वस्यापि रसाद्यभिन्नत्वे 'रसो गुरुत्वभिन्न' इत्यादिप्रतीतिर्न स्यात्। स्याच्च 'रसमास्वादयामी'त्यादिप्रतीतिवत् 'गुरुत्वमास्वादयामी'त्यादिरपि प्रतीतिः। न स्याच्च रसनादिना रसादिनिश्चयानन्तरम् 'अयं गुरुर्न वे' ति संशय इति तुल्यमिति दिक्।

**अग्निसंयोगेति**। घृतादौ द्रवत्वप्रत्यक्षस्याग्निसंयोगान्वयव्यतिरेकविषयितयेत्यर्थः। **इदं द्रवत्वम्**। इह घृतजलादौ। **क्षीरादिवदिति**। सप्तम्यन्तत्वेऽपि व्यतिरेके दृष्टान्तः। **संयुक्तसमवायेन**। स्वसमवायिसंयुक्तत्वेन। **सोपपत्तिकमिति**। साक्षात्सम्बन्धावगाहितासाधकयुक्तिसहकृतमित्यर्थः।

**निरन्तरेति**। निरन्तरत्वं क्रमिकत्वम्। स्वसमानाधिकरणधर्मनाशाव्यवहितोत्तरोत्पन्नमिति यावत्। **कार्यलिङ्गकमिति**। द्वितीयं कर्म असमवायिकारणकं कर्मत्वाद् आद्यकर्मवदित्यनुमानमित्यर्थः। **संस्कार इति**। प्रमाणमादर्शितमित्यनुषज्यते। न चोक्तानुमाने कर्मणा अर्थान्तरमिति वाच्यम्। कर्मवति कर्मान्तरानुत्पत्त्या कर्मनाशोत्तरमेव कर्मान्तरसम्भवात्। अन्यथा सर्वत्रैव कर्मधारापत्तेरिति भावः। एतच्चापाततः। अनवरतपरिस्पन्दमानबोधे हि अभिघातस्यैव द्वितीयादिकर्मासमवायिकारणत्वसम्भवात्। तस्य च फलबलकल्प्यतया न सर्वत्र कर्मधारेति ध्येयम्।

**एवं गुणवत्त्वेन द्रव्यत्वे व्यवस्थितो पृथिवीत्वव्यवस्थाहेतून् गुणविशेषानाकृष्य दर्शयति। क्षितावेव गन्धो वर्त्तते न द्रव्यान्तरे। तेन गन्ध-**

**समवायः पृथिवीत्वव्यवस्थाहेतुरित्युक्तं भवति। यत्तु 'सुगन्धि सलिलं' 'सुरभिः समीरणः' इति तत्पार्थिवकुसुमाद्यधिवासनिबन्धनम्, तदन्वयव्यतिरेकानुविधानात्, न तु स्वभावत इत्यवधेयम्।**

**ननु तथाप्यव्यापको गन्धः क्षितेः, वक्ष्यमाणेषु मणिवज्रादिषु अनुपलब्धेः। तत् कथं व्यवस्थाहेतुः? न। पाकेन पूर्वरूपनिवृत्तौ रूपान्तरोत्पत्तौ च पाकजरूपस्य च गन्धसहचारितया तत्रापि तदनुमानात्। अनुद्भवात् तदनुपलम्भः, तत्र घ्राण इव।**

**पृथिवीत्वव्यवस्थाहेतूनिति।** पृथिवीत्वावच्छेदेन तदवच्छिन्नेतरभेदसिद्धिहेतूनित्यर्थः। यथाश्रुते तत्कथं व्यवस्थाहेतुरित्यग्रिमग्रन्थासङ्गतेः। **गन्धसमवाय इति।** समवायसम्बन्धेन गन्ध इत्यर्थः। **पृथिवीत्वव्यवस्थाहेतुरिति।** पृथिवीत्वावच्छेदेनेतरभेदसिद्धिहेतुरित्यर्थः। **समीरण इतीति।** प्रत्यक्षमिति शेषः। **तत्।** प्रत्यक्षम्। **कुसुमाद्यधिवासनिबन्धनमिति।** कुसुमादिगन्धप्रकारकमित्यर्थः। **तदन्वयेति।** सलिलादौ कुसुमादिसम्बन्धान्वयव्यतिरेकाणां विधानादित्यर्थः। **न तु स्वभावत इति।** न तु स्वविशेष्यीभूतसलिलादिवृत्तिगन्धत इत्यर्थः। तथासति कुसुमादिसम्बन्धान्वयव्यतिरेकानुविधानं न स्यादिति भावः।

**ननु तथापीति।** क्षितेरव्यापको गन्ध इति योजना। **वक्ष्यमाणेष्विति।** पृथिवीतया वक्ष्यमाणेष्वित्यर्थः। **व्यवस्थाहेतुरिति।** पृथिवीत्वावच्छेदेन तदवच्छिन्नेतरभेदसिद्धिहेतुरित्यर्थः। भागासिद्धत्वादिति भावः। पिठरपाकमतमाश्रित्य समाधत्ते **पाकेनेति। रूपान्तरोत्पत्तौ चेति।** अनुभूतायामिति शेषः। **गन्धसहचारितया।** गन्धव्याप्यतया। नन्वेवं कुतो नोपलभ्यत इत्यत आह **अनुद्भवादिति। तत्र** मणिवज्रादिषु। घ्राण इवेत्यनन्तरं इत्यभिप्रायेणाहेति क्वचित् पाठः। स च प्रामादिकः।

**रूपमनेकप्रकारं शुक्लादि क्षितावेव इत्यनुवर्त्तते। यद्यपि शुक्लादिरूपं समुच्चयेन न सम्भवति। स हि जातिसमुच्चयो विरोधादेवानुपपन्नः। व्यक्तिसमुच्चयोऽपि न, व्याप्त्यानुपलम्भबाधितत्वात्। नाप्यव्याप्त्या। व्याप्यवृत्तिजातीयताविरोधात्। किमेतत् तर्हि चित्रं रूपमिति। यथा शुक्लमिति शुक्लजातीयं तथा चित्रमिति चित्रजातीयं व्याप्यवृत्त्येव। प्रत्येकञ्च न क्षितेरवच्छेदहेतुर्भागासिद्धत्वात्। तथापि क्रमेण शुक्लाद्यनेकरूपसमवायलक्षणः समुच्चयः क्षितावेव।**

**क्षितावेवेत्यनुवर्त्तत इति।** तथा चानेकप्रकारं शुक्लादिरूपं क्षितावेवेति योजनेति भावः। अनेकप्रकारमित्यस्य शुक्लत्वनीलत्वाद्यात्मकरूपत्वसाक्षाद्व्याप्यात्मकवैजात्य

**विशिष्टमित्यर्थं** इत्यभिप्रायेणाशङ्कते **यद्यपीति । समुच्चयेन न सम्भवतीति** । रूपत्व-साक्षाद्व्याप्यजातिसमूहविशिष्टं न सम्भवतीत्यर्थः । वैशिष्ट्यस्य तृतीयार्थत्वात् । **स हीति** । **हि** यस्मात् । **स जातिसमुच्चयः** । रूपत्वसाक्षाद्व्याप्यरूपो जातिसमूहः । **विरोधादेवेति** । शुक्लत्वनीलत्वादीनां गोत्वाश्वत्ववत् परस्परं विरुद्धत्वादेवेत्यर्थः । **अनुपपन्नः** । ननु अनेकप्रकारपदमनेकत्वविशिष्टपरम् । शुक्लादिपदञ्च स्वरूपकथनम् । न चानेकं रूपं क्षितावेवेति फलितार्थः । स च पृथिव्यां नानुपपन्नः । शुक्लपीतादिविजातीयनानारूप-वदवयवावयविनो नानारूपसत्वादित्यत आह **व्यक्तिसमुच्चयोऽपि न । व्याप्त्येति** । रूपव्यक्तिसमूहोऽपि नैकत्र पृथिवीव्यक्तौ व्याप्यवृत्तिरित्यर्थः । **अनुपलम्भबाधितत्वा-दिति** । पीतावयवाद्यवच्छेदेन चक्षुःसन्निकर्षे शुक्लाद्यनुपलम्भेन व्याप्यवृत्तित्वस्य बाधितत्वादित्यर्थः । **अव्याप्त्येति** । अव्याप्यवृत्तिरित्यर्थः । वैशिष्ट्यस्य तृतीयार्थत्वात् । **व्याप्यवृत्तिजातीयतेति** । शुक्लत्वादिजातेर्व्याप्यवृत्तिजातिरूपत्वाभावप्रसङ्गादित्यर्थः । अव्याप्यवृत्तिसविषयावृत्तिजातेः व्याप्यवृत्तिजातित्वाभावनियमादिति भावः । सविषया-वृत्तीत्युपादानाद् व्याप्यवृत्तिभगवज्ज्ञानादौ वर्त्तमानस्य ज्ञानत्वादेरव्याप्यवृत्त्यस्मदादि-ज्ञानादिनिष्ठत्वेऽपि न व्यभिचारः ।

**किमेतदिति** । किं रूपमित्यर्थः । **तर्हीति** । यद्येकस्मिन्नधिकरणेऽवच्छेदक-भेदेन नानारूपवत्त्वं तदेत्यर्थः । **चित्रं रूपमितीति** । व्यवहारस्य विषय इति शेषः । स्वसमानकालीनविजातीयरूपसम्बलितस्यैव तादृशव्यवहारविषयत्वादिति भावः । **यथा शुक्लमितीति** । व्यवहारस्य विषय इति शेषः । **शुक्लजातीयम्** । शुक्लत्वरूप-रूपत्वावान्तरजातिविशिष्टम् । **तथा चित्रमितीति** । व्यवहारस्य विषय इति शेषः । **चित्रजातीयम्** । चित्रत्वात्मकरूपत्वावान्तरजातिविशिष्टम् ।

ननु "रूपमनेकप्रकारं शुक्लादि" इत्यस्य शुक्लत्वाद्यात्मकरूपत्वसाक्षाद्व्याप्य-निखिलवैजात्यं पृथिवीतरभेदानुमापकतावच्छेदकमित्यत आह **प्रत्येकञ्चेति** । अनेकं शुक्लादिरूपं क्षितावेवेत्येव तदर्थः । न च क्षितावुक्तक्रमेण तदसम्भवः । तत्र युगपन्नाना-रूपवत्त्वासम्भवेऽपि एकस्यामेव पृथिवीपरमाणुव्यक्तौ पाकात् कालभेदेन तत्सम्भवादि-त्यभिप्रायेण समाधत्ते **तथापीति । क्रमेण** । विभिन्नकालावच्छेदेन । **शुक्लादीति** । स्वरूपकथनम् । यद्यप्येवमपि पार्थिवावयविनि भागासिद्धिस्तदवस्था तत्र क्रमेणापि नानारूपत्वासम्भवात्, पिठरपाकानभ्युपगमात् । तदभ्युपगमेऽपि यत्रावयविनि न तथा तत्र भागासिद्धिर्दुर्वारा । तथाप्यनेकरूपवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यम् । अनेकरूपवद्वृत्तित्वं रूपद्वयवद्वृत्तित्वम् । पार्थिवपरमाणोः पाकजक्रमिकरूपवत्त्व-मादायैव पृथिव्यां लक्षणसमन्वय इति स्फोरणाय क्रमेणेत्युक्तम् ।

वस्तुतस्तु रूपत्वसाक्षाद्व्याप्यानेकजातिमद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यम् । अनेकजातिमत्त्वं जातिद्वयवत्त्वम् । तच्च स्वाश्रयसमवायित्वसम्बन्धेन बोध्यम् ।

नातोऽवान्तरानेकसामान्यविशेषरूपवतीति लक्षणार्थं इत्यग्रिमग्रन्थविरोधः, तच्च तत्रैव स्फुटीकरिष्यामः।

**किञ्च शुक्लशुक्लतरशुक्लतमाद्यवान्तरजातिमद्रूपं क्षितावेव नान्यत्र। जलस्य हि शुक्लत्वेऽपि नावान्तरतारतम्यमस्ति। पार्थिवद्रव्यसंयोगात्तथा प्रतिभासः। एवं तेजसोऽपि शुक्लभास्वरैकस्वभावत्वेऽपि स्वाभाविकविशेषाभावः।**

**ये पुनराहुः शुक्लत्वादिकमेव सामान्यं नास्ति कुतस्तदवान्तरतारतम्यम्? एकैका एव हि शुक्लारुणादिव्यक्तयोऽनित्याभिर्द्रव्यव्यक्तिभिर्व्यज्यन्ते। तारतम्यन्त्वमूषामाश्रयमिश्रतया। यथा यथा हि धवले कृष्णद्रव्यानुप्रवेशस्तथा तथा तारतम्यावभास इति।**

**तदयुक्तम्। तेषामाश्रयस्थितावपि पावकसंयोगात्पूर्वं रूपनिवृत्तिरुत्तररूपोत्पादश्च न स्यात्। अनेकव्यक्तिसमवेतस्य निरतिशयस्य नित्यस्य सामान्यादन्यत्वं नोपपद्यते। अस्तु शुक्लादिकं सामान्यमेवेति चेन्न। गोत्वादिना परापरभावानुपपत्तौ जातिसङ्करप्रसङ्गादिति।**

केवलशुक्लरूपघटितसाधर्म्यपरतया व्याचष्टे **किञ्चेति**। प्रथमशुक्लपदं निकृष्टशुक्लपरम्। **अवान्तरेति**। शुक्लत्वावान्तरेत्यर्थः। एवञ्च भाष्ये "अनेकप्रकार"पदं शुक्लत्वावान्तरजातिविशिष्टपरम्। 'शुक्लादि' इत्यत्र शुक्लपदं निकृष्टशुक्लपरम्। तथा च निकृष्टशुक्लादिलक्षणं शुक्लत्वावान्तरजातिविशिष्टं रूपं क्षितावेवेति भाष्ययोजनेति भावः।

यद्यप्येतादृशं रूपं जलादावप्यस्ति कस्यचिज्जलीयशुक्लस्य पृथिवीशुक्लापेक्षयोत्कर्षवत्त्वात्, कस्यचिच्च तदपेक्षयापकर्षवत्त्वाच्च। तथापि स्वसमानाधिकरणशुक्लप्रतियोगिकापकर्षाश्रयशुक्लसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यम्। स्वं द्रव्यत्वव्याप्यजातिः जलादिशुक्लरूपन्तु न जलादिशुक्लप्रतियोगिकापकर्षाश्रयः, किन्तु पृथिवीरू।पेक्षयैवापकर्षाश्रय इति तद्व्युदासः। एवमुत्कर्षघटितमपि लक्षणान्तरं बोध्यम्।

जलेऽतिव्याप्त्यभावं विवृणोति **जलस्येति**। **नावान्तरेति**। न तदीयशुक्ले तदीयशुक्लापेक्षया शुक्लत्वावान्तरप्रकर्षनिष्कर्षौ स्त इत्यर्थः। नन्वेवमिदं जलमेतज्जलापेक्षयापकृष्टशुक्लवदित्यादिधीः कथं स्यादित्यत आह **पार्थिवेति**। **शुक्लभास्वरैकस्वभावत्वेऽपीति**। शुक्लभास्वररूपधर्मकत्वेऽपीत्यर्थः। **स्वाभाविकेति**। तदीयभास्वररूपे तदीयभास्वररूपापेक्षया जातिरूपप्रकर्षनिकर्षाभाव इत्यर्थः। **शुक्लत्वादिकमेवेति**। शुक्लादिपदप्रवृत्तिनिमित्तमेवेत्यर्थः। **सामान्यं नास्ति**। सामान्यं न भवति। **तारतम्यमिति**। तरतमपदप्रवृत्तिनिमित्तमित्यर्थः। सामान्यमिति शेषः।

ननु शुक्लारुणादिरूपव्यक्तीनां नित्यत्वे तदाश्रयीभूतव्यक्तीनां समवायिकारणत्वं न स्यादित्यत्राह **द्रव्यव्यक्तिभिरिति**। तथा चाश्रयीभूतद्रव्यव्यक्तीनां सन्निकर्षघटकतया वा तत्र व्यञ्जकत्वमेव न तु जनकत्वमिति भावः। **तारतम्यन्त्विति**। तारतम्यप्रत्ययस्तु इत्यर्थः। **अमूषाम्**। शुक्लारुणादिव्यक्तीनाम्। **आश्रयमिश्रतयेति**। विजातीयरूपान्तराश्रयसम्बलिततयेत्यर्थः। तदेव विवृणोति **यथा यथा होति**। **अनुप्रवेश इति**। ईषदर्थे 'अनुः'। अल्पप्रवेश इत्यर्थः। दूषयति **तेषामिति**। मत इति शेषः। न च रूपसमवाय एव तस्य व्युत्पाद्यत इति वाच्यम्। तर्हि 'रूपसमवायो नष्टः', 'रूपसमवायो जातः' इत्येव धीः स्यान्न तु 'रूपं विनष्टं', 'रूपमुत्पन्न'मिति धीरन्यतमत्वे च घटादेरप्युत्पादविनाशसिद्धेरिति भावः।

किञ्च शुक्लारुणादिव्यक्तीनामेकैकत्वे नित्यत्वे च सामान्यपदवाच्यत्वापत्तिरित्याह **अनेकेति**। **निरतिशयस्य**। अतिशयः समवायत्वम्। तच्छून्यस्य समावायभिन्नस्येति यावत्। एतच्च समवायस्यापि स्वात्मकसमवायसम्बन्धेन वर्त्तमानतया तत्र सामान्यपदवाच्यत्वव्यभिचारवारणाय। तेन आपाद्यापादकयोर्नभेदः।

न च संस्थानव्यङ्ग्यत्वमपि सामान्यपदप्रवृत्तिनिमित्तघटकमिति वाच्यम्। गौरवादिति भावः। **परापरभावानुपपत्ताविति**। परापरभावविरहेणेत्यर्थः। एतच्चापाततः। गोत्वादिव्याप्यं नानैव शुक्लादिसामान्यमित्यस्यापि सुवचत्वादिति ध्येयम्।

**रसः षड्विधो मधुरादिरिति। अस्यापि व्याप्तिर्मण्यादिषु गन्धवत् पाकजरूपेणानुमानात्। अत्राप्यवान्तरानेकसामान्यविशेषवान् रसः पृथिव्यामेवेति वाक्यार्थः। अपामव्यक्तमधुर एव हि स्वाभाविको रसः। अवान्तरभेदास्तु नारिकेलादिजलगताः पार्थिवद्रव्योपाधिकाः। तेन गन्धवती पृथिवी अवान्तरानेकसामान्यविशेषवद्रूपवती अवान्तरानेकसामान्यविशेषवद्रसवती चेति लक्षणार्थः।**

**व्याप्तिः**। व्याप्तिसिद्धिः। सत्त्वसिद्धिरिति यावत्। **अवान्तरानेकेति**। रससम्बन्धेन रसत्वसाक्षाद्व्याप्यानेकधर्मविशेषः पृथिव्यामेवेत्यर्थः। धर्मविशेषः समवेतो धर्मः। अन्यतरत्वादियावत्त्वादिवारणाय समवेतत्वप्रवेशः। यथाश्रुतं तु न सङ्गच्छते। तादृशानेकधर्मवतो रसस्याप्रसिद्धेः।

यद्यपीदं पार्थिवावयविन्यव्याप्तं तत्र क्रमेणापि नानारसत्वासम्भवात्, पिठरपाकानभ्युपगमात्। तदभ्युपगमेऽपि यत्रावयविनि एक एव रसस्तत्राव्याप्तिर्दुर्वारा। तथापि तादृशधर्मद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यम्। तादृशधर्मद्वयवत्त्वञ्च स्वसमवायिसमवेतत्वलक्षणपरम्परासम्बन्धेन ग्राह्यम्। जलेऽतिव्याप्तिं वारयति **अपामिति**। **अव्यक्तेति**। ईषदित्यर्थः। तच्च मधुरत्वव्याप्यापकर्षविशेषः।

नन्वेवं नारिकेलादिजले उत्कटमधुररसोपलब्धिरनुपपन्नेत्यत आह **अवान्तर-भेदास्त्विति ।** मधुरत्वव्याप्योत्कटत्वविशिष्टास्त्वित्यर्थः । **नारिकेलादिजलगताः ।** नारिकेलादिजले प्रतीयमानाः । **पार्थिवद्रव्योपाधिकाः ।** पार्थिवद्रव्यसमवायिकारणकाः । पार्थिवद्रव्यसमवेता इति यावत् । परम्परासम्बन्धेन नारिकेलादिजले प्रतीयन्ते । अन्यथा पार्थिवद्रव्यान्वयाद्यनुविधानानुपपत्तेरिति भावः ।

"क्षितावेव गन्धः, रूपमनेकप्रकारकं शुक्लादिः; रसः षड्विधो मधुरादिः" इति लक्षणवाक्यद्वयार्थं निष्कृष्याह **तेनेति । अवान्तरानेकेति ।** स्वाश्रयीभूतरूपसम्बन्धेन रूपत्वसाक्षाद्व्याप्यानेकधर्मविशेषवतीत्यर्थः । **अवान्तरानेकेति ।** रससम्बन्धेन रसत्वसाक्षाद्व्याप्यानेकधर्मविशेषवतीत्यर्थः । धर्मविशेषः समवेतधर्मः । **लक्षणार्थः ।** लक्षणवाक्यत्रयार्थः ।

**स्यादेतत् । यथा रूपवत्त्वाविशेषेऽपि त्रयाणामनेकविधरूपवती पृथिवी, स्वच्छधवलरूपवज्जलम्, शुक्लभास्वररूपवत्तेजस्तथा गन्धावान्तर-प्रकारभेदमाश्रित्य द्रव्यभेदः स्यादित्यत आह गन्धो द्विविधः । सुरभिर-सुरभिश्च । क्षितावेवेत्यनुवर्त्तते न द्रव्यान्तरे । पाकजः खल्वयमेकस्मिन्नेव द्रव्ये कालभेदेन वर्त्तमानः प्रकारभेदवानपि न द्रव्यान्तरव्यवस्थाहेतुरिति भावः ।**

ननु गन्धमात्रस्यैवेतरभेदसाधकत्वात् तद्भेदकथनं प्रकृतानुपयोगीत्यत आह **यथेति । अनेकविधरूपवतीति ।** रूपसम्बन्धेन रूपत्वसाक्षाद्व्याप्यानेकजातिमतीत्यर्थः । **द्रव्यभेदः स्यादिति ।** तदाश्रयीभूतयोर्द्रव्ययोर्द्रव्यत्वसाक्षाद्व्याप्यजात्यावैलक्षण्यं स्यादित्यर्थः । **प्रकारभेदवानपि ।** गन्धत्वव्याप्यभिन्नजातिमानपि ।

**स्पर्शोऽस्या अनुष्णाशीतः पाकजः । पाकजस्पर्शवती पृथिवीति लक्षणार्थः । अत्र हि स्पर्शवतीत्युच्यमाने तेजसा अपाकजस्पर्शवतातिव्याप्ति-रतः पाकजस्पर्शवतीति । अत्र च गन्धरूपरसानां पाकजत्वं सदपि नोक्तं स्फुटत्वात् । स्पर्शस्य तथात्वे विप्रतिपत्तिः । न हि गन्धादिवद् विशेषतः स्पर्शः पाकस्यान्वयव्यतिरेकावनुविधत्ते । पार्थिवत्वमात्रेण तथा कल्पने परि-माणादिष्वपि तथा प्रसङ्गात् । तदेतद् विप्रतिपत्तिबीजमपनिनीषुरेवेद-मुक्तवान् पाकजः स्पर्श इति ।**

भाष्यमवतारयति स्पर्शोऽस्या इत्यादि । पाकज इत्यन्तं भाष्यग्रन्थः । **अत्र हीति ।** यद्यपि पाकजत्वं परमाणुस्पर्श एवेत्यव्याप्तिस्तथापि पाकजस्पर्शसमानाधिकरणवाय्व-वृत्तिजातिमतीत्यर्थः । सत्ताद्रव्यत्ववारणार्थं वाय्ववृत्तित्वं जातिविशेषणम् ।

ननु पार्थिवगन्धरसरूपाणामपि पाकजतया तत्र पाकजत्वमनभिधाय तत्स्पर्शस्यैव पाकजत्वं कथमभिहितम् ? न च स्पर्शस्य पाकजत्वानभिधाने लक्षणत्वमेव सम्भवति जलादावतिव्याप्तेरिति वाच्यम्, अनुष्णाशीतविशेषणेनैव तद्वारणसम्भवात्। न च तथापि वायावतिव्याप्तिरिति वाच्यम्, पार्थिवावयविन्यव्याप्तिवारणाय वाय्ववृत्तिजातिघटिताया आवश्यकतया तत एव वारणसम्भवादित्यत आह **अत्र चेति**। पृथिव्याश्चेत्यर्थः। **तथात्वे**। पाकजत्वे। जलादिपरमाणुस्पर्शवत् पार्थिवपरमाणुस्पर्शस्यापि नित्यत्वस्यैव युक्तत्वात्। अन्यथा कार्यकारणभावद्वयकल्पनापत्तेः। स्पर्शनिष्ठपाककारणगुणोभयजन्यतावच्छेदके वैजात्यद्वयकल्पनापत्तेश्चेति भावः। **विशेषतः**। स्पर्शादिरूपत्वेन। **पार्थिवत्वमात्रेण**। पृथिवीपरमाणुवृत्तिगुणत्वमात्रेण। **तथा कल्पने**। पाकजत्वकल्पने। **अपनिनीषुः**। अपनयनेच्छुकः।

**यदि हि पाकजो न स्यात् संख्यापरिमाणादिवदविशिष्टः स्यात्। तथा चाशीविषवृश्चिककीटादिदंशेषु, शूकशिम्बिवृश्चिकपत्रिकादिषु स्पृष्टेषु च दृष्टो दुःखविशेषो नोपपद्यते। मणिमूलादिविशेषेषु च स्पृष्टेषु तदुपशमो न स्यात्। गवादिचाण्डालादिस्पर्शे विधिनिषेधौ न स्याताम्। न च द्रव्यमात्रे तावुपपद्येते। दर्शनस्पर्शनाघ्राणास्वादनभेदेन मातङ्गमदिरादिषु प्रायश्चित्तभेदानुपपत्तिप्रसङ्गात्। तस्मात् पार्थिवस्पर्शोऽपि पाकजः, पार्थिवविशेषगुणत्वाद् गन्धवदित्यवधेयम्।**

पाकजत्वे युक्तिमाह **यदि हीति**। **पाकजो न स्यादिति**। पाकजवृत्तिगुणत्वव्याप्यजातिमान् न स्यादित्यर्थः। तेन अवयविस्पर्शे न व्यभिचारः। **अविशिष्टः स्यादिति**। दुःखविशेषादिप्रयोजकवैजात्यरहितः स्यादित्यर्थः।

नन्विष्टापत्तिरित्यत आह **तथा चेति**। **दंशेषु**। दन्तसंयोगेषु। **शूकशिम्बिः**। कपिकच्छ्वपरनामा लताविशेषः। **स्पृष्टेषु च**। त्वक् संयुक्तेषु च। एवमग्रेऽपि। **दृष्टः**। अनुभवसिद्धः। **नोपपद्यते**। विलक्षणस्पर्शवत्संयोगवत्त्वेनैव तन्नाशकत्वादिति भावः। एतच्चापाततः। विषनिष्ठवैलक्षण्यस्यैव तत्र प्रयोजकत्वादित्यवधेयम्। **तदुपशम इति**। दन्तादिसम्बद्धविषनाश इत्यर्थः। विलक्षणस्पर्शवत्संयोगत्वेनैव तन्नाशकत्वादिति भावः। **स्पर्शे**। स्पर्शसाक्षात्कारे। **विधिनिषेधौ**। धर्माधर्मविशेषजनकत्वे। **न स्यातामिति**। विलक्षणस्पर्शसाक्षात्कारत्वेनैव धर्मविशेषादिजनकत्वादिति भावः।

ननु गवादिस्पर्शसाक्षात्कारो न धर्मविशेषादिजनकः; किन्तु गवादिरेवेत्यत आह **न चेति**। **दर्शनेत्यादि**। **दर्शनम्**। रूपसाक्षात्कारः। **स्पर्शनम्**। स्पर्शसाक्षात्कारः। **घ्राणम्**। गन्धसाक्षात्कारः। **आस्वादनम्**। रससाक्षात्कारः। **मातङ्गमदिरादिष्विति**।

**मातङ्गः** । चाण्डालः । **प्रायश्चित्तेति** । द्रव्यस्यैव कारणत्वेन दर्शनादेरहेतुतया पापभेदाभावादिति भावः । इदमुपलक्षणम् । चाण्डालादेः सत्त्वात् सर्वदैव सर्वेषां पापोत्पत्तिप्रसङ्गश्चेत्यपि बोध्यम् । **तस्मादिति** । उक्तविपक्षबाधकतर्केणेति शेषः । **पाकजः** । पाकजवृत्तिगुणत्वव्याप्यजातिविशिष्टः । तेनावर्यविरूपादौ न व्यभिचारः । **अवधेयम्** । अनुमेयम् । इदमापाततः । दुःखविशेषादिजनकतावच्छेदकतया विषादिस्पर्शे वैजात्यसिद्धावपि तस्य पाकजवृत्तिगुणत्वव्याप्यजातिमत्त्वव्याप्यत्वासिद्धेः ।

वस्तुतस्तु सुकुमारत्वमारभ्य वस्तुनः पाकानन्तरं सुकठिनत्वेन सुकठिनस्य वस्तुनः पाकानन्तरं सुकुमारत्वमारभ्यत्वेनोपलम्भात् स्पर्शभेदस्यारभ्यत्वे तत्रान्वयव्यतिरेकाभ्यां पाक एव हेतुः । अन्यथा रूपादीनामपि पाकजत्वासिद्ध्यापत्तेः । न च सुकुमारत्वं सुकठिनत्वमवयवसंयोगविशेष एव, न तु स्पर्श इति वाच्यम्; तथा सति संयोगस्य द्वीन्द्रियग्राह्यतया चक्षुषापि तद्ग्रहापत्तेः । न चेष्टापत्तिः । चक्षुषावयवसंयोगग्रहेऽपि सुकुमारत्वादिसंशयादित्येव तत्त्वम् ।

**ये तु मन्यन्ते पृथिव्यां स्पर्शो नास्त्येव । औष्ण्यशैत्ये विहाय स्पर्शान्तरस्यानुपलम्भबाधितत्वात् । शैत्यमेव हि तेजः स्पर्शेनाभिभूतम्, औष्ण्यञ्च उदकस्पर्शेनाभिभूतम्, अनुष्णाशीतत्वेनानुभूयत इति तान् प्रत्याह अनुष्णाशीतत्वे सतीति । बलवत्सजातीयग्रहणकृतमग्रहणं खल्वभिभवः, तथा चाभिभावकमन्यतरदवश्यमुपलभ्येत । न चैवं प्रकृते । किन्तु तथाविधे तमसि शुष्कपार्थिवद्रव्यस्य औष्ण्यशैत्ये विहाय स्पर्शान्तरस्योपलम्भात् ।**

नन्वेवं पाकजस्पर्शवत्त्वमात्रस्य लक्षणघटकतया भाष्ये सत्यन्तविशेषणं व्यर्थमित्यत आह **ये त्विति । स्पर्शो नास्त्येवेति** । औष्ण्यशैत्यस्पर्शने विहाय स्पर्शो नास्त्येवेति योजना । उष्णशीतभिन्नस्पर्शो नास्त्येवेत्यर्थः । किन्तु क्वचित्पृथिव्यामुष्णस्पर्शः, क्वचित् शीतस्पर्शः । उष्णस्पर्शत्वाद्यवच्छिन्नं प्रति तेजस्त्वादिना समवायिकारणत्वे मानाभावादवयवगतौष्ण्यादेरसमवायिकारणस्य विरहादेवातिप्रसङ्गभङ्गसम्भवादिति भावः ।

नन्वेवं सकलपृथिवीस्पर्शमात्रवृत्तिवैजात्यस्योष्णत्वशीतत्वाभ्यां सह साङ्कर्यापत्तिरित्यत आह **स्पर्शान्तरस्येति** । उष्णत्वादितद्व्याप्येतरस्पर्शत्वन्यूनवृत्तिवैजात्याश्रयस्य स्पर्शस्येत्यर्थः । तथा च सकलपृथिवीस्पर्शमात्रवृत्तिवैजात्ये मानाभाव इति भावः ।

नन्वेवं कुत्रचित्पृथिव्यामनुष्णाशीतत्वाभ्यां स्पर्शानुभवः कथं स्यादित्यत आह **शैत्यमेव हीति । शैत्यम्** । शीतस्पर्शः । **अभिभूतम्** । अभिभूतशीतत्वजातिकम् । **औष्ण्यम्** उष्णस्पर्शः । **अभिभूतम्** । अभिभूतोष्णत्वजातिकम् । **अनुष्णाशीतत्वेनेति** । उष्णभिन्नत्वेन

शीतभिन्नत्वेन चेत्यर्थः। **अनुभूयते**। पृथिव्यामनुभूयते। तथा चाभिभवेनोष्णत्वादि-जातेरग्रहादिभ्रम इति भावः।

**अनुष्णाशीतत्वे सतीति**। उष्णस्पर्शभिन्नत्वे शीतस्पर्शभिन्नत्वे च सतीत्यर्थः। अत्र युक्तिमाह **बलवदिति**। खलु शब्दो 'हि' अर्थे। **तथा च**। अस्याभिभवपदार्थत्वे च। तद्विलक्षणभिन्नत्वविशिष्ट इत्यर्थः। **तथाविधे**। गाढे। यत्रोद्भूतस्पर्शैव पृथिवीत्यर्थः। **औष्ण्यशैत्ये विहायेति**। उष्णशीतस्पर्शस्यानुपलम्भेनालीकत्वादित्यर्थः। उष्णशीतयोश्च तेजोजलमात्रधर्मत्वेन पृथिव्यां न सम्भव इति भावः।

नन्विदमयुक्तम्। अनुष्णाशीतत्वेनास्पर्शवत्त्वस्य पृथिव्यामनुभवसिद्धत्वादित्यत आह शैत्यमेव हीति। अनुभूयत इति। स्वसमवायिसंयुक्तत्वलक्षणपरम्परासम्बन्धेन पृथिव्यामनुभूयते इत्यर्थः। तथा च शीतोष्णस्पर्शयोरेव परम्परासम्बन्धेन ग्रहः। शीतत्वादिकञ्चाभिभवात् तत्र न गृह्यत इति **केचिद्** व्याचख्युः।

तदसत्। पृथिव्या निःस्पर्शत्वे त्वाच्साक्षात्कारानुपपत्तेः। द्रव्यत्वाचं प्रति लाघवात् समवायसम्बन्धेनैवोद्भूतस्पर्शस्य हेतुत्वात्। औष्ण्यशैत्ये विहाय स्पर्शान्तरस्येत्यत्रा-न्तरपदस्य पुनरुक्तत्वप्रसङ्गाच्च। औष्ण्यशैत्ये विहायेत्यनेनैव तदुभयभिन्नत्वलाभात्।

किञ्च पृथिव्यां निःस्पर्शत्वशङ्कायाः "स्पर्शोऽस्याः पाकजः" इत्यनेनैव निरास-सम्भवेन सत्यन्तदलवैयर्थ्यतादवस्थ्यादिति ध्येयम्।

**सेयं पृथिवी यद्यनित्यैव तदावयवानवस्था स्यात्। एकस्य कस्यचि-दवयवस्य निवृत्तौ निराश्रयञ्च कार्यमापद्येत। अथ नित्यैव। निष्प्रमाणिका तर्हि स्यात्। कार्यञ्च गन्धवदपि द्रव्यान्तरं स्यात्। अत आह सा च द्विविधा नित्यानित्या चेति। चकारौ मिथः समुच्चये नियमनिराकरणपरौ। तेन नोक्तदोषावकाश इत्यभिप्रायः।**

नित्यानित्यभेदकथनस्य प्रकृतानुपयुक्तत्वशङ्कामपाकर्त्तुमाह **सेयमिति**। ननु काचित् पृथिवी कार्यापि स्यात्। तथा च नानवस्थेत्यत आह **एकस्य कस्यचिदिति**। कार्यपार्थिवस्येति शेषः। **अवयवस्य निवृत्तौ**। अवयवस्याभावे। निरवयवत्वे इति यावत्। **निराश्रयञ्चेति**। कार्यं निःसमवायिकारणमापद्येतेत्यर्थः।

**प्रकाशकृतस्तु** पृथिवीमात्रस्यानित्यत्वेऽनवस्थामभिधाय दूषणान्तरमाह **एकस्य कस्यचिदवयवस्येति**। प्रलये एकस्यापि कस्यचिदवयवस्याभावे सर्वेषामेवानित्यावयवा-नामभावे इति यावत्। **निराश्रयञ्चेति**। सर्गादौ द्व्यणुकलक्षणं कार्यं निःसमवायि-कारणमापद्येतेत्यर्थ इत्याहुः।

**निष्प्रामाणिकेति** । अप्रत्यक्षेत्यर्थः । नित्यमूर्त्तस्य परमाणुत्वनियमादिति भावः । **कार्यञ्च** घटादिकमिति शेषः ।

**का पुनर्नित्या ? महती हि मही महत्त्वादेव कार्यत्वादनित्या। अणुपरिमाणा तु नोपलभ्यत एवेत्यत आह परमाणुलक्षणा नित्येति। लक्षणं स्वभावः। कार्यमेवात्र प्रमाणं भविष्यतीत्यभिप्रायवता नेह प्रमाणान्तरमादर्शितम्। तथा हि स्थूलकार्यस्य लोष्ट्रादेरवयवक्रियाविभागादिन्यायेन भज्यमानस्याल्पतरतमादिभावेन यतो नाल्पीयः, तं परमाणुमाचक्ष्महे ।**

**महत्त्वादेव कार्यत्वादिति** । चाक्षुषत्वे सति महत्वादेव यत्कार्यत्वं तस्मादनित्येत्यर्थः। **अणुपरिमाणा त्विति**। पृथिवीति शेषः। **स्वभावः**। स्वरूपमभेद इति यावत्। द्वयणुकं द्रव्यसमवेतम्, त्रसरेणुर्द्रव्यसमवेतसमवेतो न वेत्यादिविप्रतिपत्तौ प्रमाणान्तरमेवाह **तथाहीति**। **भज्यमानस्य**। नश्यमानस्य। **अल्पतरतमादिभावेनेति**। विशिष्टानामवयवानां मध्ये इति शेषः।

**एष हि अवयवावयविप्रसङ्गो न तावन्निरवधिरेव। अनन्तावयवारब्धत्वाविशेषेण मेरुसर्षपयोः परिमाणभेदानुपपत्तेः। न च कारणसंख्याया अविशेषेऽपि परिमाणप्रचयाभ्यां विशेष इति युक्तम्; तयोरपि संख्याविशेषाभावेऽनुपपत्तेः। नापि प्रलयावधिः। कस्यचिदन्त्यस्य निरवयवत्वे तदनुपपत्तेः। द्रव्यस्यावयवविभागविनाशाभ्यां विना विनाशाभावात्। नापि विभागावधिः। तस्य विभज्यमानाश्रयतया तदभावेऽनुपपत्तेः। न चैकाश्रयविभाग इति युक्तम्। किञ्चित् कुतश्चिद् विभज्यते, न तु तदेव तस्मात्। तस्मान्निरवयवावधिरयमवयवावयविप्रसङ्ग इति विज्ञायते तर्कितमेतत्, न तु प्रमितमिति।**

नन्विदमेवासिद्धम्। सर्वेषामेवावयवीनां स्वावयवाकारमपेक्ष्य प्रकृष्टपरिमाणवत्त्वादित्यत आह **एष हीति**। **अवयवावयविप्रसङ्गः**। अवयवावयविविभागः। सावयवकत्वमिति यावत्। **निरवधिः**। अवधिः सीमा। तद्रहितः। अवयवत्वव्यापक इति यावत्। पूर्वोक्तानवस्थादिदोषसत्त्वेऽपि दोषान्तरमाह **अनन्तेति**। ननु सर्षपपरिमाणारम्भकमवयवमहत्त्वमपकृष्टमतः सर्षपस्यापकृष्टं महत्त्वं मेरुपरिमाणारम्भकमवयवपरिमाणन्तूत्कृष्टमतो मेरोस्तस्मादुत्कृष्टं महत्त्वम्। तथा मेरुपरिमाणारम्भकः प्रचय इति तदपेक्षया तस्योत्कृष्टं महत्त्वमित्यत आह **न चेति**। **तयोरपीति**। सर्षपावयवमेर्ववयवपरिमाणयोरपीत्यर्थः। **संख्येति**। यदि हि सर्षपावयवः स्वल्पसंख्यकावयवपरम्परारब्धः मेर्ववयवश्च बहुतरावयवपरम्परारब्ध इति स्यात्, तदैवैतत् परिमाणयोरुत्कर्षापकर्षरूप-

विशेष उपपद्यते। द्वयोरपि समानावयवपरम्परारब्धत्वे विशेषः कथं स्यादित्यर्थः। प्रचयस्तु असम्भावित एव। पर्वतारम्भकसंयोगस्य निविडत्वादिति भावः।

ननु मास्तु सावयवकत्वमवयवत्वव्यापकं तथापि निरवयवकावयवस्य द्रव्यत्वपृथिवीत्वादौ मानाभावः। साक्षात्परम्परया प्रलयकालीनध्वंसव्यक्तीनामेव सृष्टिकालीनयावत्कार्यद्रव्योपादानत्वाभ्युपगमादित्यत आह **नापीति**। **प्रलयावधिः**। सावयवता प्रलयकालीनध्वंसात्मकावयवव्यक्तिष्वेव नास्तीति यावत्। अवयवत्वं द्रव्योपादानत्वम्। उपादानता चास्मन्नये समवायः, परनये च स्वरूपसम्बन्धविशेषः। **अन्त्यस्येति**। कार्यद्रव्यस्येत्यर्थः। **निरवयवत्व इति**। द्रव्योपादानकत्वाभावे इत्यर्थः। ध्वंसस्योपादानत्वे साक्षाद् ध्वंसोपादानककार्यद्रव्यस्यैव नाशकाभावेन नाशासम्भवात् कार्यद्रव्यानधिकरणकालरूपः प्रलयोऽनुपपन्न इति भावः।

ननु प्रलयकालीनद्रव्यनाशजनकविभाग एव निरवयवकावयवाः सन्तु। तेषामेव साक्षात्परम्परया सृष्टिकालीनयावत्कार्यद्रव्योपादानत्वाभ्युपगमात्। तथा च प्रलयोऽपि नानुपपन्नः। तस्यानित्यत्वेन तद्विनाशादेव साक्षात् तदुपादानकद्रव्यव्यक्तीनामपि नाशसम्भवादित्यत आह **नापीति**। **विभागावधिः**। सावयवता विभागात्मकावयवावधिः। विभागात्मकावयवेष्वेव नास्तीति यावत्। **तदभाव इति**। प्रलयकालेऽवयवनाशादिति भावः। **अनुपपत्तेरिति**। सर्गाद्यकाले सत्त्वानुपपत्तेरित्यर्थः। तथा च स्वयमसत् कथं कार्यं जनयेदिति भावः।

ननु तथाप्यस्तु नित्यमेकमेव वस्तुगतो मूलकारणम्। किमनन्तपरमाणुकल्पनया। न चैवमपि प्रलयानुपपत्तिः। साक्षात् तदुपादानककार्यद्रव्यस्य कारणनाशाभावेन नाशासम्भवादिति वाच्यम्, तद्विभागादेव तन्नाशसम्भवात्। तदुपादानविभागस्यापि उपादाननाशवत् कार्यद्रव्यनाशकत्वादित्यत आह **न चेति**। इदमुपलक्षणम्। ध्वंसादेर्द्रव्यारम्भकसंयोगानाश्रयद्रव्यारम्भकत्वसम्भवादित्यपि बोध्यम्। **निरवयवावधिरिति**। बहुतरनिरवयवद्रव्यात्मकावयवनिष्ठात्यन्ताभावप्रतियोग्येव सावयवत्वमित्यर्थः। **तर्कितमेतदिति**। निरवयवत्वानभ्युपगमेऽनिष्टापत्तिरेव कृता। **न तु प्रमितमिति**। न तु तत्र प्रमाणं दत्तम्। अनिष्टापादनस्य स्वतः प्रमाणत्वाभावादित्यर्थः।

**अत्र कश्चिदाह। किमत्र प्रमाणान्तरगवेषणया? त्रसरेणोः प्रत्यक्षसिद्धत्वात्। तस्य चावयवकल्पनायां प्रमाणाभावेन निरवयवत्वात्।**

**तदसत्। तस्य चाक्षुषद्रव्यतया महत्त्वादनेकद्रव्यवत्त्वाच्चेति। यदि हि स्वस्य चाक्षुषता महत्त्वमन्तरेण स्यात्, दूरदूरतरादौ न महत्त्वप्रकर्षमनुविदध्यात्। यदि सानेकद्रव्यवत्तां नाद्रियेत, महत्त्वमपि नाद्रियेत।**

**तद्व्यावृत्तौ तस्यापि व्यावृत्तेः। तस्य तत्कारणत्वात्। अन्यथा तत्प्रकर्षं महत्त्वप्रकर्षो नानुविदधीत। तस्माद् विवादाध्यासितत्रसरेणुर्महान्, अनेकद्रव्यवांश्च अस्मदादिचाक्षुषद्रव्यत्वाद् घटादिवत्।**

**तस्यावयवकल्पनायामिति**। न चावयवाभावे कथं तस्योत्पत्तिः? भावकार्याणां समवायिकारणकत्वनियमादिति वाच्यम्, त्रसरेणोर्नित्यत्वस्यैवाभ्युपगमादिति भावः। **महत्त्वादिति**। जन्यमहत्त्वाश्रयत्वादित्यर्थः। **अनेकद्रव्यत्वाच्चेति**। अनेकावयवकत्वाच्चेत्यर्थः। अनेकेति स्वरूपकथनम्। सावयवत्वमात्रं विवक्षितम्। एवमग्रेऽपि। सर्वत्र प्रयोजकत्वशङ्कां निराकरोति **यदि हीति**। **महत्त्वप्रकर्षमनुविदध्यादिति**। महत्त्वप्रकर्षेण द्रव्यचाक्षुषप्रकर्षो न स्यादित्यर्थः।

न चैतावता द्रव्यचाक्षुषं प्रति महत्त्वस्य कारणतया त्रसरेणोर्महत्त्वसिद्धावपि जन्यमहत्त्वे मानाभाव इति वाच्यम्, द्रव्यचाक्षुषत्वावच्छिन्नं प्रति महत्त्वेन कारणत्वे नित्यमहत्त्ववतः कालादेश्चाक्षुषत्वापत्तेः। नित्यस्येत्यादि नियमादिति भावः।

नत्वेतावता तस्य जन्यमहत्त्वव्याप्यत्वसिद्धावपि सावयवत्वव्याप्यत्वे मानाभाव इत्यत आह **यदि सेति**। **सा**। द्रव्यचाक्षुषता। अनेकद्रव्यवत्तामिति। अनेकावयवद्रव्यव्याप्या न स्याज्जन्यमहत्त्वव्याप्यापि न स्यादित्यर्थः। **तद्व्यावृत्ताविति**। अनेकावयवकत्वाभावे जन्यमहत्त्वस्याप्यभावादित्यर्थः। जन्यत्वविशेषणाद् गगनादौ न व्यभिचारः। **तस्य**। सावयवकत्वस्य। **तत्कारणत्वात्**। महत्त्वकारणत्वात्। **तत्प्रकर्षम्**। अवयवस्य प्रकर्षम्। उपसंहरति **तस्मादिति**। नीरूपस्य त्रसरेणोर्भागासिद्धिवारणाय विवादाध्यासितत्वं त्रसरेणुविशेषणम्। तच्च चाक्षुषविषयत्वम्। त्रसरेणुत्वञ्च अत्यन्तापकृष्टमहत्त्ववत्त्वम्, त्रुटिपदवाच्यत्वं वा। **महानिति**। जन्यमहत्त्ववान्। तेन त्रससरेणोर्नित्यत्ववादिना नित्यमहत्त्वस्यैव तत्राभ्युपगमेऽपि न सिद्धसाधनावकाशः। न वा परमाणुद्व्यणुकयोरसिद्धिदशायां हेतौ चाक्षुषविशेषणवैयर्थ्यम्। **अस्मदादीति**। एतच्च लौकिकविषयतासम्बन्धेन चाक्षुषत्वलाभाय। तेन गगनादौ न व्यभिचारः। उपनीतचाक्षुषविषयतामादाय व्यभिचारवारणाय द्रव्यत्वप्रवेशः। द्रव्यत्वं मूर्त्तत्वम्। तेन भट्टनये व्योम्नश्चाक्षुषत्वेऽपि न व्यभिचारः।

न च तथापि अप्रयोजकत्वम्। सावयवत्वस्य महत्त्वकारणत्वे मानाभावात्। न हि अवयवोत्कर्षेण महत्त्वोत्कर्षः, किन्तु अवयववृत्तिमहत्त्वाद्युत्कर्ष एव महत्त्वोत्कर्षप्रयोजकत्वम्। अवयवेषु जातिरूपोत्कर्षस्य बाधितत्वेनोत्कर्षान्तरस्य दुर्वचत्वादिति वाच्यम्। तथापि अवयवगतसंख्यापरिमाणप्रचयानामेव महत्त्वकारणतया सावयवत्वस्यावश्यकत्वादिति भावः।

अत्र **स्वतन्त्राः**। त्रसरेणोर्महत्त्वस्य प्रत्यक्षसिद्धतया महत्त्वस्य सत्त्वेऽपि तस्य जन्यत्वे मानाभावः। जन्यमहत्त्वं प्रत्येवोक्तक्रमेण सावयवत्वस्य प्रयोजकत्वात्। न च त्रुटेर्महत्त्वस्य नित्यत्वे त्रुटेश्चाक्षुषत्वानुपपत्तिः, जन्यमहत्त्वत्वेन द्रव्यचाक्षुषहेतुत्वादिति वाच्यम्, लाघवात् महत्त्वत्वेनैव चाक्षुषहेतुत्वात्। नित्यमहत्त्ववतः कालादेश्चाक्षुषत्वानुपधानस्य रूपात्मकसहकारिविरहादेव सम्भवात्। नित्यस्येत्यादिव्यासौ मानाभावात्। किञ्च परमाणुद्व्यणुकयोरभ्युपगमे त्रसरेणोस्त्वाच्प्रत्यक्षवारणाय प्रकृष्टमहत्त्वस्य द्रव्यस्पार्शनं प्रति हेतुत्वावश्यकत्वेऽपि चाक्षुषं प्रति तस्य हेतुत्वे मानाभावात्।

न च महत्त्वोत्कर्षेण द्रव्यचाक्षुषोत्कर्षत्वस्य तद्धेतुत्वमावश्यकमिति वाच्यम्, चाक्षुषनिष्ठजातिरूपोत्कर्षे मानाभावात्। एतेन त्रुटिः समवेतः चाक्षुषद्रव्यत्वात्। ते च समवायिनः समवेताः चाक्षुषद्रव्यसमवायित्वादित्यनुमानात् परमाणुद्व्यणुकयोः सिद्धिरित्यपि परास्तम्, अप्रयोजकत्वात्। अन्यथा तादृशसमवायित्वादिभिरनवस्थितसमवायिसिद्धिप्रसङ्गात्। अणुव्यवहारः अपकृष्टपरिमाणनिबन्धनः। महत्यपि सर्षपादौ महत्त्ववत् पर्वतादितोऽणुव्यवहारादिति प्राहुः।

**अपरस्त्वाह। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्याद् महत्परिमाणतारतम्यवदिति। तदप्यसत्। परस्पराश्रयदोषप्रसङ्गात्। नासौ परमाणुर्यदि तर्हि तदवयवा एव कार्यानुमिताः परमाणवः। न हि ते महान्तः। रूपविशेषवतां महतां चाक्षुषत्वप्रसङ्गात्। तथा च तेषां कार्यत्वे प्रमाणानवक्लृप्तौ तदवयवाननुमानात्।**

**यद्यपि चाणुत्वान्निरवयवत्वाच्च तेषां महत्परिमाणारम्भे न कारणं महत्त्वप्रचयौ स्तः, तथापि बहुत्वसंख्यास्तीति सर्वं समञ्जसम्। न। उक्तोत्तरत्वात्। अवश्यं हि त्रसरेणोरवयवैरनेकद्रव्यैर्भवितव्यम्, तस्य महत्त्वात्। महत्त्वं प्रति चावयवगतस्यानेकद्रव्यत्वस्यापि कारणत्वात्। अन्यथा महत्त्वस्य तत्प्रकर्षानुविधानानुपपत्तेः।**

**कन्दलीकारोक्तं** परमाणुद्व्यणुकसिद्धिप्रयोजकमनुमानमाह अपरस्त्विति। **अणुपरिमाणतारतम्यमिति**। अत्र अणुपरिमाणनिष्ठोत्कर्षः क्वचिद्विश्रान्तः परिमाणनिष्ठोत्कर्षत्वाद् गगनादिमहत्त्ववृत्त्युत्कर्षवत्; अणुपरिमाणवृत्त्यपकर्षः क्वचिद्विश्रान्तः परिमाणनिष्ठापकर्षत्वात् त्रसरेणुमहत्त्ववृत्त्यपकर्षवद् इत्यनुमानद्वये तात्पर्यम्। प्रथमे क्वचिद्विश्रान्तत्वम् अपकर्षानधिकरणवृत्तित्वम्। अस्मादत्यन्तोत्कृष्टाणुपरिमाणसिद्धौ तदाश्रयतया परमाणुसिद्धिः, परिमाणस्य द्रव्याश्रितत्वनियमात्। न च परमाणुपरिमाणस्य द्व्यणुकपरिमाणापेक्षयापकर्षानधिकरणत्वेऽपि महत्त्वापेक्षयापकर्षा-

धिकरणत्वमेवेति वाच्यम्। परिमाणत्वव्याप्यजात्या सजातीयस्यैव परिमाणनिष्ठोत्कर्षापकर्षबोधकत्वात्।

अधिकदेशव्यापित्वेनैव परिमाणस्योत्कर्षोऽल्पदेशव्यापित्वेन च परिमाणस्यापकर्ष इत्या**चार्यमता**दरे तु तदाश्रयतया द्व्यणुकसिद्धिः। साध्ये चापकर्षः स्वाश्रयसजातीयावधिकत्वेन विशेषणीयः। अन्यथा द्व्यणुकवृत्तिपरिमाणस्यापि महत्त्वापेक्षयापकृष्टत्वेन बाधापत्तेः। साजात्यञ्च परिमाणत्वव्याप्यजात्या।

द्वितीये च क्वचिद् विश्रान्तत्वं उत्कर्षानधिकरणवृत्तित्वम्। तथा च अस्मादत्यन्तापकृष्टपरिमाणसिद्धौ तदाश्रयतया द्व्यणुकसिद्धिः।

अधिकदेशव्यापित्वेनैव च परिमाणस्योत्कर्षोऽल्पदेशव्यापित्वेनैव च परिमाणस्यापकर्ष इत्या**चार्यमता**दरे तु तदाश्रयतया परमाणुसिद्धिः। साध्ये चोत्कर्षः स्वाश्रयसजातीयावधिकत्वेन विशेषणीयः। अन्यथा त्रसरेणुमहत्त्वस्यापि अणुत्वावधिकोत्कर्षवत्वेन दृष्टान्तासिद्ध्यापत्तेः।

न च प्रथमे घटादिमहत्त्वमात्रवृत्तिसर्षपाद्यापेक्षिकोत्कर्षे, द्वितीये च घटादिमहत्त्वमात्रवृत्तिपर्वताद्यापेक्षिकापकर्षे व्यभिचारसाङ्कर्यभयेन (?) तन्नानात्वोपगमादिति वाच्यम्, हेतौ महत्समवेतावृत्तित्वेन परिमाणविशेषणात्।

**प्रकाशकृतस्तु** अणुपरिमाणतारतम्यं परिमाणत्वव्याप्याणुपरिमाणवृत्तिजातिः। अणुत्वमिति यावत्। क्वचिद्विश्रान्तम्। स्वाश्रयसजातीयावधिकापकर्षानधिकरणवृत्ति, तादृशोत्कर्षानधिकरणवृत्ति च। परिमाणतारतम्यत्वात्। परिमाणत्वसाक्षाद्व्याप्यजातित्वात्। महत्परिमाणतारतम्यवत्। परिमाणत्वव्याप्यमहत्त्ववृत्तिजातिवत्। महत्त्ववदिति यावत्। त्रसरेणुमहत्त्ववृत्तिजातिविशेषे, गगनादिमहत्त्ववृत्तिजातिविशेषे च व्यभिचारवारणाय हेतौ साक्षादितीत्याहुः।

**परस्परेति**। अत्र परमाणुसिद्धिः परमाणुसिद्धौ च द्रव्यत्वेन हेतुना अणुपरिमाणसिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्यर्थः। अस्तु परमाणुस्तथापि द्व्यणुके मानाभाव इत्याशङ्कते **नासाविति**। **यदीति**। यद्यसौ त्रसरेणुः न परमाणुर्न नित्यापकृष्टाणुत्ववदित्यर्थः। **कार्यानुमिता इति**। 'त्रसरेणुः सावयवः कार्यद्रव्यत्वात्' इति क्रमेण कार्यद्रव्यत्वेनानुमिता इत्यर्थः। तथा च त्रिभिः परमाणुभिरेव त्रसरेणुरारभ्यत इति भावः। **तेऽपि**। त्रसरेणोरवयवा अपि। **रूपविशेषवताम्**। उद्भूतरूपवताम्। **तथा चेति**। महत्त्वशून्यत्वे चेत्यर्थः। **तेषाम्**। त्रसरेणोरवयवानाम्। **प्रमाणानवक्लृप्ताविति**। प्रमाणाभावे इत्यर्थः। महत्त्वसत्वे एव द्रव्यसमवायित्वे सति महत्त्वकार्यत्वव्याप्यतया तदेव प्रमाणं स्यादिति भावः।

ननु त्रसरेणोर्महत्त्वापत्तिः कथं स्यात्? अवयवप्रचययोरभावात्। प्रचयस्य सावयवधर्मत्वादित्यत आह **यद्यपि चेति**। **तेषाम्**। त्रसरेणोरवयवानाम्। **महत्परिमाणारम्भ** इति। महत्त्वारम्भे कारणीभूतौ महत्त्वप्रचयौ न स्त इति नञो व्यत्यासेन योजना। **तथापीति**। द्व्यणुकत्रयाणां त्रसरेणोरवयवत्वेऽपि द्व्यणुकगतबहुत्व-संख्यायाः त्रसरेणुमहत्त्वजनकत्वादिति भावः। **उक्तोत्तरत्वादिति**। उक्तप्रायोत्तर-त्वादित्यर्थः। **तस्य महत्त्वादिति**। त्रसरेणोर्जन्यमहत्त्ववत्त्वादित्यर्थः। **अनेकद्रव्यत्वस्य**। अनेकावयवकत्वस्य। **महत्त्वस्य**। महत्त्वप्रकर्षस्य।

**तस्मात् त्रसरेणोरवयवाः सावयवा महद्द्रव्यारम्भकत्वात्, तन्तुवत्। बहवश्च ते। परिमाणप्रचयानुपपत्तौ महदारम्भकत्वात्। तुल्यपरिमाण-तन्त्वपेक्षयाधिकसंख्यपटारम्भकतन्तुवत्। ते च विभज्यन्ते सावयवत्वाद् घटवत्। विपक्षे बाधकमुक्तम्। तदवयवानान्तु अवयवकल्पनानवकाशात्, प्रमाणाभावाद् बाधकाच्च। द्रव्यारम्भकत्वमूर्त्तत्वादीनामनुकूलतर्काभावा-देवानवस्थाप्रसङ्गस्य प्रतिकूलस्य स्फुटत्वादिति परमाणुसिद्धिः।**

प्रसङ्गाद् बहुत्वमपि साधयति **बहवश्चेति**। परिमाणारम्भकबहुत्ववन्त इत्यर्थः। तेन न द्रव्यान्तरमादाय बहुत्ववत्त्वेन सिद्धसाधनम्। **परिमाणप्रचयेति**। प्रचयाजन्य-महत्त्वाश्रयजनकत्वादित्यर्थः। यथाश्रुते दृष्टान्तस्य साधनविकलत्वापत्तेः। तेषां विनाशित्वमपि साधयति **ते चेति**। **विभज्यन्ते**। नश्यन्ति।

ननु सावयवत्वे साध्ये महदारम्भकत्वमप्रयोजकमित्यत आह **विपक्षेति**। महत्त्वं प्रति अवयवगतानेकद्रव्यत्वस्यापि कारणत्वादिति भावः। **तदवयवानान्त्विति**। त्रसरेण्ववयवानान्त्वित्यर्थः। **बाधकाच्चेति**। अनवस्था प्रसङ्गरूपबाधकाच्चेत्यर्थः।

ननु त्रसरेणोरवयवावयवानामपि द्रव्यारम्भकत्वमूर्त्तत्वादिना सावयवत्वं साधनीयमित्यत आह **द्रव्यारम्भकत्वेति**। **परमाणुसिद्धिरिति**। परमाणूनामेव त्रसरेणो-रवयवावयवत्वसिद्धिरित्यर्थः।

**तस्माद् यत् कार्यं तत्सावयवमिति समनियतसिद्धौ कार्यद्रव्यत्वेन सावयवत्वं प्रसाध्य यत एवावयवात् कार्यत्वं निवर्त्तते तन्निरवयवं परमाणुमुपपादयिष्याम इत्यभिप्रायवानाह कार्यलक्षणन्त्विति। तु शब्दः परमाणोर्व्यवच्छिनत्ति। किमत्र प्रमाणमित्यत आह सा चेति। न च येयमुक्तरूपा दृश्यते सा प्रत्यक्षसिद्धेत्यर्थः। स्थैर्यं स्थिरता। चिरकाला-वस्थायित्वमिति यावत्। आदिशब्दाद् विष्टम्भकत्वं जलादिव्यूहविरोधि-त्वञ्च। अवयवसन्निवेशास्तत्सामान्यविशेषाभिव्यञ्जकसंस्थानविशेषाः।**

**स्थैर्यादीनि चावयवसन्निवेशाश्च तैर्विशिष्टाः। न ह्येतद् द्रव्यान्तरे सम्भवति। जलादीनां यत् तदुपनिपातमात्रेणैव भङ्गुरत्वात्।**

**न च पार्थिववद् अम्भो द्रव्यान्तरं गच्छद् विष्टभ्नाति। पूर्वव्यूहं वा विरुणद्धि। न च पार्थिववद् द्रव्यान्तरं तत्तज्जात्यभिव्यञ्जकसंस्थानभेदवदिति। यतस्तत्तत् संस्थानविशेषवती, अत एव अपरजातिबहुत्वोपेता। ननु सर्वस्य चेतनादन्यस्य परार्थत्वात् किमनया चेतनप्रयोजनं साध्यते इत्यत आह शयनेति। शयनं शय्या। आसनमवस्थितिः। आदिग्रहणाद् भ्रमणकृषिकर्मादि। चकाराद् अभिघाताद्यनेकोपकारकरी चेति।**

भाष्ये कार्यपृथिवीत्वस्य अनित्यत्वव्याप्यत्वोपदर्शनफलमाह **तस्मादिति**। प्रलयाद्युपादानकत्वनिरासकोक्तयुक्तित इत्यर्थः। **सावयवम्**। द्रव्यसमवायिकारणकम्। **सावयवत्वं प्रसाध्य**। समवायिभूतद्रव्यपरम्परां प्रसाध्य। **अवयवात्**। द्रव्यसमवायिकारणीभूतद्रव्यात्। **कार्यत्वं निवर्त्तत इति**। अनित्यत्वाभावेन कार्यत्वं निवर्त्तते। **तदिति**। अवयवमिति शेषः। तस्य महत्त्वे रूपवदारम्भकत्वेन रूपवत्तया चाक्षुषत्वप्रसङ्गादिति भावः। **व्यवच्छिनत्ति**। नित्यत्वं व्यवच्छिनत्ति। **तत्र**। कार्यपृथिव्याम्। **उक्तरूपा**। स्थैर्यादिविशिष्टेत्यर्थः। **चिरकालेति**। स्वनिष्ठाभिघातोत्पत्त्यवधिकपञ्चमक्षणावस्थायित्वमित्यर्थः। यद्यप्येतज्जलदावप्यस्ति तथापि परमाणुभिन्नसंयोगवत्त्वे सति निविडसंयोगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्यम्। पृथिव्या एव लक्ष्यत्वात् सत्यन्तम्। निविडसंयोगवत्वं घृतादावव्यापकमतो जातिगर्भता। **विष्टम्भकत्वमिति**। परमाणुभिन्नत्वे सति स्ववृत्तिगुरुत्वाधिकगुरुत्वाश्रयप्रतियोगिकसंयोगप्रतिबन्धकवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः। कार्यपृथिव्या एव लक्ष्यत्वात् परमाणावतिव्याप्तिवारणाय सत्यन्तम्। जन्यानिलादावतिव्याप्तिवारणाय प्रतियोगिकान्तं संयोगविशेषणम्, अनिलादेः स्ववृत्तिगुरुत्वाप्रसिद्धेः। जलस्य तत् प्रसिद्धावपि तदधिकगुरुत्वाश्रयप्रतियोगिकसंयोगप्रतिबन्धकत्वविरहात्। तेन जलादावतिव्याप्तिवारणाय जातिगर्भता। यदि जलीयशरीरेऽपि प्रतिबन्धकद्रव्यत्वाश्रयत्वादिदं सम्भवति, तदा तदन्यत्वेनापि विशेषणीयम्। **जलादिव्यूहविरोधित्वञ्चेति**। स्ववृत्तिगुरुत्वाश्रयपतनप्रतिबन्धकवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः। **अवयवसन्निवेशः**। अवयवसंयोगः। तद्विशिष्टत्वं जलादावप्यस्तीत्यतो व्याचष्टे **तत्सामान्येति**। स्वव्याप्यजातिव्यञ्जकतावच्छेदकसंस्थानवृत्तिनानाजातिकद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः। द्रव्यान्तं स्वपदं **चरमजाति-परम्**। अत एव यत इत्याद्यग्रिमग्रन्थः सङ्गच्छते। **यत्तदुपनिपातमात्रेणेति**। येन तेन समभिघातमात्रेणैवेत्यर्थः। **भङ्गुरत्वात्**। तदुत्पत्त्यत्रधिकपञ्चमक्षणोत्पन्नध्वंसप्रतियोगित्वात्।

**न चेति**। नवेत्यर्थः **द्रव्यान्तरम्**। स्ववृत्तिगुरुत्वाधिकगुरुत्ववद्द्रव्यम्। **गच्छत्**। संयुक्तं सत्। **विष्टभ्नाति**। प्रतिबध्नाति। **पूर्वव्यूहमिति**। स्ववृत्तिगुरुत्वाधिकगुरुत्वाश्रयस्य पतनमित्यर्थः। **तत्तज्जात्यभिव्यञ्जकमिति**। स्वव्याप्यजातिव्यञ्जकतावच्छेदकसंस्थानवृत्तिनानाजातिकद्रव्यत्वव्याप्यजातिमदित्यर्थः। 'अपरजातिबहुत्वोपेतेति' भाष्यग्रन्थमधृत्वैव व्याचष्टे **यत इति**। **तत्तत्संस्थानविशेषवतीति**। स्वव्याप्यजातिव्यञ्जकतावच्छेदकसंस्थानवृत्तिनानाजातिकद्रव्यत्वव्याप्यजातिमदित्यर्थः। **अपरजातीति**। द्रव्यत्वतद्व्याप्यजातीत्यर्थः। **सर्वस्येति**। **परार्थत्वम्**। परप्रयोजनकत्वम्। **परत्वम्**। स्वसजातीयेतरत्वम्। **प्रयोजनत्वम्**। इच्छाविषयत्वम्। तथा च स्वसजातीयेतरवृत्तीच्छाविषयकार्यजनकत्वं परार्थत्वम्। साजात्यं द्रव्यत्वव्याप्यजात्या। तादृशञ्च वायुत्वम्। तच्च नात्मनि सम्भवति इच्छायास्तत्सजातीयेतरवृत्तित्वाप्रसिद्धेरत उक्तं **चेतनादन्यस्येति**। **अनया**। कार्यपृथिव्या। **चेतनप्रयोजनम्**। चेतनेच्छाविषयीभूतम्।

**तदिदं पारार्थ्यमस्याः किं विषयतयैव ? नेत्युच्यते। किन्तु त्रैविध्येनेत्याह त्रिविधञ्चेति। शरीरमिन्द्रियं विषय इति संज्ञा यस्य तदिदं तथोक्तम्। एतेन शरीरत्वमिन्द्रियत्वं विषयत्वं वा न जातिरस्ति। प्रथमद्वितीययोः पृथिवीत्वादिना परापरभावानुपपत्तेः। तृतीये च निःसामान्ययोः सामान्याभावयोर्विषयत्वात्। तस्माद् यदवच्छिन्ने आत्मनि भोगस्तदन्त्यावयविशरीरम्। शरीरसंयुक्तं साक्षात्प्रतीतिसाधनमतीन्द्रियमिन्द्रियम्। प्रतीयमानतयोपभोगसाधनं विषय इति लक्षणरूपोपाधिनिबन्धना एताः संज्ञा इत्यर्थः। चस्त्वर्थो वाय्वादिभ्यो भिनत्ति। वायोर्हि चतुर्विधं कार्यं नभः प्रभृतीनाञ्चैकविधमेवेति।**

**विषयतयैवेति**। ज्ञानविषयतयैवेत्यर्थः। किं तावच्छरीरत्वादिकमित्यत आह **एतेनेति**। वक्ष्यमाणबाधकेनेत्यर्थः। **अस्ति**। भवति। **पृथिवीत्वादिनेति**। स्वसमानाधिकरणपृथिवीत्वादिना परापरभावविरहादित्यर्थः। **भोगः**। प्रयत्नः। तेन नारायणादिशरीरस्य स्वर्गिनारकिशरीरयोश्चोपग्रहः। नारायणादिशरीरेऽपि चेष्टाश्रवणेन तदीयप्रयत्नस्य व्याप्यवृत्तित्वेऽपि शरीरावच्छिन्नत्वात्। अन्यथा चेष्टां प्रति अवच्छेदकताप्रत्यासत्त्या प्रयत्नस्य कारणत्वसम्भवादतिव्याप्तिवारणायान्त्यावयवित्वप्रवेशः। न च तथापि मृते खण्डशरीरे वाऽव्याप्तिरिति वाच्यम्; प्रयत्नावच्छेदकवृत्तिरन्त्यावयविमात्रवृत्तिश्च या जातिस्तद्वत्त्वस्य विवक्षितत्वात्। मृतशरीरादावपि मनुष्यत्वादेरेव तादृशजातेः सत्त्वान्नाव्याप्तिः। न च नरसिंहहयग्रीवादिशरीरेऽव्याप्तिः; जातिसङ्करभयेन नरसिंहत्वादेस्तत्र विरहादिति वाच्यम्, चैत्रत्वादिवन्नरसिंहत्वहयग्रीवत्वादिजातेरेव तत्र सम्भवात्। यद्वा कल्पभेदेन खण्डशरीरभेदेन च तच्छरीराणामपि नानात्वादिति भावः।

**शरीरसंयुक्तेति**। शरीरसंयुक्तत्वे सति साक्षात्प्रतीतिसाधनमतीन्द्रियमिन्द्रियमित्यर्थः। संयोगादावतिव्याप्तिवारणाय सत्यन्तम्। न च तथापि कालादावतिव्याप्तिरिति वाच्यम्; साक्षात्कारसाधनशरीरसंयोगवदतीन्द्रियमिन्द्रियमित्यस्य विवक्षितत्वात्। कालशरीरसंयोगश्च न प्रत्यक्षहेतुः। क्रियैव कालोपाधिरिति मतेन लक्षणकरणात्। महाकाल (संयोग) स्यापि कालत्वेन न प्रत्यक्षहेतुत्वम्। स्वीयस्पर्शसाक्षात्कारकारणेन्द्रियसंयोगमादाय वायावतिव्याप्तिवारणाय शरीरपदं स्वेतरशरीरपरम्। स्वं लक्ष्यत्वेनाभिमतम्। शरीरसंयोगपदं वा शरीरनिरूपितसंयोगपरम्। तेन वायवीयशरीरनिष्ठस्पर्शसाक्षात्कारकारणेन्द्रियसंयोगमादाय न वायवीयशरीरेऽतिव्याप्तिः। न वा घटादिविषयकपिशाचादिकर्तृकसाक्षात्कारकारणे पिशाचादिशरीरेन्द्रियसंयोगमादाय पिशाचादिशरीरेऽव्याप्तिः। आत्मशरीरसंयोगस्यापि प्रत्यक्षहेतुतया आत्मन्यतिव्याप्तिवारणायातीन्द्रियेति। ज्ञायमानकरणतानये शरीराकाशादिसंयोगमादायातिव्याप्तिवारणाय ज्ञानत्वमपहाय साक्षात्कारत्वप्रवेशः। वस्तुतोऽखण्डजातेः प्रवेशे वैयर्थ्यशङ्कापि। इन्द्रियावयवसंयोगश्च न प्रत्यक्षहेतुरतो नेन्द्रियावयवेऽतिव्याप्तिः। अन्त्यावयवित्वेन वा विशेषणीयम्। चक्षुरादिश्चान्त्यावयव्येवेति भावः।

**प्रतीयमानतयोपभोगसाधनमिति**। शरीरादेरपि भोगसाधनतया तद्वारणाय प्रतीयमानत्वप्रवेशः। वायोर्द्व्यणुकादेश्चाग्रे विषयत्वाभिज्ञानात् तत्राव्याप्तिवारणाय साक्षात्कारत्वमपहाय प्रतीतित्वेन प्रवेशः। **चस्त्वर्थ इति**। त्रिविधश्चेति चकारस्त्वर्थः। **चतुर्विधं कार्यमिति**। शरीरेन्द्रियविषयप्राणात्मकं चतुर्विधमित्यर्थः। **एकविधमेवेति**। शब्दाद्यात्मकविषय एवेत्यर्थः।

केचित्तु एकविषयमेव एकविधत्वमेव कालाकाशादिरूपत्वमेवेति यावत्। न तु शरीरादिरूपत्वमित्यर्थ इत्याहुः।

**अनेकावान्तरप्रकारवच्छरीरारम्भिका पृथिव्येव न द्रव्यान्तरमित्यभिप्रायवांस्तद्भेदं दर्शयति। तत्र शरीरं द्विविधं योनिजमयोनिजञ्चेति। ननु योनिजवन्नायोनिजमपि शरीरमुपलभामहे इत्यत आह तत्रेति। देवानामृषीणामपि। श्रूयते हि ब्रह्मणो मानसा एव मन्वादय इति।**

**ननु कारणमतिपत्य यदि कार्यमुत्पद्येत कार्यमेव न स्यात्। स्याच्च मृदादिव्यतिरेकेण घटादिरिति। न। शरीरत्वस्योष्मजक्रिमिमशकादिभिर्व्यभिचारात्। संस्थानविशेषवत्त्वस्यासिद्धेः। त्रिदशाः खल्वेतेऽनेकमन्वन्तरायुषोऽनिमिषचक्षुषो नभश्चराः कामगास्त्रिनयनचतुर्मुखादयः। अस्मदादयस्तु दशदशाः शतवर्षपरमायुषो परिभ्रमच्चक्षुषो भूचराः प्रतिहत-**

**गतयो द्विभुजनयनाः। किञ्चित्संस्थानसाम्येऽपि गोगवयादिवज्जातिभेदो-पपत्तेः।**

**न च संस्थानमपि योनिजत्वे नियामकम्। गोगजभुजगादीनां तदभावेऽपि योनिजत्वात्। तस्मात् सर्वेषां स्वकर्मनिबन्धनो भोगः। तच्च तन्नान्तरीयकतयाजन्मायुषी आक्षिपति। तत्र येन कर्मणा गर्भवासादिदुःखं भोजयितव्यमस्ति तेन योनिजमुत्पद्यते। तदन्येन तु अन्यथेति युक्तमुत्पश्यामः।**

**अनेकावान्तरेति**। आरभ्यशरीरवृत्त्यनेकशरीरविभाजकोपाधिकेत्यर्थः। भाष्ये **तत्रेति**। तेषु शरीरादित्रयेषु मध्ये। **तत्रेतीति**। योनिजायोनिजयोः शरोरयोर्मध्ये इत्यर्थः। देवर्षीणामित्यत्र कर्मधारयसमासभ्रमनिरासाय तत्पाठमधृत्वैव व्याचष्टे **देवाना-मृषीणाभपीति**। ऋषीणां शरीरस्यायोनिजत्वे मानमाह **श्रूयते हीति**। **कारणमति-पत्येति**। शुक्रशोणितसन्निपातस्य शरीरकारणत्वात् तं विनापि यदि शरीरं तत्कार्यमेव न स्यात्। **व्यभिचारादिति**। शुक्रशोणितसन्निपातजन्यत्वव्यभिचारित्वादित्यर्थः। **असिद्धेरिति**। देवानां शरीरेष्वसिद्धेरित्यर्थः। तथा च शुक्रशोणितसन्निपातस्य कार्यता-वच्छेदकं न शरीरत्वमपितु संस्थानविशेषवत्त्वमिति भावः।

नन्वस्मदादिशरीरयोः प्रकारान्तरेण साम्यं वर्त्तते तदेव शरीरनिष्ठशुक्रादिजन्यता-वच्छेदकं तावतापि उष्णजकृम्यादिना व्यभिचारवारणसम्भवात्। तथा च देवशरीरं कथमयोनिजं स्यादित्यत आह **त्रिदशा इति**। कौमारपौगण्डयौवनभेदेन तिस्रो दशा देवानामित्यर्थः। पौगण्डः यौवनकौमारयोः सन्धिः। **दशदशा इति**। कौमारपौगण्डयौवन-जरादयो दशदशा अस्मदादीनामित्यर्थः। तथा च प्रकारान्तरेणापि साम्यं नास्तीति भावः। इदमुपलक्षणम्। देवशरीराणामप्ययोनिजत्वस्यागमसिद्धतया साम्यसत्त्वेऽपि तस्य कार्यतावच्छेदकत्वासम्भवादिति ध्येयम्।

ननु तथापि देवशरीरमानुषशरीरयोः कथं जातिभेदः ? भुजवत्त्वादिरूपसंस्थान-साम्यादित्यत आह **किञ्चिदिति**। **गोगवयेति**। यथा गोगवययोः कियत्संस्थानसाम्येऽपि-जातिभेदाविरुद्धस्तथा प्रकृतेऽपि भुजवत्त्वादिरूपसंस्थानसाम्येऽपि जातिभेदाविरुद्धो इत्यर्थः। संस्थानविशेषवत्त्वमपि न योनिजन्यतावच्छेदकमित्याह **न चेति**। न वेत्यर्थः। **नियामकम्**। अवच्छेदकम्। **तदभावेऽपीति**। एकजातीयसंस्थानाभावेऽपीत्यर्थः। तथा विशिष्य तत्तत् संस्थानस्य जन्यतावच्छेदकत्वेऽननुगमात्। तदनुवाच्यमेव एकजातीय-संस्थानवद्वर्णसर्वेषां योनिजानां सिद्धमेवेति भावः। **तेनेति**। तथा चादृष्टविशेषेण गृहीतशरीरवत्त्वमेव योनिजन्यतावच्छेदकमिति भावः।

**तदेतदाह धर्मविशेषसहितेभ्योऽणुभ्य इति। अणुभ्य इति मूलकारण-**

निर्देशोऽयम् । न त्वणुभिरेवाहत्य शरीरमारभ्यते । तदेतदग्रे व्यक्ती-करिष्यति द्व्यणुकादिप्रक्रमेणेति ।

क्षुद्रजन्तूनाम् । मशकादीनाम् । यातनाशरीराणि । यातना नरक-पीडा, तस्यैव शरीराणि इत्यत्र नारकिणामिति शेषः । क्षुद्रजन्तूनां शरीराणीति । संस्थानभेदविवक्षया । भोक्तृभोगायतनभेदविवक्षया वा षष्ठी । अधर्मविशेषः प्रकृष्टोऽधर्मस्तत्सहितेभ्यः ।

न हि योनिजशरीरम् आकल्पम् अयःकुम्भीपाकक्रकचदारणादि-दुःखसहनक्षमम् । नापि नरकयातनासु योनिस्पर्शसुखमानुषङ्गिकमपि श्रूयते । न च नरकाण्येव न सन्तीति नरकेऽप्यनाश्वासप्रसङ्गादिति । इह योनिशब्देन यदि कारणमात्रमुच्यते तदा द्वैविध्यं नोपपद्येतात आह शुक्रेति । सन्निपातः परस्परमेलनं तज्जं योनिजम् । पशवो ग्राम्या-श्चतुष्पदाः । आरण्याः मृगाः । गर्भवेष्टनचर्मपुटकं जरायुः । पक्षिणो विहङ्गमाः । सरीसृपाः परितः सर्पणशीलाः सर्पकीटमत्स्यादयः ।

यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतयात्रैव व्याख्यातुमुचिता-स्तथापि अतिमन्दान्तःसंज्ञतया लोकापेक्षया सुखदुःखभोक्त्रधिष्ठानत्व-ममीषामविवक्षन् प्रायेण जङ्गमोपकारकतया तदधीनतया च विषयतां विवक्षन् तेष्वन्तर्भाव्य व्याख्यायन्ते ।

कयाचिद् विवक्षया हि अन्तर्भूतमपि पृथग् व्याख्यायते । यथा अयथार्थत्वेन विपर्ययत्वे सति स्वप्नसंशयज्ञाने लोकप्रसिद्धिमाश्रित्य । कयाचिद् विवक्षया पृथक्कृतमपि अन्तर्भाव्य व्युत्पाद्यते । यथा प्रमितेरन्य-त्वेनाविद्यापि यथार्थत्वेन स्मृतिर्विद्यायाम् । कयाचिद् विवक्षया सदपि किञ्चिद्रूपमभिधाय रूपान्तरमुच्यते । यथात्रैव रूपरसगन्धानां पाकजत्व-मनुक्त्वा सौरभाद्युक्तम्, शरीरेन्द्रिययोर्द्व्यणुकादिप्रक्रममुपेक्ष्य योनिजत्वा-द्युक्तमित्याचार्यशैलीयम् ।

कथं पुनरेतत् ? इत्थम् । वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः जीवनमरणस्वप्नजागरणरोगभेषजप्रयोगबीजसजातीयानुबन्धोऽनुकूलोपगम-प्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत् । न चैते सन्दिग्धासिद्धाः ।

**आध्यात्मिकवायुसम्बन्धात् । सोऽपि मूले निषिक्तानामपां दोहदस्य तादृशस्य पार्थिवस्य धातोरभ्यादानात् । तदपि वृद्धिक्षतभग्नसंरोहणादिभ्य इति । अन्यथा कारणं विना कार्योत्पत्तिप्रसङ्गेन सर्वमिदम् आमूलविशीर्णमापद्येतेति संक्षेपः । आगमश्चात्रार्थे बहुतरोऽनुसन्धेय इति ।**

**द्व्यणुकादिप्रक्रमेणेतीति** । द्व्यणुकादिप्रक्रमेणेत्यनेन (भाष्य) ग्रन्थेनेत्यर्थः । न च मशकादीनां शरीरं केवलं नरकपीडार्थम्, सुखस्यापि सत्त्वादित्यत आह अत्र नारकिणामितीति । **क्षुद्रजन्तूनां शरीराणीतीति** । क्षुद्रजन्तूनामित्यत्र शरीराणीति शेष इत्यर्थः । तथा च क्षुद्रजन्तूनां शरीराणि यातनाशरीराणि नारकिणामधर्मसहितेभ्योऽणुभ्यो जायन्त इति भाष्यार्थ इति भावः ।

ननु जन्तूनामेव शरीरतया क्षुद्रजन्तूनामित्यत्र षष्ठ्यर्थोऽनन्वित इत्यत आह **संस्थानेति** । क्षुद्रजन्तुपदं संस्थानविशेषपरमाश्रयत्वञ्च षष्ठ्यर्थं इति भावः । **भोक्तृभोगेति** । क्षुद्रजन्तुपदं तदात्मपरं शरीरपरमेव वेति भावः । वस्तुतस्तु 'राहोः शिरः' इतिवद् अभेदात्मिका षष्ठी ज्यायसी ।

ननु नारकिणां यातनाशरीराणि योनिजान्येव कथं न स्युरित्यत आह **न हीति** । दूषणान्तरमाह **नापीति** । न वा नरकयातनादशायामानुषङ्गिकमपि योनिसंयोगसुखं श्रूयते । सुखासंभिन्नदुःखस्यैव नरकत्वेन वेदबोधनादित्यर्थः । तथा च नारकिणां योनिजत्वे नारकित्वमेवानुपपन्नमिति भावः । एतच्चापाततः । मातापित्रोस्तादृशसुखवत्त्वेन नारकित्वाभावेऽपि तत्पुत्रस्य नारकित्वे बाधकाभावात् । वस्तुतस्तु नारकिशरीराणामयोनिजत्वेऽपि श्रुतिरेव मानं बोध्यम् । **अनाश्वासप्रसङ्गादिति** । असत्त्वाशङ्कादित्यर्थः ।

**द्वैविध्यं नोपपद्येतेति** । सर्वेषामेव शरीराणां कारकत्वादिति भावः । **मेलनम्** । संयोगः । **अतिमन्दान्तःसंज्ञतयेति** । अन्तःसंज्ञा ज्ञानम् । **लोकापेक्षयेति** । लोकव्यवहारानुरोधेनेत्यर्थः । वृक्षादिषु लोकानुमितशरीरत्वव्यवहारादिति भावः । लोकसिद्धमिति क्वचित्पाठः । सः सुगम एव । **अविवक्षन्निति** । वक्तुमनिच्छन्नित्यर्थः । **जङ्गमोपकारकतयेति** । वृक्षादीनां जङ्गमोपकारकतयेत्यर्थः । **तदधीनतया च** । तस्य लोकाधीनतया च । **विवक्षन्** । वक्तुमिच्छन् । **तेषु** । विषयेषु ।

**विपर्ययत्वे सतीति** । विपर्ययान्तर्गते सतीत्यर्थः । **लोकप्रसिद्धिमाश्रित्येति** । विपर्ययत्वेन लोकानामप्रसिद्धिः, किन्तु संशयत्व-स्वप्नत्वाभ्यामेव स्वातन्त्र्येण प्रसिद्धिरित्यनुरोधेनेत्यर्थः । पृथग् व्याख्यायत इति सम्बध्यते । प्रमितेरन्यत्वेनापि स्मृतिर्यथार्थत्वेन विद्यायामिति योजना । अन्तर्भाव्य व्युत्पाद्यत इति सम्बध्यते । **सौरभाद्युक्तमिति** । सौरभत्वाद्युक्तमित्यर्थः ।

**कथं पुनरेतदिति** । कथं पुनर्वृक्षादीनां शरीरत्वमित्यर्थः । **प्रतिनियतेति** । आत्मवृत्तिभोगावच्छेदका इत्यर्थः । भोगः प्रयत्नस्तस्यैव शरीरघटकत्वात् । **रोगः** । धातुवैषम्यम् । **भेषजप्रयोगः** । भेषजप्रयोगाधीनरोगनाशः । **बीजसजातीयानुबन्धः** । सजातीयबीजके स्नेहः । स्नेहो ज्ञानविशेषः । स च अवच्छेदकतासम्बन्धेन शरीरवृत्तिः । **अनुकूलोपगमः** । अनुकूले प्रवृत्तिः । **प्रतिकूलापगमः** । प्रतिकूलान्निवृत्तिः । **आध्यात्मिकेति** । आध्यात्मिको वायुः प्राणाख्यः । **दोहदस्येति** । यस्मिन् पार्थिवे धातौ मूले दत्ते बहुतरफलपुष्पे भवतः स दोहदः । तादृशस्य पार्थिवस्य धातोः गैरिकादेरन्तरन्तर्नयनादित्यर्थः । **तदपि** । जलदोहदयोरन्तर्नयनमपि । **वृद्धिरवयवोपचयः** । **क्षतभग्नसंरोहणाभ्यामिति** । क्षतभग्नयोर्विभागविशेषविशिष्टावयवयोः संयोगाभ्यामित्यर्थः । **अत्रार्थे** वृक्षादीनां शरीरत्वे ।

**कथं पुनर्मानुषादिशरीरं पार्थिवम् । गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकमिति प्रसिद्धिः । सत्यम् । पञ्चानां कारणत्वमात्रेण न तु समवायितया । अथ तथैव किं न स्यात् । इत्थम् । द्व्यणुकादिप्रक्रमेण तावदारम्भ इति वक्ष्यते । तत्र यदि विजातीयपरमाणुभ्य एकमारभ्येत, अगन्धमरसमित्यापद्येत । एकस्य गन्धादेरनारम्भकत्वात् । आरम्भकत्वे सति सततोत्पत्तिप्रसङ्गात् अपेक्षणीयाभावात् । अथानेकस्यापि कुत एवैतत् प्रसज्यते, तत्र समवायिकारणस्यापेक्षणीयत्वात् । न ह्यनपेक्षितं समवायिकारणमारभते इति चेत्, तदेतदत्रापि तुल्यम् । न च तन्त्वादिगतानां रूपादीनामनेकेषामेकत्राप्यारम्भकत्वदर्शनाद् अन्यत्रापि तथा कल्पयितुं युक्तम् । कारणानां सजातीयतया तत्र तथोत्पत्तेः । विजातीयानामारम्भकत्वेऽन्यथा भविष्यति । विपक्षे बाधकाभावात् । एतेनोष्णं जलं सुरभिः समीरण इत्याद्युपपद्यते ।**

**पार्थिवमिति** । पृथिवीमात्रसमवायिकारणमित्यर्थः । क्लेदो द्रवत्वम् । तत्तु स्वेदादिलक्षणस्यन्दनेनानुमेयम् । पाकः उष्णता । व्यूहः कम्पः । तदुक्तं "न कम्पो वायुना विनेति" । अवकाशदानम् मुखादावन्नादिगत्यप्रतिबन्धः । **पञ्चानामिति** । जलादिधर्माणां तद्गतत्वेनोपलम्भस्य स्वसमवायिसंयुक्तत्वेनाप्युपपत्तेरिति भावः । **अथेति** । साक्षात् सम्बन्धविषयकत्वे बाधकसत्त्व एव परम्परासम्बन्धविषयताकल्पनादिति भावः । **एकमारभ्येतेति** । एकं द्व्यणुकमारभ्येतेत्यर्थः । **अगन्धमिति** । गन्धाभाववद् द्व्यणुकमित्यादि । इदमुपलक्षणम् । पार्थिवाभ्यामवयवाभ्यां साक्षात् शरीरजननेऽपि शरीरस्यागन्धत्वापत्तिरित्यपि बोध्यम् । **एकस्येति** । स्वसमवायिसमवेतत्वद्रव्यसमवायिसमवेतत्वलक्षण-(सम्बलिततत्व) सम्बन्धेन गन्धाद्यन्तराविशिष्टस्येत्यर्थः । **आरम्भकत्वे सतीति** । तादृश-

सम्बन्धेन गन्धाद्यन्तराविशिष्टस्याप्यारम्भकत्वे सतीत्यर्थः । **सततेति** आरम्भकसंयोगानुत्पत्तिदशायामपि गन्धाद्युत्पत्तिप्रसङ्गादित्यर्थः । **अनेकस्यापीति** । आरम्भकत्वे इति शेषः । **एतत्** । सततोत्पत्तिमत्त्वम् । **तत्र** गन्धादिषु । **समवायिकारणस्येति** । उत्पाद्यस्य गन्धादेर्यत् समवायिकारणं द्वयणुकादि तदभावादेवारम्भकसंयोगविरहदशायां परमाणुगन्धादिर्न गन्धान्तरमारभते इत्यर्थः । **एकत्रापीति** । एकस्यारम्भकत्वेऽपीत्यर्थः । **विपक्षे बाधकाभावादिति** । अनेकेषामेवारम्भकत्वमिति नियमेऽनुकूलतर्काभावादित्यर्थः ।

**न एतेन गुणेन गुणारम्भे जातिसङ्करप्रसङ्गात् । तथाहि गन्धवत्त्वाद् द्वयणुकं पृथिवीजातीयम्, सांसिद्धिकद्रवत्ववत्त्वात् जलम् अशीतत्वाच्च तेजः स्यात् । अपाकजानुष्णाशीतस्पर्शत्त्वाच्च वायुः स्यात् । तदयं प्रमाणार्थः । गन्धवन्ति द्वयणुकानि गन्धवद्भिरेव परमाणुभिरारभ्यन्ते, कार्यत्वे सति गन्धवत्त्वात् । पार्थिवपरमाणुद्वयारब्धद्वयणुकवत् । विवादाध्यासिताः परमाणवो गन्धवन्त्येव द्वयणुकान्यारभन्ते गन्धवत्त्वात् । ये पुनर्निर्गन्धान्यारभन्ते, न ते गन्धवन्तः । यथा निर्गन्धजलाद्यारम्भकाः परमाणवः ।**

**न च नैते गन्धवन्तः । तस्माद् गन्धवन्त्येव द्वयणुकान्यारभन्ते । न च दृष्टान्तासिद्धिः । अनियमारम्भे सजातीयाभ्यामपि आरम्भाभ्युपगमात् । अन्यथा निर्गन्धस्य जलादेर्नीरसस्य अनलादेर्नीरूपस्य पवनस्यानुपलम्भप्रसङ्गः ।**

**एवं सांसिद्धिकद्रवत्ववन्ति द्वयणुकानि तथाभूतैरेव परमाणुभिरारभ्यन्ते, कार्यत्वे सति सांसिद्धिकद्रवत्ववत्त्वात् । आद्यपरमाणुद्वयारब्धद्वयणुकवत् । जलपरमाणवः शीतान्येव द्वयणुकान्यारभन्ते, शीतत्वात् । ये पुनरशीतान्यारभन्ते, ते न शीताः । यथा अशीततेजोद्वयणुकारम्भका इत्यादि स्वयमूह्यम् । तस्मात् सजातीयानामेवारम्भकत्वं न विजातीयानामिति स्थितम् ।**

**एतेनेति** । विजातीयाभ्यामनारम्भे बाधकं विनापि इयं प्रतीतिर्भ्रान्ता, परम्परासम्बन्धविषयिका वा स्यादिति भावः । गन्धवद्भिरेव परमाणुभिरारभ्यन्त इत्यत्र परमाणुभिरिति स्वरूपकथनं गन्धवद्भिरेवारभ्यन्ते इत्येव साध्यम् । तेन घटादेः परमाणुनारभ्यत्वेऽपि न व्यभिचारः ।

**केचित्तु** साक्षात्परम्परासाधारणारम्भकत्वं हेतौ वा कार्यपदं द्वयणुकपरमतो न व्यभिचार इत्यप्याहुः ।

यद्यपि शरीराणां पाञ्चभौतिकत्वविप्रतिपत्तौ गन्धवन्मात्रारम्भकत्वसाधनमर्थान्तरम्; तथापि गन्धवदारभ्यत्वाद् गन्धवत्त्वापादने यदि कश्चिदिष्टापत्तिं कुर्यात्, तं प्रत्याह **विवादाध्यासिता इति**। न च घटादौ व्यभिचार इति वाच्यम्। निर्गन्धद्व्यणुकारम्भकत्वाभावस्य साध्यत्वात्। न च तथापि गुणविरोधेन निर्गन्धस्य द्व्यणुकस्यारम्भके परमाणौ व्यभिचार इति वाच्यम्; विजातीयगन्धवदवयवारब्धद्व्यणुकेऽपि नानागन्धस्वीकारादिति भावः।

**दृष्टान्तासिद्धिरिति**। पूर्वानुमाने दृष्टस्य पार्थिवपरमाणुद्वयारब्धद्व्यणुकस्याप्रसिद्धिरित्यर्थः। **अनियमारम्भे**। अनियमारम्भकत्वमतेऽपीत्यर्थः।

**तथापि कथं शरीरस्य पार्थिवत्वनिश्चयः। इत्थम्। क्लेदादीनां परावृत्तावपि शरीरस्य प्रत्यभिज्ञानात्। गन्धस्य च यावद्द्रव्यभावित्वात्। घटवत्। यथा हि घटादौ पार्थिवे क्लेदशोषदशयोरपि गन्धोऽनुवर्त्तते, शैत्यादयस्तु कुसुमाधिवासितजलादिगन्धवति वर्त्तन्ते, तथा शरीरेऽपीति तद्वत् पार्थिवत्वमवधार्यते।**

**तथापि कथमिति**। त्रिजातीयानामारम्भकत्वेऽपि मानुषादिशरीरं पृथिवीसमवायिकारणकमिति कुतो निश्चय इत्यर्थः। **क्लेदादीनामिति**। क्लेदो द्रवत्वम्। आदिपदात्। पूर्वोक्तपाकादिपरिग्रहः।

**इन्द्रियमाह इन्द्रियमिति। गन्धव्यञ्जकं यदिन्द्रियं तद्घ्राणम्। रूपाद्यव्यञ्जकत्वे सति गन्धस्यैव व्यञ्जकं यदित्यर्थः। गन्धोपलब्ध्या तावत्करणमात्रं सिद्धम्। क्रियायाः करणनिष्पाद्यत्वनियमात्। तच्च प्राप्यकारिजनकं तदप्राप्तावजनकत्वाच्च, द्रव्यं संयोगाश्रयत्वात्। पार्थिवं गन्धवत्त्वात्। गन्धवच्च रूपाद्यव्यञ्जकत्वे सति गन्धस्याभिव्यञ्जकत्वात्। कुङ्कुमगन्धाभिव्यञ्जकतैलवदिति। प्राणिभेदेनेन्द्रियप्रकृतिवैचित्र्यं निवारयति सर्वप्राणिनामिति।**

**यदि गन्धाभिव्यक्तौ सामर्थ्यमस्ति पृथिव्याः, किं न सर्वैव पृथिवी एवमित्यत आह जलाद्यनभिभूतैरिति। अत एव श्लेष्माद्यभिभवे गन्धो न गृह्यत इति भावः। घ्राणमिति। लोकप्रसिद्धमित्यर्थः।**

**इन्द्रियमाहेति**। पृथिव्याः कार्यमिन्द्रियमाहेत्यर्थः। **यदिन्द्रियमिति**। वायूपनीतसुरभिभागादावतिव्याप्तिवारणायेन्द्रियत्वप्रवेशः। **तद्घ्राणमिति**। एवञ्च तद्घ्राणं पार्थिवावयवैरारब्धं कथमिति भाष्ययोजनेति भावः। ननु गन्धव्यञ्जकं यदिन्द्रियं तच्चेद्

घ्राणं तदा मनसोऽपि घ्राणत्वापत्तिरित्यत आह **रूपाद्येति**। तथा च मनसि सत्यन्ताभावान्नातिव्याप्तिरिति भावः। आदिपदं रसादिघटितलक्षणान्तरसूचनाय। **अव्यञ्जकत्वे सति इति**। ज्ञानाजनकत्वे सतीत्यर्थः। एतच्च ज्ञानाजनके व्यभिचारवाणाय।

ननु तत्र गन्धव्यञ्जकत्वमेव, न तु तादृशेन्द्रियस्य द्रव्यत्वे पृथिवीत्वे वा मानमस्तीत्यत आह **गन्धोपलब्ध्येति**। गन्धोपलब्धिः असाधारणकारणजन्या क्रियात्वात् छिदिवदिति गन्धोपलब्धिपक्षकानुमानेनेत्यर्थः। **प्राप्यकारीति**। विषयसम्बन्धवशाज् ज्ञानजनकमित्यर्थः। **तदप्राप्तावजनकत्वादिति**। विषयसम्बन्धाभावदशायां ज्ञानाजनकत्वादित्यर्थः।

गन्धवत्त्वमेव कथमित्यत आह **गन्धवच्चेति**। पार्थिवमिन्द्रियं गन्धवदिति साध्यनिर्देशेनेति भावः। **रूपाद्येति**। मनसि व्यभिचारवारणाय सत्यन्तम्। आदिपदञ्च रसादिघटितहेत्वन्तरसूचनाय। जलपरमाण्वादौ व्यभिचारवारणाय विशेष्यदलम्। चक्षुर्घ्राणेतरबहिरिन्द्रिये व्यभिचारवारणाय तत्र विशिष्यगन्धप्रवेशः। **कुङ्कुमगन्धाभिव्यञ्जकतैलवदिति**। ननु अस्य स्वीयरूपव्यञ्जकतया हेतोः सत्यन्तदलमेव नास्ति। कथमस्य दृष्टान्तत्वम्। ननु स्वीयरूपाव्यञ्जकतैलानुपहितकुङ्कुमफलोपहितत्वेन व्यक्तिरेव दृष्टान्त इति वाच्यम्, तथा सति स्वीयरूपव्यञ्जकतैलोपहितत्वेन जले व्यभिचारापत्तेः। न च रूपाव्यञ्जकत्वं रूपाव्यञ्जनरूपायोग्यत्वमेवातो न नवशरावगन्धव्यञ्जकजले व्यभिचारः। दृष्टान्ते च कुङ्कुमगन्धाभिव्यञ्जकतैलपदं वायूपनीतसुरभिभागपरमतो न दृष्टान्तविरोध इति वाच्यम्, वायूपनीतसुरभिभागस्यापि स्वीयरूपव्यञ्जनस्वरूपयोग्यत्वात्।

न च तस्यानुद्भूतरूपवत्तया न स्वीयरूपव्यञ्जनसामर्थ्यमिति वाच्यम्; चम्पकादेरुद्भूतरूपवत्तया वायूपनीततदवयवस्यानुद्भूतरूपवत्त्वाद्यसम्भवात्। न हि अनुद्भूतरूपवद्भ्यां नीरूपाभ्यां वा अवयवाभ्यां चम्पकाद्यारम्भो मानाभावात्। चम्पकादेरपि अनुद्भूतरूपवत्त्वप्रसङ्गाच्च।

न च वायूपनीतचम्पकाद्यवयवभागस्यानुद्भूतरूपवत्त्वाद्यसम्भवेऽपि अनुद्भूतरूपवदुद्भूतगन्धवतो द्रव्यान्तरस्य वा वायूपनीतावयवभाग एव दृष्टान्त इति वाच्यम्, तादृशद्रव्यस्यैवासिद्धेः। किञ्च वायूपनीतसुरभिभागे गन्धाभिव्यञ्जकत्वं विशेष्यदलमेव नास्ति। सन्निकर्षघटकस्य प्रत्यक्षजनकत्वे मानाभावात्। द्रव्यप्रत्यक्षं प्रति द्रव्यस्य विषयविधया हेतुत्वे मानाभावेन विषयविधयापि तद्व्यञ्जकत्वासम्भवात्।

अतो न कुङ्कुमगन्धाभिव्यञ्जकतैलस्य दृष्टान्तत्वासङ्गतिः। न चैवं नवशरावगन्धव्यञ्जकजले व्यभिचारः, तस्याप्युक्तरीत्या स्वीयरूपाव्यञ्जकत्वादिति वाच्यम्, तस्य स्वीयरूपव्यञ्जनस्वरूपायोग्यत्वेऽपि मसीक्षोदादिनानारूपव्यञ्जनस्वरूपयोग्यत्वात्। यदि च सामान्यतो जलत्वेनोद्भूतस्पर्शजलत्वेन वा मसीक्षोदादिनीलिमाव्यञ्जकत्वं द्रवद्रव्य-

मात्रस्यैव तद्व्यञ्जकत्वात् इति विभाव्यते, तदा तु रूपादिपदं अतद्गुणसंविज्ञान-बहुव्रीहिणा रसपरम् ( **परस्पर** ) तद्व्यञ्जकत्वं तद्व्यञ्जनस्वरूपयोग्यत्वम्, तद्व्यञ्जक-तावच्छेदकघटकद्रव्यत्वव्याप्यजातिमत्त्वं वा। अतो नवशरावगन्धव्यञ्जकजले न व्यभिचारः। तस्य शक्तुरसव्यञ्जनस्वरूपयोग्यत्वात्। सामान्यतो जलत्वेन उद्भूत-स्पर्शवन्महाजलत्वेन वा शक्तुरसव्यञ्जकत्वात्। तैलञ्च न रसव्यञ्जनसमर्थम्। तस्य शक्तुरसव्यञ्जकत्वाभावात्। द्रव्यस्य रसनायोग्यतया सन्निकर्षघटकस्य प्रत्यक्षाजनकतया च स्वीयं रसं प्राप्य व्यञ्जकत्वाच्चेति न दृष्टान्तविरोध इत्याचार्यनिगर्वः।

एतत् सर्वमापाततः। अप्रयोजकत्वात्। वस्तुतस्तु घ्राणादीनां पृथिव्यादित्वे ब्रह्ममीमांसालिखितश्रुतय एव प्रमाणत्वेनावगन्तव्या इति। **इन्द्रियप्रकृतिवैचित्र्यमिति**। केषाञ्चित्प्राणिनां घ्राणं गन्धस्यैव व्यञ्जकम्, केषाञ्चिच्च गुणान्तरस्यापि व्यञ्जक-मिति स्वभाववैचित्र्यमित्यर्थः। इत्थञ्च सर्वप्राणिनामिति गन्धस्यैव व्यञ्जकमित्यनेना-न्वितमिति भावः।

**केचित्तु** इन्द्रियप्रकृतिवैचित्र्यमिति केषाञ्चित् प्राणिनां घ्राणं पृथिव्युपादानकम्, केषाञ्चिच्च अन्योपादानकमित्युपादानवैचित्र्यमित्यर्थः। तथा च सर्वप्राणिनामिति पार्थिवावयवैरारब्धमित्यनेनान्वितमिति भाव इत्याहुः। **पृथिव्याः**। **घ्राणस्य**। **पृथिव्येवम्**। तथा च जलाद्यभिभूतमपि घ्राणं गन्धव्यञ्जकमिति भावः। ननु गन्धस्यैव व्यञ्जकं यदिन्द्रियं तद्घ्राणमिति घटः कलश इतिवत् पुनरुक्तम्। गन्धमात्रव्यञ्जकेन्द्रिय-स्यैव घ्राणरूपत्वादित्यत आह **घ्राणमितीति**। घ्राणमित्याकारिकया लोकप्रसिद्धे-र्लोकव्याहृतेर्विषयीभूतमित्यर्थः। तथा च घ्राणपदं घ्राणपदवाच्यपरमतो न पुनरुक्तिरिति भावः। वस्तुतो घ्राणत्वस्य पृथिवीत्वव्याप्यजातिविशेषरूपतया यथा श्रुतेऽपि न पुनरुक्तिशङ्कावकाश इति ध्येयम्।

**तृतीयं पृथिवीकार्यमाह विषयस्त्विति। यद्यपि शरीरमपि विषय-स्तथापि शरीरत्वेनैव तदसाधारणं पुरुषार्थसाधनमिति दर्शयितुं तदेव रूपं तस्य दर्शितम्। वक्ष्यमाणे तु विषयत्वमेवासाधारणमतस्तदुच्यते। द्व्यणुक आदिर्यस्य प्रक्रमस्य स तथोक्तः। तेनारब्धो निष्पादितः। मृत्त्वं मृत्ति-कात्वम्। पाषाणत्वं प्रस्तरत्वम्। स्थावरत्वमुद्भित्त्वं सामान्यविशेषः। तन्मृत्तिकात्वं केषु वर्त्तत इत्यत आह तत्रेति। मृद्विकाराऽमृत्तिकारूप-विकाराः। के पाषाणा इत्यत आह उपलेति। उपला ग्रावाणः। मणयो माणिक्यादयः। वज्रं हीरकम्। आदिग्रहणाद् गैरिकादयः। स्थावरा इति। वृक्षाः पुष्पफलवन्तः स्कन्धशाखिनः। तृणान्युलपादीनि। ओषध्यः फल-पाकान्ताः कलमादयः। गुल्मा भाटाः। लताः कुष्माण्डीप्रभृतयः। अवतानाः केतक्यादयः। वनस्पतयो विना पुष्पं फलिनः। अत्र च शरीरग्रहणेन**

**तदवयवा मांसास्थ्यादयस्तद्विकाराश्च क्षीरघृतादयः संगृहीताः। इन्द्रियग्रहणेनैव तदवयवाः। विषयग्रहणेनैव द्व्यणुकादयः। पाषाणग्रहणेनैव हरितालादयः। स्थावरग्रहणेनैव पत्रपुष्पादयः। तृणग्रहणेनैव तालादयः। वृक्षग्रहणेनैव काष्ठादयः। ओषधिग्रहणेनैव तद्विकारादयस्तैलतण्डुलादयः।**

**विषयत्वमेवासाधारणमिति**। पुरुषार्थसाधनताप्रयोजकमिति शेषः। **प्रक्रमस्य**। अवयवपरम्परायाः। **विकाराः** कार्याः। **ग्रावाणः**। पाषाणाः। **विनापुष्पं फलिन इति**। ते च खेट (?) वटपर्कटा इति भावः। **मांसास्थ्यादय इति**। मांसत्रदस्थ्यवच्छेदेनापि सुखाद्यनुभवात्तस्याप्यवयवत्वमिति भावः। **तालादय इति**। आदिपदान्नारिकेलगुवाकहिन्तालखर्ज्जुरनाडोकेतकीनां संग्रहः। तथा **चामरसिंहः**—

तृणराजाह्वयस्तालो नारिकेलस्तु लाङ्गली।
घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु॥
फलमुद्वेगमेते च हिन्तालसहितास्त्रयः।
खर्ज्जुरः केतको ताली खर्ज्जुरी च तृणद्रुमाः॥इति।

अस्य गुवाकवृक्षस्य यत्फलं तदुद्वेगम्। एते त्रय; तालनारिकेलगुवाकाः हिन्तालसहिताः खर्ज्जुरादिचतुष्टयञ्च तृणद्रुमा इत्यर्थः। ताडीपत्रवृक्षं खर्जुरी (नस्यर्द्धव ?)।

**ननु कोऽयं द्व्यणुकादिप्रक्रमो द्व्यणुक एव प्रमाणाभावात्। त्रसरेणवस्तावत् प्रत्यक्षसिद्धाः। ते च चाक्षुषद्रव्यत्वादेव महान्तः। द्रव्यस्य चाक्षुषतां प्रति रूपविशेषवन्महत्त्वस्यापि कारणत्वात्। अन्यथा दूरदूरतरादौ तत्प्रकर्षानुविध्यानुपपत्तेः।**

**महत्त्वे सति रूपवत्त्वात् क्रियावत्त्वाच्च ते सावयवाः कार्याश्च। अन्यथा सावयवगतसंख्याद्यनुपपत्तौ महत्त्वानुपपत्तेः। नित्यत्वे प्रकर्षकाष्ठाप्राप्ताल्पीभावस्य महत्त्वविरोधात्। न च त्रसरेण्ववयवा अपि सावयवाः। तदवयवकल्पनायां प्रमाणाभावात्। न हि त्रसरेणुवत् तेऽपि महान्तः। रूपविशेषवतां महतां चाक्षुषत्वप्रसङ्गात्। यद्यपि च ते महत्त्वव्यावृत्तेरणुपरिमाणा निरवयवत्वाच्च प्रचयवञ्चितास्तथापि बहुत्वात् महत्कार्यद्रव्याण्यारभन्ते। तथा च परमाणव एव त्रसरेण्ववयव इति कुतो द्व्यणुकम्?**

यद्यपि पूर्वमाशङ्का दूषितं तथापि दूषणान्तरदानार्थं पुनः शङ्कते **नन्विति**। सावयवत्वसाधनेऽनुकूलतर्कमाह **अन्यथेति**। **अनुपपत्तौ**। अभावेन। न च नित्यमेव त्र्यसरेणोर्महत्त्वमिति वाच्यम्। तथा सति जन्यमहत्त्वेनैव द्रव्यचाक्षुषहेतुतया

त्रसरेणोश्चाक्षुषत्वानुपपत्तेः। महत्त्वेन लाघवात् तद्धेतुत्वे 'नित्यस्य स्वरूपयोग्यस्ये'ति न्यायात् कालादेश्चाक्षुषत्वापत्तेरिति भावः। कार्यत्वसाधनेऽनुकूलतर्कमाह **नित्यत्वे चेति। प्रकर्षकाष्ठेति।** सजातीयप्रतियोगिकोत्कर्षाश्रयपरिमाणवत इत्यर्थः। यन्नित्यत्वे सति महत्त्ववद्भवति, तत् सजातीयप्रतियोगिकोत्कर्षानाश्रयपरिमाणवद् भवति, यथाकाशादीति व्याप्तेरिति भावः। ननु तेषां महत्त्वाभावे तदारब्धे त्रसरेणौ महत्त्वं कथं स्यादित्यत आह **यद्यपि चेति।**

**उच्यते। महतः कार्यद्रव्यस्य कार्यद्रव्यारब्धत्वनियमाद् द्व्यणुकसिद्धिः। अन्यथा परमाणुभिरेव बहुत्वसंख्योपेतैर्महद्द्रव्यारम्भे गोघटादेरपि तैरेवारम्भसम्भवादान्तरालिकाल्पाल्पतरादिकार्योपलम्भविरोधात्। तथा हि त्र्यणुकवदनुपलक्षितरेखोपरेखो गोघटादिरपि स्यात्। तथा च संस्थानभेदानुपलम्भे तदभिव्यङ्ग्य घटत्वादिकमपि नोपलभ्येत।**

**न चारभ्याप्यारभन्ते इति तदुपलम्भोपपत्तिः। मूर्त्तानां समानदेशताविरोधात्। न्यूनाधिकदेशतया समानदेशत्वे अविरोध इत्यपि नास्ति। न्यूनदेशता हि यत्र नास्ति तत्राधिकदेशस्थितिं सा विरोत्सीत्, स्वदेशे तु विरुध्यादेव। तत्रापि अविरोधित्वे मूर्त्तत्वं जह्यात्, अवयवरूपादिवत्। संयोगिन्यपि वा देशे न्यूनाधिकदेशतया समानदेशत्वाविरोधः स्यात्। न च उदञ्चनावच्छिन्नदेशे घटादिः संयोगेन वर्तते।**

**कथं तर्हि चरमादितन्त्वपकर्षणे स्वल्पतरतमादिपटोपलम्भ इति चेत्, न, प्रतिबन्धकविगमेऽवस्थितसंयोगेभ्यः खण्डपटोत्पत्तेः। आद्यादितन्त्वपकर्षणे त्वयाप्येषैव रीतिरनुसरणीया। तदा हि द्वितन्तुकादिपटपर्यन्तसमस्तकार्यविनाशे खण्डपटानुत्पत्तौ च तन्त्वतिरिक्तं न किञ्चिदुपलभ्येत।**

आन्तरालिकेति। घटे कपालशर्कराचूर्णादिलक्षणं कार्यं नोपलभ्येतेत्यर्थः। परमाणुभिः साक्षाद्घटादिकं कपालशर्करादिकञ्चारभ्यते। हेतौ घटे नष्टे न कपालाद्युपलम्भविरोध इत्याशङ्क्य निराकरोति **न चेति। मूर्त्तत्वं जह्यादिति।** मूर्त्तत्वस्य संयोगसमवायान्यतरसम्बन्धेन स्वसमानकालीनस्वेतरमूर्त्तसमानदेशत्वाभावव्याप्यत्वादिति भावः। **उदञ्चनावच्छिन्न इति।** उदञ्चनं शरावः। स च घटाद्यपेक्षया न्यूनदेशवृत्तिरिति भावः। न च शरावस्य उदञ्चनपदार्थत्वे 'शरावोदञ्चनादय' इति **पञ्चमाध्यायटीकायां** शरावस्य पृथङ्निर्देशोऽसङ्गत इति वाच्यम्, तत्र योगार्थमर्यादया तदुदञ्चनपदस्योर्ध्वगमनशीलत्वपरत्वात्।

**केचित्तु** तत्र तदुदञ्चनपदं क्षुद्रशरावविशेषपरतया गोवलीवर्दन्यायेनाभिहित-मित्याहुः ।

यद्यप्येवं एकत्र घटे आलोकेन्द्रिययोः संयोगेन वृत्तित्वं न स्यात् । न स्याच्च घटवदवयवयोरेकत्र संयोगेन वृत्तित्वम्, तथापि यत् योंऽशो वा कठिनं सन्मूर्त्तं भवति, तत् स्वसमानकालीनस्वावयवावयविभावानापन्नकठिनमूर्त्तसमानदेशं न भवतीत्येव व्याप्ति-रवसेया ।

**केचित्तु** यन्मूर्त्तं भवति तत्स्वसमानकालीनस्वेतरमूर्त्यसमवायिसमवेतं न भवतीति समवायघटितैव व्याप्तिर्न तु सम्बन्धान्तरघटितेत्याहुः ।

तदसत् । ''संयोगिन्यपि' इत्याचार्यग्रन्थविरोधात् । मूर्त्तत्वपर्यन्तानुधावनस्य व्यर्थत्वप्रसङ्गाच्च । सामान्यतो द्रव्यत्वेन प्रवेशेऽपि व्यभिचारविरहादिति ध्येयम् ।

**कथं तर्हीति ।** न्यूनाधिकदेशयोरपि बृहच्छरावमूर्त्तयोरेकशेषवृत्तित्वानभ्युप-गमे इत्यर्थः । **प्रतिबन्धकविगम इति ।** प्रतिबन्धको महापटस्तन्नाशे इत्यर्थः । **तदा हीति ।** आद्यादितन्त्वपकर्षणे हीत्यर्थः । **द्वितन्तुकादीति ।** आद्यतन्तुसंयोगस्य द्वितन्तुकादिपटासम-वायिकारणत्वादिति भावः । **खण्डपटानुत्पत्तौ ।** खण्डपटोत्पत्त्यनभ्युपगमे ।

**नन्वेष विचारो द्व्यणुकेष्वपि समानः । तैरपि बहुभिर्यदि कार्यद्रव्य-मारभ्येत घटादयोऽप्यारभ्येरन् । तथा च आन्तरालिककार्यपरम्परानुपलम्भ-प्रसङ्गः ।**

**अथ तैस्त्रसरेणुरेवारभ्यत इति नियमः । परमाणुभिरपि स एवारभ्यत इति तुल्यम् । विशेषो वक्तव्यः ।**

**उच्यते । यथा हि अवयवावयविप्रसङ्गः परमाणुषु विश्राम्यति, तथा-यमवयवसंख्यापकर्षः क्वचिद् विश्राम्येत । न च त्रित्वमपकर्षकाष्ठा, द्वित्वैकत्वयोः सम्भवात् ।**

**तत्रैकमनारम्भकम् । अवयवसंयोगानुपपत्तौ असमवायिकारणा-भावात् । अनेकसंख्याभावे च अवयवमात्रनिष्ठावयविनोऽवयवापेक्षया-धिकपरिमाणानुपपत्तेः । अवयवापेक्षया च अवयविनोऽधिकपरिमाणत्व-नियमात् । एकस्य च अवयवस्य विभागानुपपत्तौ तत्कार्यस्य विनाशा-सम्भवे नित्यत्वप्रसङ्गादिति ।**

**अथेति** । **तैः** । द्व्यणुकैः । **स एव** । त्रसरेणुरेव । **वक्तव्यः** । वक्तुमुचितः । **यथा हीति** । **अवयवावयविप्रसङ्गः** । अवयवविभागः । अवयवत्वमिति यावत् । **विश्राम्यति** । समवेतत्वानधिकरणवृत्तिर्भवति । वस्तुतस्तु अवयवावयविप्रसङ्गो निखिलावयवावयविपरिमाणवृत्तिमहत्त्वजातिः परमाणुषु (परमापकृष्टमहत्त्वस्य त्रसरेणुमहत्त्वेति वाच्यम् ?) विश्राम्यति परिमाणासमवायिकारणावधिकोत्कर्षानाश्रयपरिमाणासमवायिकारणवृत्तिर्भवतोति सन्दर्भशुद्धोऽर्थः । **तथेति** । **अयमवयवसंख्यापकर्षः** । अयमवयवसंख्यावृत्तिगुणत्वावान्तरजातिविशेषः । संख्यात्वमिति यावत् । **क्वचिद्विश्राम्येतेति** । परिमाणासमवायिकारणावधिकोत्कर्षानाश्रयपरिमाणासमवायिकारणवृत्तीत्यर्थः । उत्कृष्टापकृष्टवृत्तिपरिमाणारम्भकवृत्तिसामान्यत्वादिति हेतुः पूरणीयः ।

दृष्टान्तश्च महत्त्वत्वमेवोत्कर्षापकर्षवाच्यम् । तेन संख्यापरिमाणयोरुत्कर्षापकर्षयोरभावेऽपि न क्षतिः । द्वित्वस्यापि एकत्वावधिकद्वित्वत्वरूपोत्कर्षाश्रयतयाऽव्याप्तिवारणाय अवधिकान्तमुत्कर्षविशेषणम् । तादृशोत्कर्षानाश्रयघटपटादिनिष्ठद्वित्ववृत्तितया सिद्धसाधनवारणाय द्वितीयं कारणान्तं वृत्तिविशेषणम् । एतेन द्वितन्तुकपटाद्यारम्भकावयवनिष्ठद्वित्वमादाय सिद्धसाधनं परमाणुनिष्ठद्वित्वस्य त्रसरेणुनिष्ठमहत्परिमाणजनकत्वमादायार्थान्तरञ्च प्रत्युक्तम् । द्वित्वेतरानेकसंख्याया एव महत्परिमाणजनकत्वनियमेन तत्र परिमाणजनकत्वबाधात् । त्रित्वत्वादिजातौ व्यभिचारवारणाय हेतौ प्रथमवृत्त्यन्तं सामान्यविशेषणम् । नीलत्वपीतत्वादिजातौ व्यभिचारवारणाय द्वितीयं वृत्यन्तं तद्विशेषणम् ।

न चैतेन द्वित्वस्य परिमाणजनकत्वसिद्धावपि द्व्यणुकस्य न सिद्धिरिति वाच्यम्, द्वित्वस्य महत्त्वदीर्घत्वाजनकत्वनियमेन तज्जन्यतयाणुपरिमाणसिद्धौ तदाश्रयतयैव द्व्यणुकसिद्धेः । जन्याणुपरिमाणवत्त्वस्यैव द्व्यणुकत्वरूपत्वादिति भावः ।

ननु परमाणुनिष्ठत्रित्वस्य पूर्वपक्षिणा त्रसरेणुपरिमाणजनकत्वाभ्युपगमात् त्रित्वमादायैव सिद्धसाधनमित्यत आह **न चेति** । **त्रित्वमपकर्षकाष्ठेति** । त्रित्वमपकर्षानधिकरणमित्यर्थः । **द्वित्वैकत्वयोरिति** । त्रित्वावधिकापकर्षवतोरिति शेषः । नन्वेवं द्वित्वस्याप्येकत्वावधिकोत्कर्षवत्त्वाद् बाधः । न च परिमाणासमवायिकारणावधिकत्वविशेषणादेव तन्निरासः, एकत्वस्य परिमाणासमवायिकारणत्वविरहादिति वाच्यम् । यत्र एकावयवमात्रेण द्रव्यमारभ्यते तत्रैव एकत्वस्यापि परिमाणजनकत्वादित्यत आह **तत्रेति** । द्रव्ये इत्यर्थः । **अनारम्भकम्** । न समवायिकारणम् । एकावयवमात्रस्यारम्भकत्वे दूषणान्तरमाह **अनेकेति** । **अवयवमात्रनिष्ठेत्यादि** । नन्वत्रेष्टापत्तिरित्यत आह **अवयवेति** । एकावयवमात्रस्यारम्भकत्वे दूषणान्तरमाह **एकस्य चेति** । **विभागानुपपत्तौ** । **तत्कार्यस्येति** । द्रव्यस्येति शेषः ।

**तथा च द्वित्वमपकर्षपर्यन्तस्तदादिरयमारम्भः । तच्च द्वाभ्यां परमाणुभ्यामारब्धं कार्यं न महत् । तथात्वे तस्य कारणाभावात् । तदपि द्वयणुकं यदि नारभेत, यदि च द्वित्वसंख्यायुक्तमारभेत, उभयथापि तदुत्पादवैयर्थ्यं स्यात् । तस्मात् तेन महद्द्रव्यमारभ्यमाणं बहुत्वसंख्यायोगिनैवेति नियमः ।**

**न च द्वयणुकवत् परमाणवोऽपि बहुत्वमाश्रित्य महत्कार्यमारभन्त इति युक्तम्, अनियमारम्भस्य निषिद्धत्वात् । कारणकारणस्य कार्यकार्यजातीयानारम्भकत्वात् । न हि तन्तवः पटमारभन्ते तत्कारणञ्चांशव इति । तस्माद् विवादाध्यासिताः त्रसरेणवो न निरवयवद्रव्यारब्धाः, सावयवारब्धा इति वा, महत्त्वे सति कार्यत्वात् । उभयवादिसिद्धद्वयणुकारब्धत्रसरेणुवत् । घटवद् वेति । एवं तर्हि द्वयणुकमपि न निरवयवद्रव्यारब्धं सावयवारब्धं वा कार्यद्रव्यत्वात् अनवस्थाप्रतिहतत्वादिति द्वयणुकादिप्रक्रमसिद्धिः पर्यवसिता ।**

**अपकर्षपर्यन्त इति** । परिमाणासमवायिकारणावधिकोत्कर्षासमानाधिकरणापकर्षाश्रय इत्यर्थः । **अयमारम्भः** । परिमाणारम्भः । **तथात्वे तस्येति** । तस्य महत्त्ववत्त्वे इत्यर्थः । **कारणाभावादिति** । अवयवगतद्वित्वेतरानेकसंख्याप्रचयमहत्त्वानामेव महत्त्वकारणत्वादिति भावः । नन्वस्तु द्वयणुकम्, तथापि तस्य त्रसरेण्वारम्भकत्वे मानाभावः । त्रिभिः परमाणुभिरेव तदारम्भसम्भवात् । अस्तु वा तत्साधारणं वारम्भकत्वम् । तथापि द्वाभ्यामेव द्वयणुकाभ्यां तदारम्भोऽस्तु । किं द्वयणुकत्रयाणां तदारम्भकत्वाभ्युपगमेनेत्यत आह **तदपीति । नारभेत** । न त्र्यणुकमारभेत । **यदि चेति** । यदि वेत्यर्थः । **तदुत्पादवैयर्थ्यमिति** । तस्यानारम्भकत्वे वैयर्थ्यं स्फुटमेव । द्वित्वसंख्यायुक्तस्यारम्भकत्वेऽपि वैयर्थ्यम् । महतः कार्यद्रव्यारब्धत्वनियमरक्षणार्थमेव तदभ्युपगमात् । द्वाभ्यां द्वयणुकाभ्यां त्रसरेण्वारम्भे तत्र महत्त्वस्यैवासम्भवेन द्वाभ्यां परमाणुभ्यामेव त्रसरेणोरारम्भस्य सुवचत्वादिति भावः ।

ननु तथापि कदाचित् त्रसरेणुकं द्वयणुकत्रयोपादानकम्, कदाचिच्च परमाणुत्रयोपादानकमित्यत आह **न चेति । महत्कार्यम्** । द्रव्यम् त्रसरेणुलक्षणम् । **अनियमारम्भस्येति** । त्रसरेणोः कस्यचिद् द्वयणुकेन कस्यचिच्च परमाणुनारम्भस्य निषिद्धत्वादित्यर्थः । महतः कार्यद्रव्यारब्धत्वनियमादिति भावः । हेत्वन्तरमाह **कारणकारणस्येति** । कारणकारणजातीयस्येत्यर्थः । **तत्कारणञ्चांशव इति** । चकारोंऽशव इत्यनन्तरं योज्य इति **सम्प्रदायः** । तदसत् । जलाद्यवयविनस्तदवयवानाञ्च जलादिजातीयजन्यतया

कारणकारणजातीयस्येत्यादिनियमस्य व्यभिचारित्वात्। वस्तुतस्तु ननु महतः कार्यस्य कार्यद्रव्यारब्धत्वनियमात् परमाणुभिः साक्षात् त्रसरेण्वारम्भासम्भवेऽपि षड्भिः परमाणुभिर्द्व्यणुकत्रयमारभ्य षड्भिः परमाणुभिर्द्व्यणुकत्रयेण च मिलित्वा त्रसरेणुरारभ्यताम्।

न च न्यूनाधिकदेशवृत्त्योरपि मूर्त्तयोः समानदेशता विरोधात् कथं द्व्यणुकवत् स्वपरमाणुषु त्रसरेणुर्वृत्तिः स्यादिति वाच्यम्, अवयवावयविभावेनोपपन्नयोरेव मूर्त्तयोः समानदेशत्वाविरोधादित्यत आह **कारणकारणस्येति**। अवयवावयवव्यक्तेश्चेत्यर्थः। **कार्यकार्येति**। अवयवसमवेतद्रव्यव्यक्तेः समवायित्वविरहादित्यर्थः। **आरभन्ते**। स्वस्मिन् समवायसम्बन्धेनारभन्ते। **तत्कारणञ्चांशव इति**। चकारो भिन्नक्रमे। तत्कारणमंशवश्च स्वस्मिन् समवायेन पटमारभन्ते इत्यर्थः। **तस्मादिति**। वैकल्पिककारणतावादिनये। द्व्यणुकमात्रारब्धत्रसरेणावंशतः सिद्धसाधनवारणाय विवादाध्यासितं त्रसरेणुविशेषणम्। तच्च द्व्यणुकारब्धत्वेन सन्दिग्धत्वम्। **सावयवेति**। यद्यप्यत्रारम्भकवादिनये सिद्धसाधनम्, तथापि वैकल्पिककारणतावादिना समं विवाद एवेदं साध्यमिति न दोषः। **उभयवादीति**। एतच्च वैकल्पिककारणतावादिना समं विवादे। दृष्टान्तमाह **घटवद्वेति**।

शङ्कते द्व्यणुकाद्यनन्तावयविकल्पने गौरवात्। विप्रतिपत्तिस्तु न तावत् 'द्रव्यं समवेतं न वा', 'द्रव्यत्वं समवेतवृत्तिर्न वा' इत्याकारा। कपालादौ घटादेः स्वरूपसम्बन्धसिद्ध्या अर्थान्तरापत्तेः; किन्तु परमाणुभिन्नास्त्रसरेणवो पृथिवी न वा', पृथिवीत्वं परमाणुभिन्ने त्रसरेणुभिन्ने वा वर्त्तते न वा' इत्याद्याकारा।

यद्वा 'द्रव्यपरमाणुस्त्रसरेणुर्वा न वा' इति विप्रतिपत्तिः। विधिनिषेधयोः पक्षतावच्छेदकावच्छेदकतत्सामानाधिकरण्याभ्यां सिद्धेरुद्देश्यत्वात् न अंशतः सिद्धिबाधौ। वस्तुतः 'स्पर्शवदनुः त्रसरेणुर्नवा' इत्येव सा। तेन निषेधसाधने आत्मादिसिद्ध्या नार्थान्तरत्वम्।

न च परमाण्वादिपुञ्जस्य घटत्वे तस्य नित्यतया 'घटो जातः', 'घटो नष्टः' इत्यादि प्रतीतिः कथं स्यादिति वाच्यम्, आरम्भकत्वेनाभिमतसंयोगविशेषाणां नाशोत्पादयोरेव तद्विषयत्वात्। घटत्वादिकमपि संयोगविशेषवृत्तिः। **नव्यनैयायिकै**रपि सुवर्णत्वादिना साङ्कर्यभीत्या आरम्भकसंयोग एव घटत्वादिजात्यभ्युपगमात्।

'घटो द्रव्यम्', 'घटो रूपवान्' इत्यादि प्रतीतिपरम्परैव यथार्था। अन्यथा **नव्यनैयायिकमतेऽपि** अप्रतीकारात्। एतेन 'तन्तुभ्यः पटः' इत्यादि प्रतीतिरपि समाहिता। संयोगविशेष एव परमाणुपुञ्जात्मकः। तन्तुजन्यत्वस्य तद्विषयत्वात्। अत एव च घटारम्भककपालेन स्थाल्यारम्भाद् घटत्वस्थालीत्वयोः साङ्कर्यापत्तिरपि समाहिता। तयोर्विभिन्नसंयोगवृत्तित्वात्। साङ्कर्येऽपि अखण्डोपाधित्वे बाधकाभावाच्च।

घटादीनां परमाणुपुञ्जत्वाभ्युपगमेऽपि 'स एवायं घटः' इति प्रत्यभिज्ञाया व्यक्त्यभेदविषयकत्वापलापापत्त्या महद्गौरवभीत्या च क्षणिकत्वाभ्युपगमाद् **नास्तिकमताभेदः**। तन्नये परमाणुपुञ्जात्मकत्व-क्षणिकत्वयोरुभयोरेव घटादावभ्युपगमात्।

न च परमाण्वादिपुञ्जातिरिक्तद्रव्यस्य घटादित्वाभावे घटो महान् महत्तर इत्यादि धीः कथं स्यादिति वाच्यम्? संयोगविशेषातिरिक्ते महत्त्वे मानाभावात्। महत्त्वत्वस्य संयोगत्वव्याप्यत्वस्वीकारात्। अस्तु वा संयोगविशेषसहकारेण अणुष्वेव महत्त्वस्य त्रसरेणुषु वा महत्तरतमस्योत्पत्तिः। अखण्ड एव वा सामयिकाव्याप्यवृत्तिरूपाधिविशेषो महत्त्वादिः संयोगविशेषसहकारेण गृह्यते।

न चैवं 'एको घटः' इति प्रतीतिः कथं स्यात्? परमाण्वादीनां तत्संयोगानाञ्च नानात्वादिति वाच्यम्, एको धान्यराशिरितिवत् तदुपपत्तेः।

अथ घटादेः परमाण्वादिपुञ्जरूपत्वे एकदेशधारणेन समस्तस्य धारणमपतनरूपम् एकदेशाकर्षणे चाभिमुखक्रियारूपं कथं स्यात्? तथा च अवयविखण्डननिरासकं द्वितीयाध्यायस्थं न्यायसिद्धान्तसूत्रं 'धारणाकर्षणोपपत्तेश्च' (२।१।३५) इति। अवयविसद्भावे धारणाकर्षणोपपत्तेरिति तदर्थं इति चेन्न, संयोगविशेषस्वाभाव्यादेव तदुपपत्तेः। अन्यथा तवापि एकदेशधारणाकर्षणाभ्यामपरभागीयपरमाण्वादीनां तद्गुणानाञ्च तदयोग्यत्वात्।

अथ प्रत्येकविभक्तानामपि तेषां तद्गुणादीनाञ्च ग्रहणापत्तेः। तथा च अवयविखण्डननिरासकं प्रथमं न्यायसिद्धान्तसूत्रं "सर्वाग्रहणमवयव्यसिद्धेः" (न्या० सू० २।१।३४) इति। अवयविनोऽसिद्धेरभावस्याभ्युपगमे परमाणुपुञ्जाभ्युपगमे च घटगुणादीनां सर्वेषामग्रहणम् अप्रत्यक्षता स्यादिति तदर्थं इति।

मैवम्! परमाण्वादेश्चक्षुराद्ययोग्यत्वे मानाभावात्। द्रव्यारम्भकतावच्छेदकत्वेन तदभ्युपगतसंयोगनिष्ठवैजात्यस्य द्रव्यव्यञ्जकतावच्छेदकत्वाभ्युपगमादेव परस्परविभक्तता-दशायामुक्तरीत्या महत्त्वाभावादेवाप्रत्यक्षत्वमित्याहुः।

तदसत्। तथा सति 'तन्तुसंयोगादेतस्मात् पट उत्पन्नः', 'तन्तुसंयोगनाशादेतस्मात् पटो नष्टः' इत्यादिप्रतीतेरनुपपत्तेरिति दिक्।

वादविच्छेदज्ञानार्थमाह **पर्यवसितेति**। पृथिवीग्रन्थव्याख्या सम्पूर्णेत्यर्थः।

**द्रव्यरहस्ये पृथिवीग्रन्थरहस्यम्।**

**इदानीमिति ।** प्रतिबन्धकीभूतपृथिवीनिरूपणेच्छानिवृत्त्यनन्तरमित्यर्थः । एतेनावसरलक्षणंसङ्गतिः सूचिता । **सामान्यविशेषः ।** जलत्वापरनामा जातिविशेषः । **सर्वं पूर्ववदिति ।** अभिसम्बन्धः पृथिव्यादिव्यावर्त्तत्वेनाभिमतः सम्बन्धः । समवाय इति यावत् । स्वसमवायिसंयुक्तत्वादिलक्षणसम्बन्धस्य पृथिव्यादिसाधारणत्वात् । एवं पञ्चम्यर्थोऽवच्छिन्नत्वमन्वयश्चास्य अप्पदार्थस्याप्पदवाच्यस्यैव वाच्यत्वे । तथा च अप्त्वाभिसम्बन्धावच्छिन्नाप्पदवाच्यतावत्यो रूपादिमत्य इत्यर्थः ।

यद्वा वैशिष्ट्यं पञ्चम्यर्थः । तथा च अप्त्वाभिसम्बन्धविशिष्ट अप इत्यर्थ इति भावः ।

ननु यद्यपि जलं जलमित्यनुगतधर्मप्रकारकसमवायसम्बन्धसंसर्गकानुभवबलाद् जलत्वजातिसिद्धिः । न च स्नेहादिमत्त्वमेव तद्विषयः, तेषामननुगतत्वात् । किञ्च धूमजनकतावच्छेदकतया वा तत्सिद्धिः । संयोगसम्बन्धेन धूमस्यार्द्रेन्धनप्रभववह्नेर्वा उत्पत्तिं प्रति संयोगसम्बन्धेन जलस्य हेतुत्वात् । अत एव करकादावपि तत्सिद्धिः, तत्संयोगेनापि धूमाद्युत्पत्तेः ।

तथापि तस्य परमाण्वादिसाधारण्ये मानाभावः, तत्रानुगतप्रत्ययविरहात्, परमाणुस्नेहादेर्नित्यत्वात् । सामान्यतो जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेनैव समवायिकारणतया स्नेहत्वादेर्जन्यस्नेहत्वादेर्वा समवायिकारणकार्यतावच्छेदकत्वे मानाभावाच्च समवायिकारणविरहेणैवातिप्रसङ्गभङ्गादिति चेत् ।

अत्र **केचित् ।** स्थूलजलेषु जलत्वस्यावश्यकत्वे तदवच्छिन्नं प्रति समवायिकारणतावच्छेदकतयैव परमाण्वादावपि तत् सिद्धिः । समवायिकारणस्य विशिष्यतदवच्छिन्नं प्रति अहेतुत्वे पार्थिवाद्यवयवेऽपि तदुत्पत्त्यापत्तेः । सामान्यतो जन्यद्रव्यत्वावच्छिन्नं प्रति विलक्षणसंयोगत्त्वेनासमवायिकारणतया असमवायिकारणविरहेण अन्यत्र तदनुत्पादस्य वक्तुमशक्यत्वात् । न च जलत्वावच्छिन्नं प्रति पृथिव्यादिसंयोगव्यावृत्तविलक्षणसंयोगत्वेन असमवायिकारणता कल्पनैव लघीयसीति वाच्यम्; संयोगनिष्ठवैजात्यकल्पने तद्व्याप्यस्य तादृशविजातीयसंयोगोपधायकतत्तदवयवक्रियाव्यक्तिजन्यतावच्छेदकगगनादिसंयोगव्यावृत्त-अनन्तवैजात्यस्य तत्तत्क्रियाव्यक्तीनां तत्तद्वैजात्यावच्छिन्नं प्रति अनन्तकारणताकल्पनावश्यकत्वेन तत्रैव गौरवात्, फलमुखगौरवस्यापि दोषत्वात् ।

न च जलत्वावच्छिन्नं प्रति समवायसम्बन्धेन सांसिद्धिकद्रवत्वस्य हेतुत्वादेवान्यत्र एतदनुत्पादसम्भवेन तादात्म्यसम्बन्धेन जलत्वेन कारणत्वे गौरवमिति वाच्यम्, करकादौ व्यभिचारात् । अथ जलत्वावच्छिन्नं प्रति समवायसम्बन्धेन स्नेहत्वेनैव कारणत्वम् । जलत्वस्य तादात्म्यसम्बन्धेन कारणतावच्छेदकतया गौरवात् । जलत्वावच्छिन्नं प्रति जलत्वेन कारणत्वे तस्य परमाणुसाधारण्यावश्यकतया नित्यवृत्ति-

धर्मस्य कार्यतावच्छेदकत्वप्रसङ्गाच्च। नित्यव्यावृत्तधर्मे कार्यतावच्छेदके सम्भवति असति लाघवे तत्साधारणधर्मे कारणत्वकल्पनानुदयात्। स्नेहत्वेन कारणत्वे नित्यव्यावृत्तजलत्वेनैव कार्यत्वसम्भवाद् जलत्वद्वयकल्पने च महागौरवादिति चेत्, न, जलत्वावच्छिन्नं प्रति स्नेहत्वेन कारणत्वं शीतस्पर्शत्वेन वेत्यत्र विनिगमनाविरहात् क्लृप्तकार्यतावच्छेदकजलत्वातिरिक्तजलत्वासिद्धिः। क्लृप्तमादाय च कल्पनीयस्य न विनिगमनाविरहः। न वा अनुद्भूतस्पर्शे मानाभावेन रसनादौ व्यभिचारात् शीतस्पर्शत्वेन कारणत्वसम्भव इति वाच्यम्, पूर्वपक्षिणा परमाण्वादाविव रसनादावपि जलत्वानभ्युपगमात्। तथा सति रसनादौ स्पर्शवत् स्नेहेऽपि मानाभावेन स्नेहत्वेनापि कारणत्वासम्भवाच्च द्रव्यत्वादिवज्जलस्यापि अप्रयोजकत्वेन स्नेहासाधकत्वाद् अनन्तकोटिस्नेहकल्पनामपेक्ष्य जलत्वैकजातिकल्पनाया एव लघुत्वात्।

न च तवापि तज्जनकत्वं जातेर्जलाद्यवयवे वा कल्प्यते। तद्वृत्तिस्नेहस्पर्शयोरित्यत्र विनिगमनाविरह इति वाच्यम्, स्नेहस्पर्शयो रसनादौ सन्दिग्धव्यभिचारित्वेन, जलावयवेष्वेव तत्कल्पनात्। जन्यतावच्छेदकजलत्वमादाय साङ्कर्यापत्त्याऽन्त्यावयविष्वपि तदभ्युपगमः। जलस्यान्त्यावयवित्वविरहाच्च। न च तथापि तज्जातिर्जलावयवेषु कल्प्यते, तन्निष्ठैकत्वादौ वेत्यत्र विनिगमनाभाव इति वाच्यम्, अवयवित्वादिजन्यतावच्छेदकजातिमादाय साङ्कर्यापत्तेरेव विनिगमकत्वादित्याहुः।

तदसत्। तत्तद्व्यक्तिसमवेतसत्त्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन समवायिकारणानां विशिष्य हेतुत्वावश्यकतया तत्र च पार्थिवाद्यवयवे तदुत्पत्तिवारणसम्भवेन जलत्वेन समवायिकारणत्वे मानाभावात्। तत्तद्व्यक्तिसमवेतातिरिक्तस्य जलत्वस्यालीकत्वात्।

**अन्ये तु** उक्तयुक्त्या स्थूलजलेषु जलत्वजातेरावश्यकत्वे तस्य परमाण्वादिसाधारण्याभावेऽपि क्षतिविरहात्। समवायसम्बन्धेन जलत्वस्यैव विभाजकतावच्छेदकत्वसम्भवात्। अन्त्यावयविजलाभावेनाव्याप्तिविरहादित्याहुः।

**अपरे तु** स्थूलजलेषु जलत्वसिद्धौ लाघवात् तदेव जलपदशक्यतावच्छेदकं कल्प्यते। तथा च जलारम्भकपरमाण्वादिष्वपि प्रामाणिकानां जलव्यवहाराज्जलत्वस्य तत्साधारण्यसिद्धिरित्याहुः।

तदसत्। परमाण्वादौ जलव्यवहारस्य लौकिकानामसम्भवात्। तान्त्रिकानां परमाण्वादौ जलव्यवहारस्य स्वस्वपरिभाषया उपगम्यमानस्य शक्त्यसाधकत्वादिति दिक्।

**तासां द्रव्यत्वसिद्धये गुणानाह रूपरसेत्यादि। अत्र प्रमाणं सूचयति एते चेत्यादि पूर्ववत्। यथा सूत्रकारवचनात् पृथिव्यां गन्धादयः सिद्धाः;**

**तथा अप्स्वपि रूपादय इत्यर्थः। तथा च सूत्रम् 'रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च'इति। यथा चाक्षुषवचनात् सप्त संख्यादयः पृथिव्याम्, तथा अप्स्वपि। यथा पतनोपदेशात् पृथिव्यां गुरुत्वम्, तथा जलेऽपि। यथा चोत्तरकर्मवचनात् पृथिव्यां संस्कारः, तथा तोयेऽपि।**

**तासामिति**। अपामित्यर्थः। **पूर्ववदिति** भाष्यग्रन्थः। तद्व्याचष्टे **यथेति**। **चाक्षुषवचनादिति**। "संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायच्चाक्षुषाणि" इति (४।१।१२) सूत्रकारेणाभिधानाद् विनिगमनाविरहेण यथा सप्त संख्यादयः पृथिव्यामित्यर्थः। **यथा पतनोपदेशादिति**। यथा पतनस्य गुरुत्व-जन्यत्वेनाभिधानात् पतनवत्त्वेन पृथिव्यां गुरुत्वमित्यर्थः। **उत्तरकर्मवचनादिति**। कर्मोत्तरमभिघातादिकं विनापि कर्मान्तरवचनादित्यर्थः।

**एवं गुणवत्त्वेन द्रव्यत्वे सिद्धे पृथिव्यादिव्यवच्छेदहेतोर्विशेषानाह शुक्लमधुरशीता एव रूपरसस्पर्शा इति। सहस्रशोऽग्निसंयोगेनाप्यपरावर्त्त-मानमभास्वरशुक्लमेव रूपं अप्सु व्यवस्थाहेतुः।**

**पृथिव्यादिव्यवच्छेदहेतोरिति**। पृथिव्यादितो भेदसिद्धिहेतोरित्यर्थः। ननु शुक्ल-रूपवत्त्वं न अप्त्वव्यवस्थाहेतुः। पार्थिवे च पटादौ तेजसि च व्यभिचारादित्यत आह **सहस्रेति**। **अपरावर्त्तमानम्**। अनुत्पद्यमानम्। अग्निसंयोगोत्पाद्यवृत्तिशुक्लत्वव्याप्य-जातिशून्यमिति यावत्। तेनापाकजशुक्लरूपवति पार्थिवावयविनि नातिव्याप्तिः।

तत्रापि तादृशस्य सलिलादिशुक्लव्यावृत्तपृथिवीशुक्लमात्रवृत्तिजातिविशेषस्य आचार्यभ्युपगतस्य सत्त्वात्। तादृशजातिविशेषस्य आचार्यैरनभ्युपगमे तदीयविशेष-गुणलक्षणस्य पृथिवीशुक्लेऽव्याप्त्यापत्तिरिति **गुणदीधितौ** विशेषगुणलक्षणे स्फुटम्। (शुक्लमेवेत्येवकारार्थो यथा भाष्येण विवक्षितः?) वस्तुतस्तु शुक्लेतररूपासमानाधि-करणाभास्वररूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमित्येव सन्दर्भशुद्धो भाष्यार्थः। शुक्लपदस्याभास्वरशुक्लरूपपरत्वादिति ध्येयम्।

**न हि पार्थिवे स्फटिकादौ वर्त्तमानं शुक्लमपि रूपमग्निसंयोगान्न परावर्त्तते। अपरावृत्तमपि तेजसि भास्वरम्। तस्मादनेन विशेषेण रूप-मस्तु व्यवस्थाहेतुः। एष च विशेषः पृथिवीरूपस्य पाकजत्वदर्शनेन तेजो-रूपस्य भास्वरत्वख्यापनेन सूचितम्। उक्तयुक्तेरेव जलादिरूपस्यापाकज-त्वम्। पार्थिवा एव हि दृष्टभागाः क्वाथेन पच्यन्ते।**

विवक्षितेऽतिव्याप्त्यभावं स्फुटयति **न हीति**। **अग्निसंयोगान्न परावर्त्तत इति**। अग्निसंयोगजन्यवृत्तिशुक्लत्वव्याप्यजातिशून्यमित्यर्थः। **अपरावृत्तमपि**। तादृशजाति-

शून्यमपि । **तेजसीति** । रूपमिति शेषः । **अनेन विशेषेणेति** । तादृशजातिशून्यत्वेनाभास्वरत्वेन च विशेषणेन विशिष्टं शुक्लं रूपमित्यर्थः । **पृथिवीरूपस्य** । पृथिवीरूपस्यैव । **तेजोरूपस्य** । तेजोरूपस्यैव । **भास्वरत्वख्यापनेनेति** । अग्रे तेजोग्रन्थे भास्वरत्वख्यापनेनेत्यर्थः । **उक्तयुक्तेरेवेति** । पाकानन्तरं पृथिवीवत् पूर्वरूपविलक्षणरूपानुपलब्ध्या मानाभावेनेत्यर्थः । नन्वेवं दशमूलीकषायादेः पाकानन्तरमारुण्यादिकथमुपलभ्यत इत्यत आह **पार्थिवा एवेति** । **क्वाथेन** अग्निसंयोगेन । **पच्यन्ते** । पाकजरूपादिमन्तः क्रियन्ते ।

ननु तादृशविशेषद्वयविशिष्टशुक्लरूपवत्त्वं कथम् अप्त्वव्यवस्थाहेतुः । कालिन्दीजलादौ नीलादेरेवोपलम्भेन भागासिद्धत्वात् । न च कालिन्दीजलादौ नीलाद्युपलब्धिर्भ्रान्ता परम्परासम्बन्धविषयिका वेति वाच्यम्, बाधकाभावात् । अन्यथा धर्मधर्मिभावमात्रविलोपापत्तेः । न च नीलत्वाद्यवच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणत्वेऽपि सकलपृथिव्यां नीलाद्यनुत्पादवज्जलत्वेन समवायिकारणत्वेऽपि सर्वत्र जले नीलाद्यनुत्पादसम्भवात्, नीलत्वादेः समवायिकारणजन्यतावच्छेदकत्वे मानाभावाच्च ।

असमवायिकारणेनैवातिप्रसङ्गभङ्गात् कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमस्य विशेषकारणात् तदवच्छिन्नोत्पत्तिनियमासम्भव एवाभ्युपगमात् ।

एतेन शुष्कमसीगुडकादौ विनापि जलसम्बन्धं नीलाद्युपलम्भात् तत्र तस्य स्वाभाविकत्वसिद्धौ जलत्वे न समवायिकारणत्वसम्भवो व्यभिचारात् । जले तु पृथिवीसम्बन्धं विना न क्वापि नीलाद्युपलम्भो येन जलेऽपि क्वचित्तस्य स्वाभाविकत्वनिश्चये पृथिवीत्वेन समवायिकारणत्वेऽपि व्यभिचारः स्यादिति निरस्तम् । नीलत्वादेः समवायिकारणजन्यतावच्छेदकत्वे मानाभावात् ।

न च वियति विक्षिप्तानां तेषामेव कालिन्दीजलादीनां धवलिममात्रप्रतीतिरेव बाधिकेति वाच्यम्, तत्प्रतीतिरेव परम्परासम्बन्धेन तेजोरूपविषयिका । तेजोरूपस्य भ्रमरूपा वेत्यस्य सुवचत्वात् । विनिगमकाभावादिति चेत्, न ।

अस्ति हि कालिन्दीजलादौ शुक्लप्रत्ययो नीलादिप्रत्ययश्च । न चानयोर्द्वयोरेव समवायसम्बन्धेन प्रमात्वम्, विरोधात् । किन्त्वेकस्य तत्र प्रमात्वे कल्प्यमाने गौरवादिरूपबाधकाभावात् शुक्लप्रत्ययस्यैव तथात्वं कल्प्यते, न नीलिमादिप्रत्ययस्य । सकलनैयायिकस्य वैशेषिकसिद्धान्तानुमितश्रुत्या ( ? ) शुक्लस्यैव रूपस्य जले बोधनादिति निगर्वः ।

**एतेन रसो व्याख्यातः । न हि पार्थिवक्षीरशर्करादौ वर्त्तमानपि माधुर्यं पाकेन न व्यावर्त्तते । इह तु सहस्रशः पच्यमानानामपि माधुर्यमेव । ईषत्स्वभावस्तु तदपि तथैव । यः पुनरम्बुसिन्धुभेदेन क्षारादिरसः पाथस**

**उपलभ्यते, स दशमूलीकषायस्येव पार्थिवद्रव्योपाधिकः। कथमन्यथा तस्यैव घनपीतमुक्तस्य मधुर एव रसः। एवमपां स्पर्शः शीत एव। क्वचित्तु सन्नपि तेजःस्पर्शाभिभवान्नोपलभ्यते। तदपगमे पुनरुपलब्धेरिति। तदेभिर्विशेषैः रूपरसस्पर्शा अप्त्वव्यवस्थापका इत्युक्तम्।**

**व्याख्यात इति।** अपाकजत्वेन व्याख्यात इत्यर्थः। **ईषत्स्वभावस्त्विति।** अणुत्वेन स्वभावस्त्वित्यर्थः। तथा च पाकजवृत्तिमधुरत्वव्याप्यजातिशून्यमधुरत्वं जलत्वव्यवस्थापकम्। पृथिवीरसजलरसोभयसाधारणमधुरत्वव्याप्यजातौ मानाभावान्नासिद्धिः। पृथिवीमधुररसे चोत्कर्षापकर्षरूपतादृशजातिसत्त्वान्नातिव्याप्तिः। न च जलस्य रसवत्त्वे मानाभाव इति वाच्यम्, पृथिवीवत् तत्रापि रसस्य प्रत्यक्षसिद्धत्वात्। यत्र च न तत्प्रत्यक्षं तत्रापि जलत्वेन तदनुमानात्।

न च तथापि जलरसस्य मधुरत्वे मानाभाव इति वाच्यम्, कषायद्रव्यभक्षणानन्तरं जलरसे मधुरत्वोपलम्भात्। कषायद्रव्यरसनसंयोगस्य जलरसमधुरत्वव्यञ्जकत्वात्। अथैवं कर्कटीभक्षणानन्तरं तिक्तत्वोपलम्भात् तिक्त एव कथं न स्यात्? न च कर्कट्यास्तिक्तरस एव तद्विषयकगुणविरोधेन कर्कट्या हरीतकीवन्नीरसत्वसिद्धान्तादरे तु तदवयवतिक्तरस एतद्विषय इति वाच्यम्, सर्वावयवमधुरकर्कटीभक्षणानन्तरमपि तिक्तत्वोपलब्धेरिति चेन्न। कर्कटीभक्षणेन जिह्वाग्रतिक्तरसवतः पित्तद्रव्यस्य बहिर्निष्कासनं क्रियते इति वैद्यकादवगमात्। तदीयरसविषयकत्वेनैव तदुपपत्त्या कर्कटीरसनसंयोगस्य तद्व्यञ्जकत्वकल्पने गौरवादिति भावः।

ननु तथाप्यम्बुसिन्धुविशेषस्य जलेऽव्याप्तिस्तत्र क्षारादिरसस्यैवोपलम्भादित्यत आह **यः पुनरिति। अम्बुसिन्धुभेदेनेति।** अम्बुसिन्धुविशेषस्येत्यर्थः। **दशमूलीति।** दशमूलीकषायरस इवेत्यर्थः। तद्वृत्तितयोपलभ्यमानत्वं षष्ठ्यर्थः। **पार्थिवद्रव्योपाधिकः।** पार्थिवद्रव्यवृत्तिः। **तस्येवेति।** सिन्धुविशेषजलस्येति शेषः। **मधुर एव रस इति।** एकस्मिन्नेव जले रसद्वयासम्भवात्।

न च स एव पार्थिवद्रव्यवृत्तिपरम्परासम्बन्धेन तत्रोपलभ्यत इति वाच्यम्, तदानीं तत्र मधुरपृथिवीसम्बन्धाभावात्। तत्कल्पने च गौरवादिति भावः। एतच्चापाततः। तावता कुत्रचिज्जले मधुरसिद्धावपि यत्र जले केवलकषायादेरेवोपलब्धिर्न तु कदाचिदपि माधुर्योपलब्धिस्तत्र कषायादिरसवत्त्वे बाधकाभावात्।

वस्तुतस्तु न्यायवैशेषिकसिद्धानुमितश्रुतिरेव जलस्य मधुररसमात्रवत्त्वे मानमिति ध्येयम्।

**तदिति।** तथा चेत्यर्थः। ननु शीतस्पर्शवत्त्वं कथमप्त्वव्यवस्थापकम्। श्रीखण्डे पार्थिवेऽपि शैत्यानुभवात्। न च घर्षकजलस्यैव तत् शैत्यम्, तदसम्बन्धे तदननुभवा-

दिति वाच्यम्, जलशैत्योत्कृष्टशैत्यानुभवात् । न च श्रीखण्डचूर्णसम्बन्धेन घर्षकजलादिनिष्ठशैत्यस्योत्कर्षो व्यज्यत इति वाच्यम्, कल्पनागौरवप्रसङ्गादिति चेत् न, श्रीखण्डान्तर्वर्तिजलस्यैव घर्षणाद् बहिर्भूतस्य शैत्यानुभवात् । अन्यथा घर्षणं विनापि श्रीखण्डे शैत्यानुभवापत्तेः । शीतस्पर्शो जलस्यैव धर्म इत्यागमविरोधापत्तेश्चेति भावः ।

**स्नेहस्तु स्वरूपत एवेत्यत आह स्नेहोऽम्भस्येवेति । इह केचिदाहुः, न स्नेहो जलधर्मः, तैलादिवज्जलेऽनुपलब्धेः । नापि पृथिव्या विशेषगुणः, सर्वपृथिव्यव्यापकत्वात् । तस्मात् पार्थिवविशेषेषु घृततैलवसासूपलभ्यमानः सामान्यविशेषोऽयम् । गव्यमाहिषादिषु दधित्ववदिति । तदसत् । स्निग्धस्निग्धतरस्निग्धतमादिभेदेन सातिशयत्वात् । न च गोमहिष्यादिषु गुणमनाश्रित्य तारतम्यमस्ति । नहि ईषन्मधुरातिमधुरादिवद् ईषद्गौरतिशयेन गौरिति भवति । तस्मादतिशयस्य गुणैकनियतत्वात् सामान्यविशेषतया च सामान्येऽसम्भवाद् गुण एव स्नेहः । किञ्च स्निग्धद्रव्यस्यावयवपरम्पराया अपि स्निग्धत्वाद् आ परमाणुस्नेहः स्यात् । न च परमाणुषु पृथिवीत्वादेरन्या अपरजातिरस्ति, व्यवस्थापकाभावात् । क्षीरत्वादिवद् भविष्यतीति चेन्न । तस्यापि परमाणुष्वभावात् । पाकजरूपरसस्पर्शव्यङ्ग्यं क्षीरत्वादि । तथा च पाकान्तरेण तन्निवृत्तौ क्षीरत्वादेर्निवृत्तिप्रसङ्गात् ।**

**स्वरूपत एवेति** । स्नेहत्वेनैवेत्यर्थः । अप्त्वव्यवस्थापक इति वचनविपरिणामेन सम्बध्यते । **सर्वेति** । पृथिवीनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकगुणत्वव्याप्यजातिरहितत्वादित्यर्थः । यथाश्रुते घटरूपादावेव प्रत्येकं पृथिव्यव्यापकतया व्यभिचारापत्तेः । साध्ये पृथिवीपदं ज्ञानादौ व्यभिचारवारणाय । विशेषपदञ्च नैमित्तिकद्रवत्वे व्यभिचारवारणाय ।

न च तथापि गन्धरसयोर्व्यभिचारः । विजातीयनानागन्धरसवदवयवारब्धस्य पार्थिवस्य निर्गन्धत्वनीरसत्वोपगमादिति वाच्यम्, तत्रापि अव्याप्यवृत्तिर्वा नानागन्धादिरूपेयत इति मतेनैव तदभिधानात् ।

यद्वा सर्वपृथिव्यव्यापकत्वादित्यस्य घटवृत्तिगुणव्याप्यजातिमत्त्वाभावादित्यर्थ इति न काप्यनुपपत्तिः । **सामान्यविशेषः** । अपरजातिविशेषः । **स्निग्धतरस्निग्धतमादिभेदेनेति** । गव्यमाहिषादिषु (दधिषु) स्निग्धतरस्निग्धतमादिरूपातिशयप्रत्ययेनेत्यर्थः । **सातिशयत्वादिति** । स्नेहस्य सातिशयत्वादित्यर्थः । अतिशयस्य च जातिरूपतया जातावसम्भवादिति भावः । न च गव्यमाहिषादिषु स्निग्धतरस्निग्धतमादिप्रत्ययेन गोमहिष्यादिसमवेत एवातिशयो विषयीक्रियते, न तु स्नेहनिष्ठ इत्यत आह

**न चेति । गुणमनाश्रित्येति** । गुणे समवायसम्बन्धेनास्तीत्यर्थः । **मधुरातिमधुरवदिति** । तत्प्रत्ययवदित्यर्थः । **गौरिति भवतीति** । प्रत्ययो भवतीत्यर्थः ।

तथा च गोमहिषादिषु स्वसमवायित्वलक्षणपरम्परासम्बन्धेनैव तारतम्यं वर्त्तते । न तु समवायसम्बन्धेन । तरतमप्रत्ययार्थोऽपि स्वसमवायीभूतप्रकृत्यर्थता-वच्छेदकाश्रयत्वलक्षणपरम्परासम्बन्धेनैव प्रकृत्यर्थेऽन्वेति । न तु समवायसम्बन्धेन । तथैव उत्पत्तेः ( व्युत्पत्तेः ) गोतरगोतम इत्याद्यप्रयोगात् । तारतर-तारतम इत्यादिकन्तु प्रकृत्यन्तरं तरतमप्रत्यय इति भावः ।

**गुणैकनियतत्वादिति** । गुणकर्ममात्रवृत्तित्वादित्यर्थः । गुणपदस्य कर्मणोऽप्युप-लक्षकत्वात् । **स्निग्धद्रव्यस्येति** । स्निग्धत्वाख्यजातिविशेषविशिष्टद्रव्यस्येत्यर्थः । **अवयवपरम्पराया अपि स्निग्धत्वादिति** । अवयवपरम्पराया अपि स्निग्धत्वस्यावश्यक-त्वादित्यर्थः । स्निग्धं क्वचित् समवायसम्बन्धेन जायते, क्वचिन्नेत्यत्र नियामकानुरोधेन स्निग्धत्वेन कार्यकारणभावस्यावश्यकत्वादिति भावः । **पृथिवीत्वादेरन्या** । पृथिवीत्वा-दिरूपाया द्रव्यत्वसाक्षाद्व्याप्यजातेरन्येत्यर्थः । **अपरा** । द्रव्यत्वव्याप्या । **व्यवस्थापका-भावादिति** । प्रमाणाभावादित्यर्थः । **क्षीरत्वादिवदिति** । यथा क्षीरत्वादिकं द्रव्यत्वस्य साक्षाद्व्याप्यमपि परमाणुवृत्तिः, तथैव स्निग्धत्वाख्यजातिरपि द्रव्यत्वस्य साक्षाद्-व्याप्यापि परमाणुवृत्तिर्भविष्यतीत्यर्थः । आदिपदाद् दधित्वादिपरिग्रहः ।

क्षीरत्वादेः परमाणावभावे हेतुमाह **पाकजेति** । पाकप्रयोज्येत्यर्थः । तेनावयविनि पाकानभ्युपगमेऽपि नासङ्गतिः । **तन्निवृत्ताविति** । परमाणौ व्यञ्जकतावच्छेद-कावच्छिन्नपाकजरूपविशेषादिनिवृत्तिदशायामित्यर्थः । **क्षीरत्वादेर्निवृत्तिप्रसङ्गादिति** । तदवच्छेदेन क्षीरत्वादेः कालिकविशेषणतावच्छिन्नात्यन्ताभाववत्त्वप्रसङ्गादित्यर्थः । यदवच्छेदेन यस्य स्थितिक्षणे व्यञ्जकतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्तद-वच्छेदेन तस्य स्थितिक्षणे व्यङ्ग्यजात्यभाव इति नियमात् । अवयविमात्रवृत्तित्वाभ्यु-पगमे तु नायं दोषः । अवयविनः स्थितिक्षणे तदवच्छेदेन तन्निष्ठरूपविशेषादेरनिवृत्तेः । पिठरपाकस्य निराकर्त्तव्यत्वादिति भावः । अत्र क्षीरावयविन उत्पत्तिक्षणे तस्य प्रागभावध्वंसक्षणे च तत्तदवच्छेदेन तन्निष्ठरूपविशेषादेर्निवृत्तावपि तदवच्छेदेन क्षीरत्वादेरनिवृत्त्या व्यभिचारवारणाय यदेति, यस्य स्थितिक्षण इत्युक्तम् । क्षणस्य स्थितित्वञ्च उत्पत्त्यतिरिक्तकालिकविशेषणतासम्बन्धेनाधिकरणत्वमिति ध्येयम् ।

**न च सत्यां व्यक्तौ सामान्यनिवृत्तिरिष्यते । न चाविवक्षितसत्त्वाकाः सम्भवमात्रेण ते तस्याभिव्यञ्जकाः । सर्वपार्थिवपरमाणूनां क्षीरत्वापत्तौ तदारब्धसर्वकार्यस्य पृथिवीत्ववत् क्षीरत्वापत्तेः । द्व्यणुकादौ क्षीरत्ववद् भविष्यतीति चेन्न । तदारम्भकेषु परमाणुषु तद्व्यवस्थाहेतोः क्षीरत्ववद्**

गुणविशेषस्याभावात्। भावे वा स एव स्नेहः। न ह्यत्र रूपादयो व्यवस्थाहेतवः। न च तद्विशेषाः। तेषां घृतत्वादिव्यवस्थापकत्वात्। न च कारणसामान्यमस्ति। तैलघृतवसानां बीजक्षीरमांसयोनित्वात्। अत एव नारिकेलस्नेहस्यापि तैलत्वम्। रसादिसारूप्यात्तु घृतमिति व्यपदेशः। तस्मात् परमाणुषु वर्त्तमानः कारणगुणप्रक्रमेणान्त्यावयवि-पर्यन्तमायातो गुणविशेषः स्नेह इति युक्तम्। न च घृतादिष्वेव स्नेहो-पलब्धिः। सातिशयो हि स्नेहस्तत्रोपलभ्यते। गुरुत्वमिव सुवर्णे।

वस्तुतस्तु जलसाधारणी स्निग्धता। अन्यथा जलावसेकेन सक्तुसिक-तादीनां संग्रहो न स्यात्। स हि स्नेहद्रवत्वकारितः संयोगविशेषो धारणा-कर्षण हेतुः। न चासौ केवलद्रवत्वहेतुकः, काचकाञ्चनादिभिरतिद्रवीभूतैरपि बालुकाद्यसंग्रहात्।

ननु पाकेन परमाणौ रूपनाशदशायां परमाण्ववच्छेदेन क्षीरत्वादेर्निवृत्तेरिष्टा-पत्तिस्त्वयापि तदभ्युपगमादित्यत आह **न चेति**। स्वस्मिन्नाधेयतासम्बन्धेन विद्यमानायां व्यक्तौ केनापीष्यत इत्यर्थः। **अविवक्षितेति**। यावत्कालं स्वाश्रयीभूतः परमाणुस्तावत्कालं तदवच्छेदेन अवर्त्तमानाऽपीत्यर्थः। **सम्भवमात्रेण ते**। पाकजरूपविशेषादयः। **तस्य**। परमाणुनिष्ठक्षीरत्वस्य। **अभिव्यञ्जकाः**। अभिव्यञ्जनस्वरूपयोग्याः। न चैवमुक्त-नियमवलात् पाकेन परमाणौ रूपादिनिवृत्तिदशायां तदवच्छेदेन तन्निष्ठक्षीरत्वादेर्निवृत्ति-प्रसङ्ग इति वाच्यम्। सर्वसाधारणतयोक्तनियमस्यासिद्धेः। यत्तद······( अत्र ग्रन्थो विच्छिन्नः ) इति।

॥ इति महामहोपाध्यायश्रीमथुरानाथतर्कवागीशविरचितं
किरणावलीरहस्ये द्रव्यरहस्यं यावदुपलब्धं सम्पन्नम्॥

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि

| क्रमसंख्या | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | शुक्लयजुर्वेदकाण्वसंहिता— | [ उत्तरविंशतिः ] संहितेयं सायणभाष्यसहिता प्रकाशिता। सम्पादकः—श्रीचिन्तामणिमिश्रशर्मा— | २२-०० |
| २. | वाक्यपदीयम्— | [ तृतीयकाण्डस्य द्वितीयो भागः ] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया 'अम्बाकर्त्री' टीकया च विभूष्य प्रकाशितम्— | १०७-०० |
| ३. | महाभाष्यनिगूढाकूतयः— | अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च—डॉ० देवस्वरूपमिश्रः— | २६-८० |
| ४. | व्याकरणदर्शनप्रतिमा— | आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं विवेचनं कृतमस्ति-— | ३६-६० |
| ५. | बौधायनशुल्बसूत्रम्— | ग्रन्थोऽयं श्रीव्येंकटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीतबौधायनशुल्बसूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैः सवादात्मकैः रेखाचित्रैश्च सनाथीकृतः— | ७५-०० |
| ६. | तन्त्ररत्नम्— | [ पञ्चमभागः ] पार्थसारथिमिश्रविरचितः टुप्टीकासनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रिविरचिततात्त्विकया भूमिकया सनाथितो विराजते— | ४६-६० |
| ७. | तन्त्रसङ्ग्रहः— | [तृतीयो भागः] तन्त्रशास्त्रस्य विविधतन्त्रसङ्ग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैः भूमिका-टिप्पण-परिशिष्टैश्च समुल्लसति— | ९२-२० |
| ८ | योगिनीहृदयम्— | [ तृतीयसंस्करणम् ] तन्त्रशास्त्रीयोऽयं ग्रन्थः अम्बिकानन्दयोगिकृतदीपिकाख्यया, भास्कररायकृतसेतुबन्धव्याख्यानाख्यया च टीकया समलङ्कृत्य प्रकाशितः— | ३३-४० |
| ९. | रुद्रयामलम्— | तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेपणापूर्णैः भूमिका-टिप्पण-परिशिष्टादिभिः विभूष्य प्रकाशितम्— | ६४ ०० |
| १०. | यन्त्रराजविचारविंशाध्यायी— | आचार्यनयनसुखोपाध्यायविरचितेऽस्मिन् ग्रन्थे ज्योतिषशास्त्रीयोपयोगिनां वेधादियन्त्राणां खलु सैद्धान्तिकं प्रायोगिकञ्च विवेचनं कृतं वर्तते— | ११-०० |
| ११. | पुराणेतिहासयोः साङ्ख्ययोगदर्शनविमर्शः— | अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च साङ्ख्य-योगपदार्था विवेचिताः— | ३२-८० |
| १२ | भारतीयविचारदर्शनम्— | [ द्वितीयो भागः ] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथत्रिपाठिना भारतीयविचाराचाराणाम् ऐतिहासिकं तुलावोधकञ्च विवेचनं कृतम्— | १०५-६० |
| १३. | पालित्रिपिटकसद्दानुक्कमणिका— | पालित्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽस्मिन् ग्रन्थे कृतो वर्तते— | १००-६० |

प्रकाशकः निर्देशकः, अनुसंधानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२
मुद्रकः—मुद्रणालयव्यवस्थापकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२